सा चासम्पूर्णा नीलिकाऽनेन लक्षणेन ज्ञातव्या —

असजाता हि विषमा दधिमस्तुतनुश्च सा ।
शलाकयाऽवघृष्टापि पुनरूर्ध्वं प्रपद्यते ॥
करोति वेदनां तीव्रां दृष्टिं च स्थगयेत् पुनः

असजाता असम्पूर्णा सा नीलिका विषमत्वादिरूपा भवति । विषमा कचिन्नन्वी कचित्समा । दधिमस्तुवत्तनुरघना । नेत्रच्छिद्रप्रविष्टया कुरवकमुखया शलाकयाऽवघृष्टापि पुनरप्यूर्ध्वं नेत्रस्य प्रपद्यते । सुबोधम् । [ अन्ये तु "असजातो हि विषमो दधिमस्तुनिभस्तनुः । शलाकयाऽवघृष्टोऽपि पुनरूर्ध्वं प्रपद्यते" इति पाठः । व्याख्या । असजातोऽसम्पूर्णः विषमो विषमसंस्थानः । अन्तःस्थितमलस्याऽसम्पूर्णतया कुत्रचित् सूक्ष्मत्वात् कुत्रचिन्निबिडत्वाच्च यद्दृष्टिनिम्नोन्नतत्वयुक्तः । दधिमस्तुनिभः दधिनिभो मस्तुनिभो वा । कदाचिद्दधिनिभः कदाचिन्मस्तुनिभ इति केचित् । तनुरघनः । शलाकया अवघृष्टोऽपि दृष्टिमण्डलान्नासां प्रति निर्लिखितोऽपि पुनरप्यूर्ध्वं प्रपद्यते । तीव्रां रुजं च करोति । पुनरवघर्षणादनन्तरं दृष्टिं दृष्टिमण्डलं स्थगयेदाच्छादयेत् ॥ ]

सा च सम्पूर्यते शीघ्रं श्लेष्मलैर्वातपित्तलैः ।
चिरात्सोपद्रवा चस्यात्तिच्छेद्यात्त्वर्हतिव्यधम्

सा चासम्पूर्णा नीलिका श्लेष्मलैराहारैराशु सम्पूर्यते वातपित्तलैः पुनश्चिरात् सम्पूर्यते आवर्तकयाद्युपद्रवयुक्ता च स्यात् । या तु निश्चेष्टया परिपूर्णत्वेनाविज्ञातसमया सा व्यधमर्हति । [ शीघ्राच्छादने चिराच्छादने च हेतुमाह— श्लेष्मलैरित्यादि । स असम्पूर्णविद्धो लिङ्गनाशः श्लेष्मले श्लेष्मवर्धनैराहारादिभिराश्वचिरात् पूर्णतां प्राप्नोति । अन्यैरश्लेष्मलैराहारैः सोपद्रवः उपद्रवैरावर्तकयादिभिः सहितश्चिरेण कालेन पूर्णो भवति । ]

अथ स्निग्धस्य विरिक्तस्य घृते सम्भोजितस्य निशि रसेन प्रीणितोत्तमाङ्गस्याभुक्तवतः सज्जोपकरणस्य विमलेऽहनि साधके च कृतस्वस्त्ययनस्य विहितादित्यविदेहाधिपतिप्रणामस्य पूर्वाह्णे निरातपकाशदेशस्थस्य प्रत्यादित्यमास्तरणेन लब्धमार्दवायां भूमौ प्रसारितचरणयुग्ममुपविष्टस्य क्षितितलगतसमतलाभयपाणेः पृष्ठतः सुखोपविष्टेन परिचारकेण हस्ताभ्यां निश्चलमवलम्बितशिरसः किञ्चिदुत्तानस्यस्य स्वां नासामितरचक्षुषणमीक्षमाणस्यातुरस्य जङ्घयोरुपरिष्टाज्जात्यच्छिद्रूतासननिविष्टो भिषग् दक्षिणहस्ताङ्गुलोमयासि मुखनाप्याच्चिम निमीलितमीषद्गुष्ठोदरविमृदिततारकतया परिप्लुतदोषं सव्यागुष्ठप्रदेशिनीभ्यामुन्मील्य दक्षिणमध्यमाप्रदेशिन्यङ्गुष्ठनिष्कम्प गृहीतया शलाकया कृष्णभागाद्भागद्वयस्यापाङ्गादेकभागस्य च सङ्गमे दृष्टेरर्जवं नात्यूर्ध्वमधो वा नेत्रसहजन्मनि सन्धौ विध्येत् ॥

अथेत्यादिना लिङ्गनाशे शस्त्रकर्मविधानम् । रसेन मांसरसेन प्रीणितं तर्पितं उत्त

दिनात्तमाङ्ग यस्य स तथोक्तः । उपकरणानि सतुपयोगीनि । विदेहाधिपतिर्जितको राजा । प्रत्यादित्यमादित्याभिमुखम् । आस्तरणेन कुथा दिना लब्धमान्वा या भूमिस्तस्या प्रसारितच रणयुग्मो योऽसङ्कुचितजानुरुपविष्ट । क्षिति-सङ्गतौ समतलौ द्वौ पार्ष्णी यस्य । हस्तस्या न्तर्भागस्तल । इतरदत् प्रयुज्यमानकर्म ईक्षण तस्माद् द्वितीयम् । ईक्षण नेत्रम् । यथोपविष्टे न प्रसारितमातुरेण जानुयुग्म तन्मध्ये कृत्वा कर्मयोरनैकल्येन वैद्यस्यासनमातुरजङ्घयो रुपर्यीन्नयेन कर्मसौकर्यापेक्षं योग्यम् । मुच्य चाल्पो वैद्यमुखोद्भव । सव्यो वाम. । प्रदे-शिन्यङ्गुष्ठनिकट ङ्गुली । सहजन्मनि सन्धौ स्वाभाविके छिद्रे । इति दक्षिणहस्तेन व्यध सव्यनेत्रे ॥

एवमेव दक्षिण दक्षिणाङ्गुष्ठप्रदेशिन्यु-न्मीलितमितरेण करेणैव चातुरस्य दक्षिण-पार्श्वे स्थित्वा ॥

एवमेव हस्तकर्मवैपरीत्येनातुरस्य दक्षि-ण नेत्र विध्येत ॥

अथ शब्दमदवेदन साम्बुविन्दुस्रुति च सम्यग्विद्ध विद्यात् । प्रविष्टमात्रां च श लाकां धारयेत् । रागाश्रुवेदनानुत्पादनार्थ च स्तन्येन सेचयेत् । तत पुनरातुरमा श्वास्य भ्रमयन् शलाकामा दृष्टिमध्यात् प्रवे-शयेत् ॥

अथेति । शब्दवदित्यादि सम्यग्विद्धल क्षणम् । सुबोधम् । शलाकायामन्तस्थितायां मेव स्तन्येन सेक । आ दृष्टिमध्याद् दृष्टिम-ध्य यावत् ॥

अथशास्यावलोकयतो लिङ्गनाशमङ्गु तमविलम्बितमनुसुखमधोमुखमपनयेदुच्छिङ्घ् खयेच्चैनम् । तथा हि ह्रू सस्तकफस्य विशु यति । विशुद्धदृष्टेश्चाङ्गुलिं तन्तून् शा तीन् सन्तताँश्च दर्शयेत् । प्रेक्षमाणस्य चा निमीलिताक्षेलास्तनै शनै भ्रमयन्नेव श लाकामपकर्षेत् । अथ व्यपगतदोपस्य य थावत् पश्यत, सुखोष्णघृताप्लुत पिचुमीक्ष णस्योपरि दत्वा बध्नीयात् । ततो निवात मगारमनुप्रवेश्य संवेश्य च सोपधाने मृदु शयने शयान दक्षिणेऽक्षिणि विद्धे वामेन पार्श्वेन वामे दक्षिणेनोभयस्मिन्नुत्तानमनुकू लाभि कथाभिरुपाचरेत् । यथाशक्ति चै नमुपवासयेत् । उद्गारक्षवथुकासनिष्ठीवनो त्क्षेपणानि त्र्यह परिहरेत् । स्नानाम्बुपा नदन्तधावनाधोमुखावस्थानानि सप्ताहम् ॥

असेलातुरस्याधोभूमिदेशमक्षिमाणस्य नेत्राल्लिङ्गनाशमधोमुख नेत्रस्याधोभागे अपन येदाकर्षेत् । तथाहीत्युच्छिङ्घनेन स्रस्तकफ त्वाद् दृग्विशुध्यति । शेष व्याख्यानम् । पिचु कार्पासपुञ्जकम् । स्नानादीनि सप्ताह प रिहरेदिति सम्बन्धः ॥

स्नेहविधिं चेक्षेत । मूर्ध्नि पादयोश्च घृताभ्यङ्गमाचरेत् । तृतीये चाह्नि मुक्त्वा क्षि, परिषेचयेदेरण्डपल्लवमूलेन दुग्धोष्णेव

दुग्धेन । जीवनीयैर्वा सिद्धेन पयसा हविषा वा । तद्वल्लघुना पञ्चमूलेन । ततः पूर्ववद् भुञ्जीयात् ॥

स्नेहविधिं चेक्षेत तदुक्ताचारविधानाय । दुग्धोष्ण धारोष्णमेव यदेरण्डपल्लवशृत दुग्ध क्षीरं तेन सेचयेत् । अथवा जीवनीयाख्यैः सिद्धेन क्षीरेण वा घृतेन वा सेचयेत् । तद्वदिति पयसा हविषा वा लघुपञ्चमूलसिद्धेन । पूर्ववदित्यर्मादिविधानेन ॥

ततः प्रभृत्येवमेव प्रत्यहमासप्ताहम् । सप्तमे तु दिवसे सर्वथा मोक्षयेत् । दशमे वा । भोजयेच्चैन व्योषामलकयुक्त ग्रवमीषत्स्नेहलवण वाऽन्यमुष्णोदकद्वितीय विलेपीं वा । एवमाचरतो रुजारागादयो नानुवर्तन्ते ॥

ततः प्रभृति प्रत्यहं विमुच्यैवमेव बध्नीयादित्यर्थः ॥ दशमे वेति दोषाद्यपेक्षया । सर्वथेत्यपुनर्बन्धनाय । सुबोधम् । रुजारागादय इत्यत्रादिशब्देनाश्रादय ॥

तदनुवृत्तौ तु यष्टीमधुकलोध्रमृद्वीकासैन्धवैः सिद्धेन ससितेनाऽजपयसा नयनमाश्च्योतयेत् । मधुककुष्ठोत्पलद्राक्षालाक्षाशर्कराभिर्वा । पृश्निपर्णीमुस्तमधुकशतावरीपद्मकसैन्धवैर्वा ॥

तदनुवृत्तौ रुजाद्यनुवृत्तौ तु यष्टीमधुकादिभिः सिद्धेनाजपयसा सशर्करेण नयनमाश्च्योतयेत् । मधुकादिभिर्वा नयनमाश्च्योतयेत् । अत्र सामर्थ्याजपयः । अथवा पृश्निपर्ण्यादिभिराश्च्योतयेत् ॥

शिरोवक्त्रलेपं च शारिवागैरिकपत्रदूर्वाघृतैः कुर्यात् । मातुलुङ्गरसाप्लुतैर्वा मृदुभृष्टैस्तिलैः ससर्षपैः । अजाक्षीरप्लुतैर्वा पयस्याशारिवापत्रमञ्जिष्ठायष्ट्याह्वैर्हिमः सुखोष्णो वा लेपः । तद्वद्देवदारुनागरपद्मकैर्वा ॥

शारिवादिभिः शिरोवक्त्रलेपं च कुर्यात् । अथवा सर्षपयुक्तैस्तिलैस्तोकभृष्टैर्मातुलुङ्गस्य रसेनाप्लुतैरालोडितैः शिरसो वक्त्रस्य च लेपः । अथवा पयस्यादिभिरजाक्षीरप्लुतैरालेपो हिमः सुखोष्णो वा शिरसि वक्त्रे चेति प्रकरणात् । पयस्या क्षीरिका । अथवा देवदार्वादिभिर्लेपस्तद्वदिति अजाक्षीरप्लुतो हिमः सुखोष्णो वा ॥

जाङ्गलरसेन च जीवनीयक्वाथवता भोजयेत् । वातहरवर्गसिद्धेन च पयसा । पद्मकादिगर्भसिद्धं सर्पिः पाननावनसेकेषु विदध्यात् । तथानुपशमे सिरां विध्येत् । अधिमन्थसाधनं चेक्षेत ।

जाङ्गलरसेनेत्यादि सुबोधम् । वातहरवर्गसिद्धेन च पयसा भोजयेदिति सम्बन्धः । अधिमन्थसाधनं सर्वगाक्षिरोगोक्तमीक्षेतानुष्ठानाय ॥

यथोक्ताचारातिक्रमात्तु व्यधः पाकमुपयाति । अभिष्यन्दाधिमन्थादयः स्युर्व्यधदोषाश्च । तान्यथास्वमुपक्रमेत ॥

यथोक्तस्यानन्तरोक्तस्याचारस्यातिक्रमा-लिङ्गनाशोऽयं पाकमुपयाति। अभिष्यन्दाधिम न्थादय इत्यादिशब्देन सर्वेषां सर्वगाक्षिरोगाणां ग्रहणम्। व्यधदोषाश्चैवमेव भवेत्। तानित्य भिष्यन्दाधिमन्थादीन्यथास्वं चिकित्सयोपक्र-मेत॥

व्यधदोषाश्च रोगाः स्युरित्युक्तम्। ते तु व्यधदोषाः पुनरध इत्यादिना प्रदर्श्यन्ते॥

व्यधदोषाः पुनरध ऊर्ध्वं कृष्णासन्न मपाङ्गासन्नं सिराव्यधश्च॥

अत्यूर्ध्वमध शलाकया वेध उक्त ऊ र्ध्वाधोदोषः। एवमन्यदपि वाच्यम्॥

तत्राधोव्यधादत्यर्थशूलाश्रुतिरागा शलाकायाश्चोपलेपो बहलपिच्छिलः कृष्ण वलिभिरुपचीयते नयनं स्रवति तद्वर्जयेत्॥

तत्रेति निर्धारणे। अधोव्यधादत्यर्थं शू-लादिस्य शलाकोपलेपादिकं च। बहलपिच्छि ल इत्युपलेपविशेषणम्। कृष्णमिति नेत्रभागः। तदधोव्यधं वर्जयेदसाध्यत्वात्॥

ऊर्ध्वव्यधादतिमात्रस्रुक्। तत्रास्युष्ण-घृतपरिषेको वातहरं च कर्म॥

ऊर्ध्वव्यधादित्यादि। सुबोधम्। वात-हरं कर्म यत्किञ्चित् सूत्रोक्तम्॥

कृष्णासन्नव्यधान्नसुखमपनीयते पट-लम्। कृष्णे च रुजा। दृष्टिरपि च रक्ता-दिता कृष्णमण्डलाभा भवति। तत्र सर्पिस्सेकविरेकरक्तमोक्षैः सिद्धिः॥

कृष्णासन्नव्यधादिति। पटलं लिङ्गना शः। दृष्टिर्दृष्टिमण्डलम्। तत्रेति कृष्णासन्न व्यधे। सर्पिस्सेकादिभिः सिद्धी रोगोपशमाख्या।

अपाङ्गसन्नव्यधाच्छोफशूलताम्रभेदा सास्रा स्रुतयः। तत्र घृतसेकोपवासौ सु वारन्तरे च दाहः॥

अपाङ्गस्यासन्ने समीपे व्यधाच्छोफादय स्युस्तत्र घृतसेकादिकम्॥

सिराव्यधाद्रक्तागमो विविधाश्च वेद ना। तत्र स्तन्यमधुकविपक्वेन सर्पिषा प रिषेकोऽपाङ्गे वा दाहः॥

सिराव्यधाद्रक्तागमादिस्तत्र सिराव्यध रोगे स्तन्यमधुकसिद्धेन सर्पिषा परिषेको दाह श्चापाङ्गे॥

सिराजालवति तु नेत्रे मारुः सिरा-जालमपनयेत्। ततो लब्धबलं स्निग्धं च विध्येत्॥

सिराजालवति नेत्रे तु सिराजालं प्राग पनयेत्ततो लब्धबलादिकं नेत्रं विध्येत्॥

अथ शलाकाभ्रमणदोषाः। क्षोभण मूर्च्छनं रोगोऽत्यर्थं दृष्टिपट्टनमतिदृष्टिपेरणं च। श-लाकाक्षोभणाद्धि स्पन्दनतोदभेदपरिमन्थाः। तस्मिन्यष्टीमधुकपोट्टल्या घृतभृतया सेको

जलौकसश्च । ऊर्ध्वप्रणयनाद्रागोऽतिवेदना च । तत्रोपवासो घृतसेकश्च स्पर्शसुख । अधोनयनाच्छूल रक्तागमश्च । तत्र क्षोभणवत् सिद्धि । अत्यर्थदृष्टिघट्टनाद्दृष्ट्याकुलता । तत्र सर्पिर्मण्डोऽनुवासन नावन च । अतीत्य दृष्टि शलाकाया प्रेरणाद्रक्तस्रवण रक्ताभरूपदर्शन च । तत्र सर्पिस्सेकापरा सजलौकस ॥

अधेत्यादिना शलाकाभ्रमणदोषा । सुबोधम । दृष्टिर्दृष्टिमण्डलम् । परिमन्थ परितो मथनमिव वेदनाविशेष । दृष्ट्याकुलता आकुलदर्शित्वम् ॥

लिङ्गनाशदोषास्तु स्फुटनमवगळन विस्तरणमुत्प्लवन लीनता च । तत्र शलाकया स्पृष्टो लिङ्गनाशो यः स्फुटति तमेरण्डपत्रास्थि भ्र खण्डश शोधयेत् । तत कृष्णासैन्धव मधुभिरवपीडनम् । अवगळति तु शलाकामपनीय स्तन्यसेक दद्यादवपीडन च शुण्ठी गुड जलौकसश्च ॥ विस्तीर्यमाणे सुखोष्णाम्बुप्लुतेन वाससा स्वेदो घृतमण्डश्च प्रतिमर्श । तद्वदुत्प्लवमाने वित्रासन शीताम्भसा सतत चोच्छिद्दृत्वन च ॥

स्फुटनादयो लिङ्गनाशस्य स्वभावदोषा । स्फुटन मण्डलस्य बहुधागमनम् । अवगळन शलाकया स्प्रष्टुमशक्यत्वम् । शेष सुबोधम् । एषा दोषाणा क्रमेण चिकित्सा च सुबोधा । अवपीडन सूत्रोक्तलक्षण नस्यम् । प्रतिमर्शो नासाभ्यङ्ग । वित्रासन शीताम्भसा विन्दुप्रक्षेपयुक्तेनोत्रामनम् । तद्वदित्यनेन पूर्वोक्त स्वेद प्रतिमर्शश्च ।

स्थिरे चले च दोषे पत्रभङ्गस्वेद । तथाप्यनपगच्छति शलाकापगमने वा पुनरुत्प्लवने स्नेहपाननस्यादिभिरुपपाद्य पुनर्विध्येत् । एवमपि पुनरुत्प्लवने भ्रुवोरन्तरे दाह ॥

स्थिर इत्यादिना उत्प्लवनविशेषचिकित्सोच्यते । सुबोधम् । तथापि स्वेदेनापि । यदा तु शलाकायामपनीतायां पुनर्दोष उत्प्लवते तदा स्नेहपानादिनोपपाद्य पुनर्विध्येत् । सुबोधम् । दाह सूर्यकान्तादिना त्वग्दाह ॥

यस्त्वपकृष्यमाणो दृष्टिमण्डले लीयते तत्र क्षीरेण नाडीस्वेद दद्यात् । शताह्वा मधुकचूर्णसंसृष्ट च घृत प्रतिमर्श इति । भवति चात्र ॥

यस्त्वित्यादिना लीनतोपाय । सुबोधम् । नाडीस्वेद सूत्रोक्तलक्षण । शतपुष्पामधुयष्टीचूर्णयुक्त घृत प्रतिमर्श । तत्रानुतर्तिका ॥

वेध्येऽक्ष्णि कार्ये स्वेदादौ नियमोय विधीयते।
स्वेददाहप्रतीमर्शान् सद्यो विद्धे तु सेचनम् ॥
अवपीडं तृतीयेऽह्नि युञ्ज्यात्तद्वज्जलौकसः ।
सप्ताहान्ते सिरामोक्षं विरेकं वस्तिकर्म च ॥
यन्त्रणामनुरुध्येत दृष्टेरा स्थैर्यलाभत ।
रूपाणि सूक्ष्मदीप्ताणि सहसा नावलोकयेत्॥

व्यधनीयेऽक्ष्णि स्वेदादौ कार्ये अय नियमो विधीयते । क इत्याह । स्वेददाहेत्यादि ।

सुनोघम् । यावद्दृष्टे सर्यैलामस्तावद्यन्त्रणानुरोधः ॥

कुर्याच्छलाकास्थूलाग्रा विशालव्रणता तनु ।
पटलोल्लेखन तीक्ष्णाक्षतमन्त खराऽरुजः ॥
कुण्ठा च विषमाश्रूणि ह्रस्वा दीर्घा च दुर्ग्रहा

कुर्यादित्यादिना शलाकादोषा । सुबोधम् । कुण्ठा मुग्रा । विषमा निम्नोन्नता । ह्रस्वा वा दीर्घा वा दुर्ग्रहा भवति ॥

आढकीमूलमरिचहरितालरसाञ्जनैः ।
विद्धेऽक्ष्णिसगुडावर्तिर्योज्याद्दिव्याम्बुपेषिता

आढकीमूलादिभिर्दिव्याम्बुपेपिता सगुडा वर्तिर्विद्धेऽक्ष्णि योज्या । [ विद्धे कृतलिङ्गनाशवेधेऽक्ष्णि नेत्रे आढकीमूलादिभि सगुडा गुडोपेता दिव्याम्बुपेपिता गङ्गाजलपिष्टा वर्तिर्योज्या ॥ ]

जातीशिरीषधवमपत्रिपाण्डुरं दि
वैडूर्यमौक्तिकफल पयसा सुपिष्टम् ।
आजेन ताम्रममुना मतनुप्रदिग्ध
सप्ताहत पुनरिद पयसैव पिष्टम् ॥
पिण्डाञ्जनं हितमनातपशुष्कमाक्षिण
विद्धे प्रसादजनन बलकृच दृष्टे ।

जात्यादिकमाजेन पयसा पिष्टममुना पिष्टेन च ताम्र प्रतनुप्रदिग्ध सप्ताहतश्च पुनस्तात्रपात्राद्गृहीत्वा क्षीरेण पिष्ट छायाशुष्क पिण्डाञ्जन विद्धेऽक्ष्णि हित प्रसादजनन दृष्टेश्च बलकृत ॥

स्रोतोजविद्रुमशिलाऽप्यतिफेनतीक्ष्णै
रस्यैव तुल्यमुदित गुणकल्पनाभि ॥

इत्युत्तरे सप्तदशोऽध्याय ॥

स्रोतोजनादिकमप्येव जात्यादिकस्य गुणैः कल्पनाभिश्चाज्याक्षीरपेषणताम्रलेपनादिभिस्तुल्यमुदितम् । अप्यतिफेनः समुद्रफेन । तीक्ष्ण मरिचम् ॥

इती इन्दुविरचितायामष्टाङ्गसग्रहव्याख्या(यां)मुत्तरे सप्तदशोऽध्याय

## अष्टादशोऽध्यायः

## सर्वगाक्षिरोगविज्ञानीयम्

नेत्रस्याऽवयवविभागेन रोगनिर्णय कृत्वा रोगाणा व्यापिना हेत्वादिक प्रदर्शयितु अध्याय आरभ्यते ॥

अथात सर्वगाक्षिरोगविज्ञानीय नामाध्याय व्याख्यास्याम । इति ह स्माहुरात्रेयादयो महर्षय ।

वातेन नेत्रेऽभिष्यण्णे नासानाहोऽल्पशोफता ।
शङ्खाक्षिभ्रूललाटास्यतोदस्फुरणभेदनम् ॥
शुष्काल्पा दूषिका शीतमल्प चाश्रु चला रुज
निमेषोन्मेषण कृच्छ्राज्जन्तूनामिव सर्पणम् ॥
अक्ष्याध्मातमिवाभाति सूक्ष्मैश्शल्यैरिवाचितम्
स्निग्धोष्णैश्चोपशमनम्—

वातेन नेत्रेऽभिष्यण्णे आर्द्रीभूत नासानाहादिक भवति । सुबोधम् । उपशमन स्वास्थ्यलाभः । एष रोगोभिष्यन्द उच्यते ॥

—सोभिष्यन्द उपेक्षित ।
अधिमन्थो भवेत्तत्र कर्णयोर्नादन भ्रमः ॥
अरण्येव च मथ्यन्ते ललाटाक्षिभ्रुवादय ।

एष चोपेक्षित सन् वातेनैवाधिमन्थो ... । तस्य वाताधिमन्थे कर्णनादादिक लि... अधरारणी याज्ञिकाना घर्षणेनाग्न्युत्पादने ... पोपम । ... ॥

मथनमिव ...
... य' सोपि स्यात् प्रमादात्तेन वेदना
... ॥ जायन्ते व्रणो दृष्टौ च दृष्टिहा ।

... चाधिमन्थ प्रमादादपचाराद्धताधि-... स्यात् । तेन च हताधिमन्थेनानेक-... ना रुजो जायन्ते । दृष्टिमण्डले च ... व्रणो जायते ॥

... क्षिशखतो वायुरन्यतो वा प्रवर्तयेत् ॥
... ॥ तीव्रामपैच्छिल्यरागशोफ विलोचनम्
... चयति पर्यश्रु सोन्यतो वातसञ्ज्ञित. ।

यदा तु स्वनिमित्तात् कुपितो वायुर्मन्यादितोऽन्यतो वा तन्निकटादङ्गात् पूर्वोक्तीव्राव्यथा प्रवर्तयेत् । पैच्छिल्यादिरहित नेत्र साश्रु सङ्कोचयति । तदा स रोगो नाम्नाऽन्यतोवात ॥

तद्वज्जिह्म भवेन्नेत्रमून वा वातपर्यये ॥

वातपर्ययाख्ये रोगे तद्वदिति । पूर्वमन्याहजादिकेन नेत्र जिह्म कुटिल चित्रन्यस्तमिव भवत्यून वा प्रमाणेन भवति ।

दाहो धूमायन शोफः श्यावता वर्त्मनोर्बहिः ।
अन्त क्लेदोऽश्रुपीतोष्ण राग' पीताभदर्शनम् ॥
क्षारोक्षितक्षताक्षित्व पित्ताभिष्यन्दलक्षणम् ।

दाहादिक पित्ताभिष्यन्दलक्षणम । धूमप्रवेश इव धूमायनम् । क्षारेणोक्षितो यो व्रणस्तत्तुल्यव्रणाक्षिता भवति ॥

ज्वलदङ्गारकीर्णाभ यकृत्पिण्डसमप्रभम् ।
अधिमन्थे भवेन्नेत्रम्—

अस्मिन्नुपेक्षया पित्ताधिमन्थीभूते ज्वलदङ्गारकीर्णाभनेत्रत्वादिक लिङ्गम् ॥

—स्यन्दे तु कफसम्भवे ।
जाड्य शोफो महान् कण्डूर्निद्रान्नानभिनन्दनम्
सान्द्रस्निग्धबहुश्वेतपिच्छावद्दूषिकाऽश्रुता ।

कफजेऽभिष्यन्दे जाड्यादिक लिङ्गम् । अनभिनन्दनमन्नस्य । सान्द्रादिगुणवद्दूषिका सान्द्रादिगुणवदश्रुता च ॥

अधिमन्थे नत कृष्णमुन्नत शुक्लमण्डलम् ।
प्रसेको नासिकाध्मान पांसुपूर्णमिवेक्षणम् ॥

अस्मिन्नेवोपेक्षया कफाधिमन्थीभूते 'कृष्ण नतत्वादिलक्षणम् ॥

रक्ताश्रुराजीदूषीका रक्तमण्डलदर्शनम् ।
रक्तस्यन्देन नयन सपित्तस्यन्दलक्षणम् ॥

रक्तोभिष्यन्दे पित्ताभिष्यन्दलक्षणान्त लिङ्गम् ॥

मन्थेऽक्षिताम्रपर्यन्तमुत्पाटनसमानरुक् ।
रागेण बन्धूकनिभं ताम्यति स्पर्शनाक्षमम् ॥
असृङ्निमग्नारिष्टाभं कृष्णमग्न्याभदर्शनम् ।

अस्मिन्नेव रक्ताधिमन्थीभूते ताम्रपर्यन्तमक्षि भवत्युत्पाटनसमानरुगादिस्वरूपं च । असृजि रक्ते निमग्नं यदरिष्टफलं तेन सदृशं कृष्णं यस्मिन्नक्षिण ॥

अधिमन्था यथास्वं च सर्वे स्यन्दाधिकव्यथाः
शङ्खदन्तकपोलेषु कपाले चातिरुक्कराः ॥

सर्वे चाधिमन्था यथास्वदोषेभ्योऽभिष्यन्देभ्योऽधिकव्यथा भवन्ति । वाताधिमन्थो वाताभिष्यन्दाधिकव्यथः । एवं सर्वत्र वाच्यम् । ते चाधिमन्था शङ्खादिकेऽतिरुक्कराः ॥

वातपित्तातुरं घर्षतोदभेदोपदेहवत् ।
रूक्षदारुणवर्त्माक्षिकृच्छ्रोन्मीलननिमीलनम् ॥
विकूणनविशुष्कत्वशीतेच्छाशूलपाकवत् ।
उक्तं शुष्काक्षिपाकोऽयम्—

वातपित्तेनातुरं पीडितमक्षि घर्षतोदादिगुणं भवति । स रोगो नाम्ना शुष्काक्षिपाक उक्तः ॥

—सशोफः स्यात्त्रिभिर्मलैः ।
सरक्तैस्तत्र शोफोऽतिरुग्दाहष्ठीवनादिमान् ॥
पक्वोदुम्बरसङ्काशं जायते शुक्लमण्डलम् ।
अश्रूष्णशीतविशदपिच्छिलाच्छघनं मुहुः ॥

सर्वैः ...

शोफः । नेत्रे च शुक्लमण्डलं पक्वोदुम्बरसङ्काशं जायते । उष्णत्वादिगुणं चाश्रु जायते ।
अल्पशोफोऽल्पशोफस्तु पाकोऽन्यैर्लक्षणैस्तथा

यस्त्वक्षिपाकोऽल्पशोफोऽन्यैः पक्वोदुम्बरसङ्काशादिकैरनन्तरोक्तसशोफाख्याक्षिपाकलक्षणैर्युक्तो भवति स नाम्नाऽल्पशोफः ॥

अक्षिपाकात्यये शोफः संरम्भः कलुषाश्रुतः ।
कफोपदिग्धमसितं सितं प्रक्लेदरागवत् ॥
दाहो दर्शनसंरोधो वेदनाश्चानवस्थिताः ।

अक्षिपाकात्ययाख्ये रोगे शोफादिकं लिङ्गम् । संरम्भो वेदनाया उद्रेकः । वेदना अनवस्थिताश्चलस्वरूपाः ॥

अम्लसारोऽम्लता नीतः पित्तरक्तोद्बणैर्मलैः ।
सिराभिर्नेत्रमारूढः करोति श्यावलोहितम् ॥
सशोफदाहपाकाश्रु भृशं चाविलदर्शनम् ।
अम्लोषितोऽयमित्युक्ता गदाः षोडश सर्वगाः ॥

योऽम्लस्य सारः स पित्तरक्ताधिकैस्त्रिभिर्मलैरम्लत्वं नीतः सिराभिश्च नेत्रमारूढः सन् नेत्रं श्यावलोहितं करोति । अयं रोगो नाम्ना अम्लोषितः । इति षोडश व्याधयः सर्वगा उक्ताः ॥

हताधिमन्थमेतेषु साक्षिपाकात्ययं त्यजेत् ।

एतेषु च मध्ये हताधिमन्थमक्षिपाकात्ययं चासाध्यत्वात् त्यजेत् ॥

वातोद्भूत पञ्चरात्रेण दृष्टि
सप्ताहेन श्लेष्मजातोऽधिमन्थ ।
रक्तोत्पन्नो हन्ति तद्वत्त्रिरात्रा-
न्मिथ्याचारात् पैत्तिक सद्य एव ॥
इत्युत्तरे अष्टादशोऽध्याय ।

वातोद्भूत इत्यादि सुबोधम् । दृष्टि ह न्ताति सर्वत्र सम्बध्यते ॥

इतीन्दुविरचितायामष्टाङ्गसग्रहव्याख्यायामुत्तरे अष्टादशोऽध्याय ॥

# एकोनविंशोऽध्यायः ।

## अभिष्यन्दप्रतिषेधम् ।

उक्तेभ्य सर्वगाक्षिरोगेभ्योऽभिष्यन्दस्य प्राधान्यात् पृथक् चिकित्सा प्रदर्शयितुमध्याय आरभ्यते ॥

अथातोऽभिष्यन्दप्रतिषेध नामाध्याय व्याख्यास्याम । इति ह स्माहुरात्रेयादयो महर्षय । अथ खलु स र्वगाक्षिरोगाणा पूर्वरूप एव शिरोविरेकन स्वधूमोपवासानासेवेतान्यत्र मारुतोद्रेकात् ॥

अथेत्यादिना सामान्येन सर्वगाक्षिरोगाणामभिष्यन्दाधिमन्थादीना चिकित्सा । सर्वगाक्षिरोगाणा पूर्वरूपदर्शन एव शिरोविरेकादिक कुर्यात । किं सर्वत्र । अपि तु मारुतोद्रेकादन्यत्र ॥

सर्वत्र तु चन्दनमरिचपत्रैलास्वर्णगैरिकतगररसाञ्जनलवणयष्ट्याह्वैर्बिडालक कुर्यात् ।

सर्वत्र चन्दनादिना बिडालको बहिर्लेपो हित । नवतायामञ्जनप्रतिषेधात् ॥

तथा दार्वीतुल्यहरीतकीभिर्वातपित्ते ।
कफे तु हरीतकीनागररसाञ्जनस्वर्णगैरिकै ॥

दार्व्यादिभिर्बिडालक वातपित्ते योज्य । हरीतक्यादिभि कफे ॥

अपि च । कुष्ठामिसिपिप्पलीचन्दनोत्पलैर्बिडालको वेदनाघ्न । मुस्तागरुचन्दनै क्षौद्रयुतै शूलदाहरागघ्न । सैन्धवागरुत्रिजातकत्रिकटुकस्वर्णगैरिककुष्ठतगरशैलेयकै शूलश्वयथुदाहरागनुत् ॥

अपि चेति साधारणसमुच्चयाय । कुष्ठमुस्तासैन्धवादयस्त्रयो बिडालका सुबोधा । मिसि शतपुष्पा ॥

शिग्रुफलमनोह्वागैरिकलोध्रै क्रमाच्चतुर्गुणवृद्धै श्लक्ष्णपिष्टैर्वस्त्रगतान्तरस्थै नेत्रमवचूर्णयेत् ॥

शिग्रुफलादिचूर्णं वस्त्रबद्ध नेत्रावचूर्णन कुर्यात । शिग्रुफलेभ्यस्तु तुल्याच्छिद्रेभ्यश्चतुर्गुणा मनश्शिला । ततश्चतुर्गुण शाबरलोध्र इति क्रमार्थ ॥

श्वेतलोध्रत्वच बहिर्विलिखितां निम्बपत्रकल्केन प्रदिग्ध्वा पुटपाके विपक्वामर्धपलो-

रादिभिरेरण्डमूलान्तैस्तद्वदिति शृतमजाक्षीरमा-श्च्योतनम् ॥

अंशुमतीद्वयबृहतीकण्टकारिकाभिर्वा तान्तवावबद्धाभिः सुरामधधान्याम्लान्यत माप्लुताभिरानूपमासाम्लक्काथेन वा ॥

अथवांशुमतीद्वयादिभिस्तान्तवे वस्त्रे अवबद्धाभि सुराद्यन्यतमाप्लुताभिराश्च्योतनम् । अथवांशुमतीद्वयादिभिस्तान्तवबद्धाभिरानूपमांसानामम्लानां च डाडिमादीनां क्काथेनाप्लुताभिराश्च्योतनम् ॥

तैरेव च मांसैर्वेशवारीकृतस्विन्नैर्महास्नेहवद्भिर्यवचूर्णलवणप्रगाढाभुल्कारिकां कृत्वा ललाटगण्डादीन् स्वेदयेत् ॥

अथवा तैरेवेत्यानूपैर्मांसैर्वेशवारीकृतैः कुट्टितैरनु च स्विन्नैः स्नेहचतुष्टययुक्तैश्च यवचूर्णलवणाभ्यां प्रगाढामापादितपिण्डीभावामुल्कारिकां कृत्वा ललाटादीन् स्वेदयेत् ॥

अथवा रास्नाभीरुदशमूलबलाकोलकुलत्थयवानामजाक्षीरसिद्धानां बाष्पेण । रास्नादिभिरेव सिद्धं तैलं सर्पिर्वा नावनम् । एवंविधैरेव नाडीस्वेदं कुर्यात् ॥

अथवा रास्नादीनामजाक्षीरसिद्धानां बाष्पेण ललाटादीन् स्वेदयेत् । सुबोधम् । एवंविधैरेति रास्नादिसमानगुणैः ॥

सरलसुरभिघनदेवदारुहिंस्राकरञ्जफलबिल्वसर्पपैश्च सभृष्टतिलैः पयसा पिष्टैः सुखोष्णैर्मुखालेपोऽक्षिवेदनास्तम्भप्रशमनः ॥

सरळादिभिर्भृष्टतिलयुक्तैः पश्चाच्च पयसा पिष्टैः सुखोष्णैर्मुख लेपोऽक्षिवेदनादिशमन ॥

एवमस्यानुपशान्तरुजः सिरां मोक्षयेत् । स्नेहस्वेदविष्यन्दं हि वातदुष्टमसृङ्निह्रियमाणं नानिलप्रकोपाय । पुनश्च स्निग्धाय तिल्वकेन संस्कृतं संयुक्तं वा तिल्वककषायानुपानं सर्पिर्विरेचनं दद्यात् । शुद्धं च वातप्रतिश्यायवदास्थापयेदनुवासयेच्च ॥

एवमित्यादि सुबोधम् । स्नेहत्यादि सिरामोक्षहेतुः । पुनरित्यस्ते निर्दिष्टे । तिल्वक पट्टिकालोध्रम् ॥

अथ तिलान् निस्तुषान् बिल्वकल्काथेन भावयेन्निशि दिवा शोषयेदेवं पञ्चाहम् । तेभ्यस्तैलं गृहीत्वा वराहमेदोयुक्तं बिल्वमूलमधुयष्टिकाकल्केन पयसा च पचेत् । तेन नस्यं शिरोबस्तिं च कुर्यात् । सर्वगन्धनिर्यूहेण वा मधुरगर्भं सक्षीरं तैलम् । स्नैहिकं च धूमं पिबेत् ॥

अथान्वासनादनन्तरञ्च । तिलानित्यादि सुबोधम् । शिरोबस्तिं सूत्रोक्तलक्षणं । अथवा सर्वगन्धद्रव्याणां निर्यूहेण क्काथेन मधुयष्टीगर्भं सक्षीरं तैलं सिद्धं नस्यं शिरोबस्तिं च कुर्यादिति सम्बन्धः । स्नैहिकं धूमं शोधनादिगणसमहे अगरुगुग्गुल्वादिना सूत्रोक्तं ॥

उपशान्तरुजोऽस्य च तर्पणम् । काश्मर्यमधुकक्कुमुदोत्पलश्रीरूपगकुष्ठबृहतीतमालपत्र -

प्रत्यञ्जनं चात्र स्फटिकशङ्खनागिमधुकगैरिकैरिक्षुरसपिष्टैर्वर्ति. ॥

अत्र च वाताभिष्यन्दे इक्षुरसपिष्टे स्फटिकादिभिर्वर्ति प्रत्यञ्जनम् । तीक्ष्णाञ्जने प्रयुक्ते यन्मृद्वञ्जन तत्प्रत्यञ्जनसञ्ज्ञम् ॥

अयमेव च सर्वो विधिरधिमन्थादिष्वपि प्रयोज्यः ।'

अयमेव च सर्वो वाताभिष्यन्दोक्तो विधि सर्वेष्वप्यधिमन्थादिषु सर्वगामिरोगेषु प्रयोज्यो वातजेष्वित्यर्थात् ॥

विशेषतस्त्वधिमन्थे सहचरस्फूर्जातकपतकबीजबिल्वदृक्षादनीनिर्यूहेण सपयस्कं सर्पि सिद्ध पिबेत् ॥

अधिमन्थेषु विशेषत इद कुर्यात । कि मित्याह । सहचरेत्यादि । स्फूर्जातकस्य काकतिन्दुकस्य बीजम् । वृक्षादनी द्रुमकण्टाधि ॥

सर्पिपानुपशमे तैल वसा मज्जान पूर्वोक्तविधिनभ्यासेन कुर्यात् । सर्वथानुपशान्तावुपरि भ्रुवोर्यथोक्तो दाह ॥

सर्पिपानेनानुपशमे सहचरादिभि भावित तैलाद्यन्यतममनन्तरोक्तविधिनभ्यासेन पर्यायेण कुर्वीत । दाह सुबोध । इति वाताभिष्यन्दे ॥

पित्ताभिष्यन्दाधिमन्थयो. शर्करावचूर्णित सर्पि पानम् । तिक्तकानामन्यतम वा ।।

पित्ताभिष्यन्दे पित्ताधिमन्थे च शर्करयाऽवचूर्णित घृत पानम । अथवा चिकित्सितस्थाननिर्दिष्टाना तिक्तकमहातिक्तकगुग्गुलुतिक्तकानामन्यतम वा पानम् ॥

प्रपौण्डरीकामलकद्विवृहतीदर्भदशमूलशतावरीतालीसपत्रमञ्जिष्ठानीलोत्पलक्काथ सितास्तन्येनाऽश्च्योतनम् । मधुककटङ्कटेरीनिर्यूहो वा । सक्षौद्रश्चन्दनमधुकलोध्रमञ्जिष्ठास्वर्णगैरिकक्वाथस्तीव्रशूलदाहहर. ।'

प्रपौण्डरीकादीना क्वाथ सितया स्तन्येन च युक्त आश्च्योतनम । मधुकादिनिर्यूहो वा सितास्तन्यसनाथाश्च्योतनम । कटङ्कटेरी दारुहरिद्रा । चन्दनादीना वा क्वाथ क्षौद्रेण युक्त आश्च्योतनेन तीव्रशूलदाहहर' ॥

लोध्रदार्वीमधुकप्रपौण्डरीकान्यापोथ्यनन्तकेन बध्नीयात् । तेन क्षौद्रसलिलाप्लुतेन सेको वेदनाघ्न । तेनैव च सशर्करस्त्रीस्तन्ये छागदुग्धे वा दाहरागघ्न ॥

लोध्रादिसेको वेदनाघ्न सुबोध । अनन्तक गाढवस्त्रम् । तेनैवेति लोध्रादिसहितेन अनन्तकेन सशर्करस्त्रीस्तन्ये छागदुग्धे वाप्लुतेन सेक इति सम्बन्ध ॥

श्वेतलोध्र मधुक च सम घृतेन भर्जयित्वा चूर्णयेत् । तत पोट्टलिकावबद्ध स्तन्येन तोयेन वा मृदितमाशु शूलदाहरागशोफानपोहति । चन्दननलिनकुमुदनलदादि-

तिल्वकबृहतीनिदिग्धिका लोध्रारग्वधमूलत्वग्भिर्गोमूत्रक्वाथितैराश्च्योतनं शोफोपदेहकण्डूघ्नम् ॥

गोमूत्रक्वथितैस्तिल्वकादिभिराश्च्योतनं शोफादिघ्नम् ॥

निम्बपत्रकल्कदिग्धं वा लोध्रमङ्गारस्वेदितं चूर्णितं तान्तवावबद्धमुष्णाम्बुमृदितम् ॥ तद्वदेवाभयामलकोपकुल्या पाटलीचूर्णानि । शिग्रुपल्लवरसो वा मधुमिश्रः । मधुशिग्रुपाटलीबिल्वमूलं शुण्ठीक्वाथो वा ॥

निम्बेत्यादि सुबोधम् । उष्णाम्बुमृदितमाश्च्योतनं शोफादिघ्नमिति सम्बन्धः । अभयादीनां चूर्णानि तद्वदिरयुष्णाम्बुमृदितानि च । शेषं सुबोधम् ॥

निम्बपटोलजातिपत्र लोध्रद्वयमहौषधैः खण्डशः कल्पितैर्वस्त्रबद्धैः सक्षौद्रैर्गौडे शीधौ वा परिप्लुतैः सेकः परं श्लेष्मशूलघ्नः ॥

खण्डशः कल्पितैः कृतैः क्षौद्रसहितैर्वस्त्रेण बद्धैर्गौडे गुडकृतमद्ये शीधाविक्षुकृतमद्ये वा परिप्लुतैर्निम्बपत्रादिभिः सेकः परं श्लेष्मशूलहरः ॥

रोहिषपूतीकरञ्जकपित्थास्फोतपीलुबिल्वपलाशशिग्रुसुरसार्कनिम्बपत्रैर्गोमूत्रक्वथितैः स्वेदः ॥

रोहिषादिभिर्गोमूत्रक्वथितैः स्वेदः पूर्वगुणः । रोहिषः ग्रीष्मः । आस्फोतः, श्वेतार्कः ।

एकः पत्रशब्दो बिल्वेन द्वितीयो निम्बेन च सम्बध्यते ।

तथापि शोफघर्षानुबन्धे यवमदनभूर्जशमीपत्रैः सघृतैर्घृतेनैव वा नाड्याक्षि धूपयेत् । लम्बशितं च द्वितीयेऽह्नि प्रातर्व्योषविपक्वं यवक्षारावचूर्णितं सर्पिः पाययेत् । ततः सिराव्यधो विरेकश्च ॥

तथापीत्यादि । शोफघर्षयोरनुबन्धे सति यवादिभिः सघृतैर्नाड्या करणभूतया अक्ष्णोर्धूपनम् । केवलेनैव वा घृतेनाक्षिधूपनम् । मदनं मधूच्छिष्टम् ॥

बृहतीत्वक्शुण्ठी ताम्रकांस्य रजांसि दधिमस्तुना पिष्ट्वा ताम्रपात्रे प्रलेपयेत् । तथैव च सप्ताहे । सप्तसप्ताहे च गते वर्तयः कार्याः । मरिचहरिद्राभयाञ्जनैर्वा जलपिष्टा वर्तिः । त्रिकटुकत्रिफलाविडङ्गसारहरिद्राभिर्वा ॥

बृहतीत्यादि सुबोधम् । तथैवेति ताम्रपात्रे सप्ताहे बृहत्यादिभिरुपर्युपरिलेपः । एवं सप्तसप्ताहे सप्तलेपाभवन्ति । सुबोधम् ॥

हरीतकी तुत्थं च समभागं तुत्थाष्टांशेन मरिचमेषा वर्तिः कुमारी सर्वश्लेष्माक्षिरोगघ्नी ॥

हरीतकी तुत्थसमा । तुत्थस्याष्टभागेन मरिचम् । एषा वर्तिः कुमारी नाम्ना ॥

विडङ्गचूर्णो वा नारण्या भावितः शङ्खो बीजपूररसेन मधुक त्रिफलारसेन पृ-

थवैकस्य वा चूर्णाञ्जनं वा पिण्डो वा पोत्थकीरहलकफोत्क्लेशाभिष्यन्दानपहरति ॥

त्रिकटुकमरमधुकानि वार्ताकीबीजपूरकसविफलारसैर्भावितानि रोगावस्थया प्रत्येकं वा ऐकध्य वा चूर्णाञ्जन वा पिण्डाञ्जन वा यान्यानि पोत्थक्यादिके ॥

स्वर्णगैरिकसैन्धवमनःशिलारसाञ्जनतरुलिकासुरसाडकव्योपतालीमधुष्ठकलिङ्गदेवदारुनलदजातीमुकुलरसाञ्जनं सुरामण्डपिष्टैर्वर्त्तिः सर्वश्लेष्माक्षिरोगविकारहरा ॥

स्वर्णगैरिकादिभिर्वर्त्तिः श्लेष्माक्षिरोगहरा । फरञ्जिका करञ्ज । नदट मामी । रसाञ्जनं तार्क्ष्यम् ॥

पुष्पकासीसचूर्णं ताम्रसमुद्गे सुरसपत्रस्वरसेन सप्ताहं भावयेत् । तच्चूर्णाञ्जनं वर्त्मोपचयपदमशातनम् ॥

पुष्पकासीसशब्देन धातुकासीसमभिहितं । ताम्रसमुद्गे ताम्रपिधाने ताम्रभाजनम् ॥

सैन्धवव्योषकरञ्जत्रिकटुलोध्रमर्पौण्डरीकमधुकतुत्थकताक्ष्यशैलताम्रचूर्णं छागपयःपिष्टैर्मार्कवस्वरसपरिपीतैर्वर्त्तिः काण्डचित्राख्या सर्वाक्षिरोगान् जयति ॥

सैन्धवादिना काण्डचित्राख्या वर्त्तिः । मार्कवस्वरसो भृङ्गरसः तेन परिपीतैर्भावितैः ॥

कण्डवा मनःशिलासैन्धवश्वेतमरिचैर्मातुलुङ्गरसपिष्टैर्वर्त्तिः । सशोफायां नागरदारुसैन्धवजातिक्षारकैः सुरामण्डपिष्टैः ॥

मनःशिलादिभिः कण्ड्वां वर्त्तिः । सशोफायां कण्डवां नागरादिभिः सुरामण्डपिष्टैर्वर्त्तिः । श्वेतमरिचं शिग्रुबीजम् ॥

नक्तमालशुनशिग्रुशिग्रुकरीजैर्वा रसक्रिया । तर्पणं च ॥

तथैव नक्तमालादिभी रसक्रिया सूक्ष्मश्लक्ष्णा । शिग्रुसौभञ्जनः हरितकः च । शिग्रुः रक्तसौभञ्जनम् । तर्पणं च भवेत् ॥

त्रिफलादि ॥

यष्ट्याह्वमगरप्रियगुनलदवदारुयुतपयसि क्वाथयेत्तस्मिन् शीते स्वजमथिते यन्नवनीतं तदभिरौषधैर्विपक्वम् । पुटपाकश्च कुष्ठनगरनागसरगरैः राजेन यष्ट्या सह पिष्टैर्मधुकघृतं ॥

यष्ट्यादिचाभि । आज्य यष्टचगदीदियुतक्षीरं क्वाथयेत् । तस्मात् क्षीरात् स्वजमथितात् यन्नवनीतमुत्पद्यते तदेतैरेवागरादिभिर्विपक्वं तर्पणम् । कुष्ठादिभिर्नेत्रे पुटपाकः । इति श्लेष्मणि ॥

रक्तजं पुनरभिष्यन्दमधिमन्थं च पित्तवदुपक्रमेत् । स्तन्येक्षुरसशर्करोदकान्यतमेन वाश्च्योतयेत् । पुनः पुनश्चास्य रुधिरमव

सेचयेत् सिराव्यधेन जलौकोभिश्च । तीव्रवेदनायां महतीं घृतमात्रां पाययेत् ॥

रक्तजे पित्तवत् । तथा स्तन्याद्यन्यतममाश्च्योतनम् । अस्येति रक्तेनाभिष्यन्दिनोऽधिमान्थिनो वा । सुबोधम् ।

आढकीकुरंटपाटलीश्रीपर्णीविदुलार्जुनबृहतीचम्पकमालतीमूलानि खर्जूररसपिष्टानि गुलिकाञ्जनम् ॥

आढकीमूलादिना खर्जूररसपिष्टेन गुलिकाञ्जनम् । आढकी तुवरी । कुरंटस्तरुणि । विदुलो वेतस ॥

केशैर्जलार्द्रैः कांस्यमुद्घर्षयेत् तान् कांस्यमलदिग्धानन्तर्धूमं दग्ध्वा तत् भस्म त्रिफलाक्वाथे सुरसास्वरसे क्षीरे च छागे पञ्चाहं भावयेत् । एतच्चूर्णं स्रोतोजतुल्यं मत्स्याञ्जनम् ॥

केशैरित्यादि । कांस्यमलदिग्धान् प्रघर्षणात् । तान् मलिनकेशान् । सुबोधम् । स्रोतोज तत्सदृशमञ्जनम् ॥

कृष्णसर्पं पयसि क्वाथयेत्तत' पूतशीतमथितात् स्नेहमुपोषिताय कृकवाकवे दद्यात्। तस्य यत् पुरीषं तत् स्नेहाञ्जनम् ॥

कृष्णसर्पमित्यादि । कृकवाकु कुक्कुट । उपोषितः कृतोपवास ॥

कृष्णसर्पमुखमजनसर्पिषा पूर्णं दर्भवेष्टितं मृदवलिप्तमधोमुखं गोमयेनाग्निनादग्ध्वा ततोऽञ्जनमादाय पत्रनलदनीलोत्पलतुल्यं चूर्णीकृतं परं हवमसादजननमञ्जनम् ॥

कृष्णसर्पमुखस्याधोमुखत्वं पच्यमानेऽञ्जने स्नेहविस्रावाय । शेषं सुबोधम् ॥

घृतमण्डश्च शर्करामधुकनीलोत्पलैर्मानुषीदुग्धयुक्तैः सिद्धो नस्यमिति । भवति चात्र ।

शर्करादिभिर्युक्तः सिद्धो घृतमण्डश्च नस्यम् । गतानुगतिका ॥

सर्वेऽक्षिरोगा यत् प्रायो जायन्ते स्यन्दपूर्वका'।
यतश्च रक्तं सन्दूष्य तानतस्त्वरयाजयेत् ॥

यद्यस्मात् केचन क्षिरोगास्ते सर्व प्राय' स्यन्दपूर्वका अभिष्यन्दपूर्वका जायन्त । यतश्च ते स्यन्दा रक्त क्षिप्रकारि सन्दूष्य जायन्ते अतस्तात् स्यन्दांस्त्वरया जयेत् ॥

सर्वोर्ध्वजत्रुगस्रोतस्यन्दनात्स्यन्द उच्यते ।
तत्स्थाना तद्वदङ्गानामधिमन्थोऽतिमन्थनात् ॥

सच रोगस्सर्वेषामूर्ध्वजत्रुगतानां स्रोतसां स्यन्दनात् स्रावणात् स्यन्द इत्युच्यते । तद्वदेव तत्स्थानां जत्रूर्ध्वस्थानामङ्गानां मन्थनादधिमन्थ इत्युच्यते ॥

वातेऽक्षिसेकस्सैरण्डबृहतीमधुशिग्रुणा ।
सिद्धेन पञ्चमूलेन सासितं पित्तरक्तयो ।
दार्वीलाक्षोत्पलद्राक्षामञ्जिष्ठामधुकद्वयैः ।

श्लेष्मणि त्रिफलाशुण्ठीनिम्बलोध्रादरूषकैः ॥
समस्तैस्सन्निपातोत्थे कुर्यात् स्यन्देऽक्षिसेचनम् ।

वाताधिक स्यन्दाख्येऽक्षिरोगे सिद्धेन कथितेन पञ्चमूलेनैरण्डादियुतेनाक्षिसेकः । पित्तरक्तयोः सर्पिर्मिश्रैर्यष्टिभिः परिषेकः । मधुकद्वयं मधुयष्टी मधुकं च । त्रिफलादिभिः श्लेष्मणि सेकः । सन्निपातोत्थे स्यन्दे समस्तैर्वातपित्तकफौषधैः सेचनं कुर्यात् ॥

तुत्थकोपाभयालोध्रयष्ट्याह्वैस्ताम्रसंस्थितैः ।
धान्याम्लपिष्टैः सेकोऽयं सर्वाभिष्यन्दरुक्प्रणुत् ।
तद्वत्तुत्थाभयालोध्रयष्टीमधुरसाञ्जनैः ।
शताह्वार्द्रांशसंयुक्तैः सेकः सर्वाक्षिशूलजित् ॥

तुत्थादिभिः सेकः सुबोधः । तुत्थाभयादिभिस्तद्वदिति ताम्रस्थितैर्धान्याम्लपिष्टैश्च । शताह्वाया अर्द्धांशः समुदायात् ॥

पुष्पाञ्जनसितार्द्रांशैस्ताम्रसंस्थैस्तिलाम्भसा ।
सेचनं हन्ति रुग्रागदाहश्वयथुघर्षणम् ॥
द्विनिशात्रिफलामुस्तैः समदारुरसाञ्जनैः ।
सेकः सशर्करार्द्रांशैरभिघातरुजापहः ॥

पुष्पाञ्जनादिभिः ताम्रस्थैः तिलाम्बुप्लुतैर्युक्तः सेचनं रुगादीन् हन्ति । पुष्पाञ्जनं रीतिपुष्पम् । द्विनिशादिसेकः सुबोधः ॥

निषिक्तं तुत्थकं वारान् मोजले पञ्चविंशतिम् ।
स्तन्ये वा छागदुग्धे वा सद्यः कोपं तदञ्जनम् ॥

तुत्थकचूर्णं मूत्रेण वा गोः स्तन्येन वा छागदुग्धेन वा पञ्चविंशतिं वारान् निषिक्तं सद्यः कोपेऽञ्जनम् ॥

बदरीदलयष्ट्याह्वतुत्थधात्रीफलैः समैः ।
पुटान्तर्बादरादग्धैर्दृग्रुक्कोपघ्नमञ्जनम् ॥

समैः पुटस्यान्तर्बादरेणाग्निना दग्धैर्बदरीदलादिभिः कृतमञ्जनं दृग्रुक्कोपघ्नम् । उक्ता पोऽभिष्यन्दे ॥

बृहत्येरण्डमूलत्वक् शिग्रुमूलं ससैन्धवैः ।
वर्तिराजपयः पिष्टैस्सर्ववाताक्षिरोगजित् ॥

आजेन पयसा क्षीरेण पिष्टैः सैन्धवसहितैर्बृहत्यादिभिः कृता वर्तिः सर्वान् वातजान् क्षिरोगान् जयति ॥

सुमनःक्षारका शङ्खत्रिफला मधुकं बला ।
पित्तरक्तापहा वर्तिः पिष्टा दिव्येनवारिणा ॥

सुमनःक्षारकादिभिर्दिव्येन वारिणा पिष्टा वर्तिः पित्तरक्तापहा भवति । सुमनःक्षारका सुमनःकलिका ॥

सैन्धवं त्रिफला व्योषं शङ्खनाभिस्समुद्रजम् ।
फेनं शैलेयकं सर्जो वर्तिः श्लेष्माक्षिरोगजित् ॥

सैन्धवादिभिः कृता वर्तिः श्लेष्माक्षिरोगजित् श्लेष्माभिष्यन्दाधिमन्थाक्षिशमनी । अनुक्तद्रवत्वात् पूर्वोक्तेन दिव्याम्बुना पिष्टैरेभिः कृतेत्यर्थः । उभयोर्वाक्ययोर्मध्यस्थं पदं युक्तिन्यायादुभयत्रापि सम्बध्यते ॥

शङ्खविद्रुमवैडूर्यलोहिताक्षप्रवालास्थिभिः ।
स्रोतोजश्वेतमरिचैर्वर्त्तिः सर्वाक्षिरोगजित् ॥

शङ्खादिभिः श्वेतमरिचान्तैः कृता वर्त्तिः सन्निपाताक्षिरोगजित् । अत्राप्यनुक्तद्रवत्वात् स्त्रियेन वारिणा पिष्टैरिति बोद्धव्यम् । अस्थिशब्दो लोहिताक्षप्रवालाभ्यां सम्बध्यते । लोहिताक्षः सारसविशेषः । प्रवो वाडिम्य ॥

पिप्पल्यः किंशुकरसो वसा सर्पस्य सैन्धवम् ।
घृतं च जीर्णं सर्वाक्षिविकारघ्नी रसक्रिया ॥

पिप्पल्यादिना रसक्रिया सर्वाक्षिविकारनाशनी भवति ॥

कृष्णसर्पवसा क्षौद्रं रसो धात्र्या रसक्रिया ।
शस्ता सर्वाक्षिरोगेषु काचार्मपटलेषु च ॥

कृष्णसर्पवसादिभिः रसक्रिया सर्वाक्षिरोगादिषु शस्ता प्रशस्ता । कृष्णसर्पो दर्वीकरविशेषः ।

रसाञ्जनं शृङ्गिवेरमभया तुत्थकं शुभम् ।
यथोत्तरं द्विगुणितैरेतैर्वर्त्तिरपराजिता ॥
कृतवातादभिष्यन्दास्तिमिराणि कुकूणकम् ।
पोत्थकीपिटका पिल्लानर्माणि च नियच्छति ॥

रसाञ्जनादिभिश्चतुर्भिर्यथोत्तरं द्विगुणितैरपराजिताख्या वर्त्तिः । रसाञ्जनाद् द्विगुणितं शृङ्गिवेरम् । ततो द्विगुणा अभया । ततस्तुत्थकमिति यथोत्तरार्थः । एषापराजिताख्या वर्त्तिर्वातवर्जितान् सर्वानभिष्यन्दांस्तिमिरादिकं च नियच्छति नाशयति ॥

ताम्रेमस्तु समुद्घृष्टं तुत्थकं श्यावतां गतम् ।
सर्वाभिष्यन्दशुक्रार्मसिराजालजिदञ्जनम् ॥

मस्तुना ताम्रपात्रे समन्तादुद्घृष्टं तेन चोद्घर्षणेन श्यावतां गतं तुत्थकं सर्वाभिष्यन्दजिदञ्जनम् ॥

मरिचवरलवणभागौ
भागौ द्वौ कणसमुद्रफेनाभ्याम् ।
सौवीरभागनवकं
चित्रायां चूर्णितं कफामयजित् ॥

मरिचसैन्धवाभ्यामेको भागः । पिप्पलीसमुद्रफेनाभ्यां द्वौ भागौ । नव भागाः सौवीरस्य । एतत् चित्रायां नक्षत्रे चूर्णितं कफामयजिदञ्जनम् ॥

मरिचामलकजलोद्भव
तुत्थाञ्जनं ताप्यधातुभिः क्रमवृद्धैः ।
षण्माक्षिक इति योग-
स्तिमिरार्मक्लेदकाचकण्डूघ्नः ॥

मरिचादिभिः क्रमवृद्धैः षण्माक्षिकनामा योगो नानाप्रयोगस्तिमिरादीन् हन्ति । ताप्यधातुर्वैडूर्यमाक्षिकम् । मरिचस्यैको भागः । आमलकानां द्वौ । फेनस्य त्रयः । तुत्थस्य चत्वारोऽञ्जनस्य पञ्च । ताप्यधातोः षडिति क्रमवृद्ध्यर्थः ॥

पिप्पली सतगरोत्पलपत्रा
वर्त्तयेत् समधुका सहरिद्रा ।

एतया सततमजायितव्य
य सुपर्ण समपिच्छति चक्षु ॥

इत्युत्तरे एकोनविंशोऽध्याय ।

पिप्पलीं नगरादिना सह वर्तयेद्वर्तिंत्वमापादयेत् । एतया पिप्पल्या तेन सततमजायितव्य यो गरुडसम चक्षुरिच्छतीति ॥

इती दुविराचितायामष्टाङ्गसमहव्याख्याया
मुत्तरे एकोनविंशोऽध्याय ॥

# विंशोऽध्यायः -।

## अक्षिपाकपिल्लप्रतिषेधम् ।

अभिष्यन्दस्य तदेकयोगक्षेमस्य चाधिमन्थस्य चिकित्सामुक्त्वा अक्षिपाकाना पिल्लाना च साधन प्रदर्शयितुमध्याय आरभ्यते ॥

अथात अक्षिपाकपिल्लप्रतिषेध नामाध्याय व्याख्यास्याम । इति ह ॥

अथात इत्यादि । पिल्ला उक्तभ्य एव वर्त्मादिरोगेभ्य' केचित । ते चेह वक्ष्यन्ते ॥

शुष्काक्षिपाके वाताभिष्यन्दविहित सर्पि पिबेत् । कुलीररसक्षीरसिद्ध वा ॥

वाताभिष्यन्दविहित सर्पिर्दशमूलादिकं कुळीरमासरसक्षीराभ्या सिद्धवा सर्पि पिबेत् ॥

वार्पदापौण्डरीकयो काथ आश्च्योतनमक्षिपाकघ्नम् । मञ्जिष्ठामधुककालानुसारी शारिवाल्रोध्रलाक्षाप्रपौण्डरीकाणामक्षिपाकरक्तराजीघ्नम् । मृद्वीकाचन्दनकल्कस्तण्डुलाम्बुपरिस्रुतो मधुमानश्रुदाहहर• । लोध्रकोरण्डकपुष्पक्काथो वेदनाहर' ॥

दार्व्यादि सुबोधम् । मजिष्ठादीना काथ आश्च्योतनमिति सम्बध्यते । कालानुसारी कालेयक । कोरण्टक आम्लायन । सुबोधम ॥

अणुतैल नस्यम् । शारिवाविदारीबलामधुकोत्पलद्राक्षाहरूपकजीवकचन्दनैर्जाङ्गलरसक्षीरोपेत तैल साधित नावनात् स र्वोर्ध्वजत्रुजान् गदान् वातपित्तोत्तरान् निहन्ति ॥

अणुतैल नस्यविध्युक्तम् । शारिवादि तैल नावनाद्वातपित्ताधिकान सर्वानूर्ध्वजत्रुजान् गदान निहन्ति नाशयति ॥

स्निग्धाश्चात्र तर्पणपुटपाका । वातपित्तान्यतरोद्रेकतश्च यथास्वमभिष्यन्दविधि ॥

अत्रेत्यक्षिपाके वातपित्तयोरन्यतरस्योद्रेकाद्धेतोर्यथास्वमुद्रिक्तदोषानतिक्रमेणाभिष्यन्दोक्तो विधि ॥

आदर्शमण्डले घृताक्तकेशान् घृष्ट्वान्तर्धूम दहेत् सा मषी घृतपिष्टाऽयसभाजनस्थिताऽक्षिपाकमञ्जनादपहरति ॥

आदर्शमण्डल मलिनितकेशमप्यंजनम् । सबोधम् ॥

मञ्जिष्ठाफलत्रिककटङ्कटेरीनिष्काथे लोहस्रोतोऽञ्जनचूर्णमापिण्डीभावात् पचेत् । एतच्चूर्णाञ्जनमभय दाहोपारागाश्रुहरम् ॥

मञ्जिष्ठादिक्काथपक्वगुलिका चूर्णीकृता ञ्जन नाम्नाभय दाहादिहरम् ॥

ताम्ररजस्सैर्यकपुष्पपुण्ड्राह्वमधुककालानुसारीशारिवा छागेन पयसा पिष्टा पिण्डाञ्जनम् ॥

ताम्रचूर्णादिक पिण्डाञ्जन सुबोधम् । सैर्यकस्य महचरस्य पुष्पमाम्लायनस्येति केचित् ॥

आनूपवसा शुण्ठीसैन्धवचूर्णान्विता स्नेहाञ्जनम् । एवमप्यशान्तौ मधुकसिद्ध शताह्वाचूर्णयुक्तो घृतमण्डस्तथा पयो वा बस्तिः ॥

आनूपवसेत्यादि सुबोधम् । तथापय इति घृतमण्डश्च मधुकसिद्ध शताह्वाचूर्णयुक्त च ॥

सशोफाल्पशोफयोस्तु स्निग्धस्विन्नस्यातु सिरां विध्येत् ।

सशोफाख्येऽल्पशोफाख्ये च स्निग्धस्विन्नस्य मत सिरा विध्येत् ॥

द्राक्षाभयाकाथस्त्रिवृत्कल्कवान् स घृतो विरेकः । विरिक्तस्य यथादोषोदयमास्थापनम् ॥

द्राक्षाहरीतकीकाथेन त्रिवृत्कल्कघृतयुक्तेन विरिक्तस्य दोषोदयातिक्रमेणास्थापनम् ॥

ततः पिण्डस्विन्नशिरसः सर्षपतैलेन सैन्धवयुतेन वा सर्पिषा फणिज्जकयुक्तेन वा अणुतैलेन शिरोविरेकः । विरिक्तशिरसोऽनुवासन क्षीरसर्पिषा धूमपान च ॥

तत इत्यास्थापनादन तर पिण्डस्वेद सूत्रोक्तेन स्विन्नशिरसः सर्षपतैलेन शिरोविरेक सर्पिषा वा सैन्धवयुतेनाणुतैलेन वा फणिज्जकचूर्णयुतेन । फणिज्जको मरुवकः । तत क्षीरसर्पिषानुवासनम् । धूमपान दोषाद्यपेक्षम् ॥

शिरोनेत्र चास्य सुनिषण्णकपत्तूरैरण्डपत्रैः क्षीराम्बुस्विन्नैः सस्वेदयेत् ॥

अस्य चाक्षिपाकवत शिरोनेत्र च सुनिषण्णकादिपत्रैः क्षीराम्बुस्विन्नैः स्वेदयेत । सुनिषण्णकनाम्नानुपेभवति । काश्मीरेषु सुन्नेति प्रसिद्धः । पत्तूरो जले भवति नाम्ना मत्स्याक्षक ॥

घृतभृष्टं लोध्रचूर्ण सूक्ष्मवासस्यमुष्णोदकाविमृदितमाश्च्योतनम् । शुष्काक्षिपाकोक्त च वेदनाघ्नम् ॥

घृतभृष्टमित्यादिनाश्च्योतन सुबोधम् । शुष्काक्षिपाकोक्त वेदनाघ्नमाश्च्योतनमिति सम्बध्यत । तच्च ऽध्यर्धेरण्डपुष्पकृतः न्यायः ॥

एवमशान्तवेदन सन्धावैरुपक्रमेत ॥

सन्धावैरित्यनन्तरं वक्ष्यमाणै सन्धाव नामभिरञ्जनै श्चोपक्रमेत ॥

शशशिर कपाल सैन्धव कांस्ये स्त न्यघृष्ट सन्धावो वेदनाघ्न । तद्वत्ताम्र च लोहे गोमूत्रघृष्ट घृतधूपितम् ॥

शशस्य शिर कपाल सैन्धवेन सह का स्यपात्रे स्तन्येन घृष्ट वेदनाघ्न सन्धाव । लो हपात्रे गोमूत्रघृष्ट ताम्र घृतधूपित सन्धाव ॥

शिग्रुपल्लवरसश्च ताम्रघृष्टो घृत धूपित । शङ्खस्तु ताम्रे स्तन्येन घृष्ट घृताभ्यक्तयवश मीपत्रधूपित घर्षवेदनाघ्नम् ॥

शिग्रुपल्लवरसस्ताम्रघृष्टो घृतधूपितश्च स- न्धाव । शङ्खो हपात्रे घृष्ट ताम्र घतधूपित सन्धाव ॥

उदुम्बरफल लोहे स्तन्यघृष्ट घृताभ्य क्त शमीपत्र धूपित शूलरागाश्रुघर्षघ्नम् । द धिसर पिप्पलीसैन्धवयुक्तस्ताम्रे घृष्टश्शोफ घर्षाश्रुवेदनाघ्न ॥

उदुम्बरफलमित्यादिना शूलाग्निरस- न्धाव । दधिसरादिक सन्धाव शोफादि घ्न ॥

मृत्कपाल काम्य तिलोदकघृष्ट घृता क्त निम्बपधूपित शोफकण्डूघर्षाश्रुशूलरा- गघ्नम् ॥

मृन्मय पक्वकपाल कमभाजने तिलोद केन घृष्ट घृताक्त निम्बपत्रधूपित शोफादिघ्न स न्धाव ॥

सन्धावाञ्जित चाक्षिस्तन्येनानुसिञ्चेत्। त्रि.पर च तैर्नाञ्जयेत् । अथाञ्जनानि ॥

एभ्योऽन्यतमेन सन्धावेनाञ्जितमक्षि स्त न्येन सिञ्चेत । तैरितिसन्धावै स्त्रिभ्योवा- रेभ्य परमूर्ध्व नेत्र नाञ्जयेत । अथातऽनन्तरम ञ्जनानि भवन्ति ॥

मधुकम्बृहतीन्यग्रताम्ररजतास्यजाक्षी रपिष्टानि शम्याकम्कपत्रै घृताप्लुतै रनेक शो धूपितानि पिण्डाञ्जन शोफवदनाघ्नम् ॥

मधुकादिना पिण्डाञ्जन शोफादिघ्न भवति ।

तालीसपत्रपिप्पलीलोहरजोञ्जन का- सीसतगरजातीमुकुलसैन्धवैर्गोमूत्रपिष्टैस्ताम्र मालिप्त सप्तरात्र स्थापयित्वा पुनस्तद्वदेव पिष्टगुटिका कार्यास्ता स्तन्यघृष्टा स्तम्भ- श्वयथुदूषघर्षाश्रुकण्डूघ्न ।

तालीसपत्रादिना गुटिका स्तम्भादि- घ्न तद्वदेवति गोमूत्रेण । अञ्जनकाले स्तन्येन गुटिकाद्घर्षणम ॥

अरट्वास्थिसहकारमास त्रिगतत्वचसम ताम्रचूर्णमीषत् सैन्धवोपेत गव्येन दध्ना पिष्ट्वा ताम्रमालेपयेत् । शुष्क शुष्क तथैव च पिष्ट्वा पुनर्लेपयेत् । एतद् सप्ताभि. सप्ताहै

पिण्डाञ्जनं कृतं सर्वाक्षिपाकाशुष्कशोफराग वर्त्मोपचयघ्नम् । अश्मन्तकाम्लवेतसपरूषक कोलडाडिमैः कृता रसक्रिया सशोफाल्पशोफपूयालसान् नाशयति । इत्थमपि शोफानुवृत्तौ पुनरसावसेकः शिरोविरेकश्च ॥

सहकारमाम्रफलमनन्तरमस्य यतिर्गालम् । तस्य सहकारस्य मांसं त्वचोऽन्तर्भागम् । सप्ताहेन सप्ताहेनोपर्युपरि लेपः । अश्मन्तकादिना रसक्रिया । अश्मन्तक इन्द्रकः । सुबोधम् ॥

अम्लोषितं पित्ताभिष्यन्दवदुपाचरेत् । पिल्लसाधनचेक्षेत ॥

अम्लोषिते पित्ताभिष्यन्दवदुपचारः । पिल्लसाधनचात्रैव वक्ष्यमाणमीक्षेताम्लोषितोपचरणाद् । इत्युक्ता अक्षिपाकाः ॥

पिल्ला अष्टादशका इत्याह ॥

पित्तकफरक्तनिचयोत्क्लिष्टवर्त्मपोत्थकीविसारय कुकूणकपक्ष्मोपरोध पूयालसशुष्काक्षिपाकाल्पशोफाम्लोषिता वातवर्ज्याश्च स्यन्दाधिमन्था इत्यष्टादशदीर्घकालानुवार्तिनो रोगाः पिल्लसञ्ज्ञाः ।

पित्तोत्क्लिष्टवर्त्म कफोत्क्लिष्टवर्त्म रक्तोत्क्लिष्टवर्त्म निचयोत्क्लिष्टवर्त्म पोथकीविसारयो विसवर्त्म कुकूणकः पक्ष्मोपरोधः पूयालसः शुष्काक्षिपाकः अल्पशोफः अम्लोषितः वातवर्ज्यो स्यन्दाश्चाधिमन्थाश्च पित्तस्यन्दः कफस्यन्दः रक्तस्यन्दः पित्ताधिमन्थः कफाधिमन्थः रक्ताधिमन्थश्च इत्यष्टादश रोगा दीर्घकालानुवर्तिनः सन्तः पिल्लसञ्ज्ञा लभन्ते ॥

एषा क्रिया यथास्वमुपदिष्टैव । पुनश्च पिल्लीभूतानां सामान्येनोपदिश्यते ॥

यथा पिल्लसञ्ज्ञितानां पित्तोत्क्लिष्टवर्त्मादीनां क्रिया चिकित्सा यथास्वमध्यायेषूक्तैव । पिल्लीभूतानां तु दीर्घकालानुवर्तिनां सामान्येन क्रिया साधारणी चिकित्सोच्यते ॥

अथ पिल्लाक्षिरोगिणं स्नेहयित्वा वामयेत् । कृतक्रमस्य सिराव्यधस्ततो विरकः । कृतविरेकस्यवर्त्मनीलिखेत् । सकृल्लेखनादशुद्धांपुनर्लेखयेत् जलौकोभिश्च ग्राहयेत् ।

अथेत्यादि सुबोधम् । वमनादनुकृतक्रमस्य विहितपेयादिक्रमस्य सिराव्यधः ॥

प्रियङ्गुलोध्रपत्मकेसरचन्दनमधुककल्केन समाक्षिकेण लिम्पेत्... । तुवरिकाफलत्रिकरोचना क्वाथेन मधुमता सायंप्रातः सदा प्रक्षालनमञ्जनान्ते च कषायवृक्षपल्लवकषायेण ॥

प्रियङ्ग्वादिना बिलात्को बहिर्लेपः । तुवरिकादि क्वाथेन माक्षिकवता सायंप्रातश्च प्रक्षालनम् अञ्जनान्ते च कषायवृक्षाणां मन्सरोकानां तुवरिकादीनां पल्लवकषायेण प्रक्षालनम् ॥

तैरेव पत्रैरुष्णप्रियतायामन्तरान्तरा स्वेदः ।

उष्णप्रियतायां मुष्णाभिलाषे तैरेव कषायवृक्षपत्रैरन्तरान्तरा कदाचित् स्वेदः ॥

तुत्थस्य पलं विंशतिश्च श्वेतमरिचानि धान्याम्लपिष्टानि तत्पलैस्त्रिंशता ताम्रपात्रे समालोडितानि बहुदर्पणाग्रेपि पिल्लानां परममाश्च्योतनम् ।।

तुत्थस्य पलमित्यादि सुगमम् । वापलै रिति धान्याम्लपले ।।

अञ्जनं चास्याम्रधात्रीपुष्पतिलपर्णी कल्केन च वर्तिः । हरीतक्यादकीधात्री षड्गुणम्भस्यष्टभागावशेषं क्वाथयेत् पुनश्च परिस्राव्यादार्वीमलेपाद्रसक्रियेयं पिल्लाक्षिरोगिणी । पलाशशाखास्वरसे क्वाथ्यमाने च हस्त्युष्टीररजोऽद्यात तत्घनीभूतं शीतमञ्जनम् । सुरसारसपिष्टैर्वा वचाल्देरदारुभिः । गोपित्तपिष्टाभ्यां वा व्योषरसाञ्जनाभ्याम् ।।

अस्य च पिल्लाक्षिरोगिण आम्रादिकल्केन वर्तिरञ्जनम् । हरीतक्यादिना रसक्रिया बोधा । पलाशेत्यादिना लेहोऽञ्जनम् । वचादिभिः सुरसाया रसेन पिष्टैरञ्जनम् । सरसा मूर्वा । गो पित्तेन पिष्टाभ्यां व्योषरसाञ्जनाभ्यां वाञ्जनम् ।।

हरितालसौवीरकाञ्जनसमांश तां ताम्रचूर्णमञ्जनम् । परिपेलवकासीसहरिद्राद्वयसर्षपप्रियङ्गुतगरपिप्पलीकल्केन ताम्रभाजनमन्तर्लेपयित्वा सौवीरककुम्भेऽधोमुखं सप्ताह वासयेत् ततो गुळिकाश्चूर्णं वा कुर्यात् ।।

हरितालादिकं भागस्ताम्रं भाग इति चूर्णाञ्जनम् । परिपेलवादिना गुळिकाथवा चूर्णाञ्जनम् । सौवीरकसतुषयवजातं काञ्जिकम् ।।

तुत्थगैरिकचूर्णं छागलीपयः पिष्टं गुळिका प्रत्यञ्जनम् । चूर्णं एववा डिण्डीरोदक भावितः । स एववा तदाप्लुतो नेत्राश्च्योतन मिति । भगतिचात्र ।।

तुत्थादिकं प्रत्यञ्जनम् । अथवैव तुत्थ गैरिकयोश्चूर्णो डिण्डीरोदकभावितोऽञ्जनम् । स एववा डिण्डीरोदकभावितः तुत्थादिचूर्णो डिण्डीर कनाप्लुत आश्च्योतनम् । गतानुगतिकः ।

वर्त्मावलेखनद्रुतस्तद्वच्छोणितमोक्षणम् ।
पुनः पुनर्विरेकं च पिल्लरोगातुरो भजेत् ।।

बहुशो वर्त्मावलेखादिकं पिल्लरोगेणातुरो भजेत ।।

पूयालसेत्वशान्तेन्तदाह सूक्ष्मशलाकया ।।

पूयालसेतु पिल्लीभूते अशान्ते सर्वक्रिया णामन्तेऽरसान्ते शलाकया दाहो विधेयः ।।

नेत्ररोगानुपसंहरन्नाह चतुर्णवतिरि त्यादिभिः ।।

चतुर्णवतिरित्यक्ष्णोर्हेतुलक्षणसाधनैः ।
परस्परमसङ्कीर्णा कार्त्स्न्येनगदितागदाः ।।

इत्येवं तत्रोक्तैरध्यायैरक्ष्णोर्गदाश्चतुर्णवति परस्परमसङ्कीर्णा हेत्वादिभिः कार्त्स्न्येन निर्देशपतया गदिता उक्ताः । तेचकृच्छ्रोन्मीलनिमेष वातहत कुम्भीका पित्तोत्क्लिष्ट पक्ष्मशात पोत्थकी कफोत्क्लिष्ट लगणोसङ्ग रक्तोत्क्लिष्टार्शोऽञ्जननामिका बिसवर्त्मोत्सङ्गक्लिष्टवर्त्म श्याववर्त्म श्लिष्टवर्त्म सिकतावर्त्म कर्दमबहळ

कुकूणकपक्ष्मोपरोधालजर्वर्मा अलजरक्तास्र- वोपनाह रक्तास्रवपर्वणी पूयास्रवपूयालसालजी कृमिग्रन्थिशुक्तिका शुष्काक्षिपाकाधिमन्थ पिष्टक सिरोत्पात सिराहर्ष सिराजाल शोणितार्मार्जु- नप्रस्तार्यर्मास्नायर्माधिमांसार्माणि पर्वणी स्रावशुक्र - शुक्रशुक्लाजकासिराशुक्र तीव्रवेगवाततिमिर वा- तकाच वातलिङ्गनाश पित्ततिमिर पित्तका च पित्तलिङ्गनाश गम्भीरा हृस्वा पित्तविदग्धा कफतिमिर कफकाच कफलिङ्गनाश रक्तातिमिर रक्तकाच रक्तलिङ्गनाश संसर्गतिमिर संसर्गका च संसर्गलिङ्गनाश सन्निपाततिमिर सन्निपातका च सन्निपातलिङ्गनाश नकुलान्ध्यदोषान्ध्योष्णवि- दग्धाम्लविदग्धा धूमरोपमार्गिकलिङ्गनाश वा ताभिष्यन्द वाताधिमन्थ हताधिमन्था न्यतो वातवातपर्यय पित्ताभिष्यन्द पित्ताधिमन्थ क फाभिष्यन्द कफाधिमन्थ रक्ताभिष्यन्द रक्ताधि- मन्थ शुष्काक्षिपाक सशोफालसशोफाक्षिपाका- त्ययाम्लाध्युषिता इत्यष्टसप्ततिरुक्ताः ॥

सर्वदा च निषेवेत स्वस्थोऽपि नयनप्रिय ।
पुराणयवगोधूम शालिषष्टिककोद्रवान् ॥
मुद्गादीन्कफपित्तघ्नान्भूरिसर्पिःपरिप्लुतान्।
शाकं चैव निमांसं जाङ्गलं दाडिम सिताम् ॥
सैन्धवं त्रिफलाद्राक्षा वारिपाने च नाभसम् ।
आतपत्रं पदत्राणं विधिवद्दोषशोधनम् ॥

यस्तु नयनप्रिय स सर्वदा षट्स्वप्यृतुषु स्वस्थोऽप्यपिशब्दादक्षिरोगवानपि पुराणयवादिक सेवेत । एवंविधं च शाकं कफपित्तघ्नं भूरिसर्पिःपरिप्लुतं च सेवेत ॥

वर्जयेद्वेगसरोधमजीर्णाध्यशनानि च ।
क्रोधशोकदिवास्वप्नरात्रिजागरणातपान् ।
विदाहिविष्टम्भकरं यच्चेहाहारभेषजम् ॥

वेगसरोधादिक वर्जयेत् । यच्चेहादिक विदाहकर विष्टम्भकरं च तदपि वर्जयेत् ॥

द्वे पादमध्ये पृथुसन्निवेशे
सिरे गते ते बहुधा च नेत्रे ।
ताम्रक्षणोद्वर्तनलेपनादीन्
पादप्रयुक्तान् नयनं नयन्ति ॥

प्रत्येक पादमध्ये द्वे सिरे पृथुसन्निवेशे विस्तीर्णरूपे न तु वर्तुले ये सिरे ते नेत्रे बहुधा गते । ता पादयोर्गतस्ताः सिरा पादप्रयुक्तान् म्रक्षणादीन् नेत्रं नयन्ति । म्रक्षणम् अभ्यङ्गः ॥

मलोष्णसङ्घट्टनपीडनाद्यै
स्ता दूषयन्ते नयनानि दुष्टाः ।
भजेत् सदा दृष्टिहितानि तस्मा
दुपानदभ्यञ्जनधावनानि ॥

इत्युत्तरे विंशोऽध्यायः ॥

ताश्च मलादिभिर्दुष्टा नयनानि सर्वेषां दूषयन्ति । यत एवमतो हेतोरुपानदादीनि दृष्टिहितानि सदा भजेत् । उपानहौ पादुके । धावनं प्रक्षालनम् ॥

इतीन्दुविरचितायां-
मष्टाङ्गसङ्ग्रहव्याख्यायामुत्तरे
विंशोऽध्यायः ॥

शब्दवाहि सिरासंस्थे शृणोति पवने मुहु ।
नादाननकस्माद्विविधान् कर्णनादं वदन्तितम् ॥

शब्दवहासु सिरासु कारणविशेषवशात् स्थिते पवने पुरुषो मुहुः प्रतिक्षणं मकस्मात् का कारणं विना विविधानसतो नादान् शृणोति । त कर्णरोगं कर्णनादमित्याचार्या वदन्ति ॥

श्लेष्मणानुगतो वायुर्नादो वासमुपेक्षित ।
उच्चैः कृच्छ्राच्छ्रुतिं कुर्यात् बधिरत्वं क्रमेण च ॥

श्लेष्मणा वायुरनुगत उच्चैः कृच्छ्राच्च श्रुतिं कुर्यात् । अथवा कर्णनादाख्यो रोग उपेक्षितः सन्नेव कुर्यात् । उभयथापि क्रमेण च विस्तरमयं रोगं सम्मः ॥

वातेन शोषितः श्लेष्मा स्रोतोलिम्पेत्तदा भवेत् ।
रुग्गौरवं पिधानं च स प्रतीनाहसंज्ञितः ॥

कारणविशेषवशाद्वातेन श्लेष्मा शोषितः सन् कर्णस्रोतोलिम्पेत्तत स्रोतोलेपात् रुगगौरवादिकं भवेत् । स एवं भूतो रोगः संज्ञया प्रतीनाहः ॥

कण्डूशोफौ कफाच्छ्रोत्रे स्थिरा तत्संज्ञयास्मृतौ ।

कफाद्धेतोः श्रोत्रे स्थिरौ कण्डूशोफौ तौ तत्संज्ञया कण्डूशोफाविति नाम्ना स्मृता वाचार्यैः । एकः कण्डूः द्वितीयः शोफः ॥

कफो विदग्धः पित्तेन सरुजं नीरुजं तथा ।
घनपूतिं बहुक्लेदं कुरुते पूतिकर्णकम् ॥

पित्तेन कर्णकफो विदग्धः विदाहावस्थां नीतः पूतिकर्णाख्यं रोगं कुरुते । किं भूतमित्याह । सरुजं वा नीरुजं वा उभयथापि घनपूतिं बहुक्लेदम् ।

वातादिदूषितं श्रोत्रं मांसासृक्क्लेदजान्जनम् ।
खादन्तो जन्तवः कुर्युस्तीव्रा स क्रिमिकर्णकः ॥

जन्तवः क्रिमयः खादन्तो भक्षयन्तः प्रकरणात् कर्णं नवैव सम्भवात्तीव्रां रुजं कुर्युः । स रोगो नाम्ना क्रिमिकर्णकः । किं भूता जन्तव आह । वातादिभिः स्वकारणकुपितैर्दूषिते ये श्रोत्रसम्भविनी मांसासृजी तयोः क्लेदस्तज्जा ॥

श्रोत्रकण्डूयनाज्जाते क्षतेस्यात् पूर्वलक्षणः ।
विद्रधिः पूर्ववच्चान्यः शोफोऽर्शोऽर्बुदमीरितम् ॥

श्रोत्रस्य कण्डूयनेन क्षते व्रणे जाते सति पूर्वलक्षणः क्षतजः विद्रध्याख्यो रोगः स्यात् । अन्यश्च विद्रधिः पूर्वनिर्दिष्टो निदानोक्तहेतुना भवत्येव च विद्रधेरेव भेदान्तरं तेन संख्याया न प्रविशति । शोफश्च य कर्णे स नाम्ना शोफः अर्शः ईरितः द्विविधोऽर्बुदं एवमेतौ द्वौ रोगावेकैकश्च पृथक् सहपञ्चदश तु भवन्ति ॥
तेषु रुक्पूतिकर्णत्वं बधिरत्वं क्रमेण च ।

तेषु पानन्तरोक्तेषु विद्रध्यर्शोऽर्बुदेषु क्रमेण यथासंख्यं रुगादित्रयं जायते । * बधिरत्वं च जायते । इति च पाठः ॥

गर्भे निलात् सङ्कुचिता शष्कुली कुचिकर्णकः ।

गर्भावस्थायामनिलाद्धेतोर्या कर्णशष्कुली सङ्कुचिता स रोगो नाम्ना कुचिकर्णकः ॥

# एकविंशोऽध्यायः ।

## कर्णरोगविज्ञानीयम् ।

नेत्ररोगाणां निर्णयं कृत्वोर्ध्वाङ्गचिकित्साप्रसङ्गेन कर्णरोगाणां हेत्वादिकं प्रदर्शयितुमध्याय आरभ्यते ॥

अथात कर्णरोगविज्ञानीयं नामाध्यायं व्याख्यास्याम । इतिह ॥

प्रतिश्यायजलक्रीडाकर्णकण्डूयनैर्मरुत्
मिथ्यायोगेन शब्दस्य कुपितोऽन्यैश्च कोपनैः ।
प्राप्य श्रोत्रसिराः कुर्याच्छूलं स्रोतसि वेगवत्
अर्धावभेदकं स्तम्भं शिशिरानभिनन्दनम् ॥
चिराच्च पाकं पक्वं तु लसीकामल्पशः स्रवेत्
श्रोत्रं शून्यमकस्माच्च स्यात् सञ्चारविचारवत् ।

प्रतिश्यायादिभिर्हेतुभिरन्यैश्च निदानोक्तैर्मरुद्वायुः कुपितः श्रोत्रसिराः प्राप्य स्रोतसि वेगवच्छूलमर्धावभेदकादिकं च कुरुते । प्रतिश्यायो नासारोगेषु वक्ष्यते । अर्धावभेदकः शिरोरोगेषु । शिशिरानभिनन्दनं शीतद्वेषः । चिराच्च पाकं श्रोत्रे स्यात् । पक्वं च श्रोत्रमकस्माद्विना कारणं सञ्चारविचारवत् स्यात् । क्षणं सञ्चारभावं क्षणं विचारमित्यर्थः । इति वातकर्णरोगः ॥

शूलं पित्तात् सदाहोषा शीतेच्छा श्वयथुर्ज्वरः
आशुपाकः प्रपक्वे च सपीतलसिकास्रुतिः ॥
सा लसीका स्पृशेद्यद्यत्तत्तत्पाकमुपैति च ।

पित्तात् स्वहेतुकुपितात्श्रोत्रस्रोतसि दाहादियुक्तं शूलं स्यादिति सम्बन्धः । आशुपाकादिकं चार्थान्तरविशेषणं बोद्धव्यम् । सुबोधम् । इति पित्तकर्णरोगलिङ्गम् ॥

कफाच्छिरोहनुग्रीवागौरवं मन्दता रुजः ।
कण्डूः श्वयथुरुष्णेच्छा पाकाच्छ्वेतघनस्रुतिः ॥

कफादिति । प्रकरणात् कर्णरोगे शिरोगौरवादिकं लिङ्गम् ॥

करोति श्रवणे शूलमभिघातादिदूषितम् ।
रक्तं पित्तसमानार्ति किञ्चिद्वाधिकलक्षणम् ॥

अभिघातादिना रक्तस्य कोपस्तेन दूषितं रक्तं श्रवणे कर्णे शूलं करोति । तच्च रक्तकर्णरोगः पित्तकर्णरोगसमानलिङ्गो भवति । सतोऽपि पित्तात् किञ्चिदधिकलक्षणमिति रक्तकर्णरोगः ॥

शूलं समुदितैर्दोषैः सशोफज्वरतीव्ररुक् ।
पर्यायाद्दुष्णशीतेच्छं जायते श्रुतिजाड्यवत् ॥
पक्वं सितासितारक्तघनपूयप्रवाहि च ।

समुदितैः सन्निपतितैर्दोषैर्वातादिभिः शोफादियुक्तं शूलं श्रोत्रे जायते । पर्यायेण निरन्तरावृत्त्या उष्णेच्छा शीतेच्छा च यस्मिन् शूले तत्पर्यायादुष्णशीतेच्छम् । श्रुतिजाड्यवत् कर्णबाधिर्ययुक्तम् । अथवा पर्यायादेव श्रुतिजाड्यवच्च । तच्च श्रोत्रं पक्वं सितासितादिगुणपूयप्रवाहि भवतीति सान्निपातकर्णरोगः ॥

वन्त्रादिते कर्णे स्वेदार्थं प्रणयेत् । पुनः पुनश्च नाडीस्वेदान् पिण्डस्वेदांश्च । वातव्याधिप्रतिश्यायार्दितविधानं च सनिरूहानुवासनं कुर्यात् ॥

श्रेयस्यादिभिस्तिलयुक्तैः कर्णलेपः । श्रेयसी हस्तिपिप्पली । सुबोधम्

परिहार्याणि च परिहरेद्विशेषतः प्रवातं शीताम्बुपानं शिरःस्नानं च ॥

परिहार्याणि वातकोपनानि परिहरेत् । प्रवातादीनि विशेषेण । प्रकृष्टो वातः प्रवातः । इति वातजे कर्णरोगे ॥

पित्तजे तुशूले प्रातः प्रातः शर्करायुतं सर्पिः पाययेत् । तत स्निग्धं विरेचयेत् । द्राक्षामधुकसिद्धं स्तन्यं कर्णपूरणं प्रयुञ्जीत । माक्षिकं वा । मधुकपद्मकल्कस्तन्यसिद्धं वा सर्पिः । सितामधुकखर्जूरमृद्वीकाभिर्वा क्षीरेक्षुरसमिश्रैः पाचितमभ्यञ्जनस्य कर्णपूरणे शूलदाहघ्नम् ॥

पित्तजे कर्णशूले प्रातः प्रातः शर्करया युतं सर्पिरा स्निग्धत्वलाभात् पाययेत् । सुबोधम् । माक्षिकं केवलम् । सितादिभिः मिश्राद्यैः तैलं पाचितमभ्यञ्जनादिभिः शूलदाहघ्नम् ॥

मधुककुटज षोडशगुणेनाम्भसाष्टावशेषं साधयित्वा तेन तैलार्द्धकुडवमष्टगुणक्षीरं यष्टीमधुकोशीरशारिवाकाकोलीजीवकानन्तामृणालमञ्जिष्ठालोध्रचन्दनविसगर्भं पचेत् । तच्च पूर्ववत् प्रणयेत् ॥

मधुकादिना तैलं पूर्ववत् प्रणयेदित्यस्य ह्यादिषु । तेनेत्यष्टभागशेषेण यष्टीमधुकादिगर्भेण । अनन्ता दूर्वा ॥

एषामेव च कल्केन सघृतेन कर्णं परितो लेपयेत् । स्वेदयेच्च । तथा क्षीरसर्पिरस्य शिरोऽभ्यङ्गश्च । एवमप्यनुपशमे तु पुनर्विरेकः

एषामित्यनन्तरोक्तानां यष्टीमधुकादीनाम् । क्षीरसर्पिर्यत् क्षीरं मथित्वा गृह्यते । सुबोधम् । इति पित्तजे कर्णरोगे ॥

कफजे पिप्पलीविपक्वं घृतमथवा सक्षौद्रं पाययित्वा तं वामयेत् । ततस्तीक्ष्णं धूमं पाययेत् ॥

कफजे कर्णशूले पिप्पलीविपक्वमपक्वमेव वा सक्षौद्रं सर्पिः पाययित्वा तमातुरं वामयेत् । तीक्ष्णो धूमः सूत्रोक्तः ॥

कर्णं चास्य पूरयेत् सरलदेवदारुहिंस्रापटोलपत्रसुरसासिद्धेन तैलेन । देवदारुपिप्पलीमालतीपत्रकाककल्कासिद्धेन वा । लोध्रखदिरसारमनःशिलाद्विहरिद्राकुष्ठातिविषैलाक्वाथकल्कासिद्धेन वा । रसाञ्जनमार्कवजयन्तीशिग्रुलशुनार्द्रकमुस्ताम्लकदलीनां वा पृथक् समस्तानां वा रसेन मधुना वा रसोनतैलेन वा । तथा शूलशोफगौरवाणि प्रशाम्यन्ति ।

अस्य च श्लेष्मकर्णरोगिणः सरलादिसिद्धेन वा देवदार्वादिसिद्धेन वा लोध्रादिसिद्धेन वा

बाधिर्यं च बालवृद्धक्षीणकासशोषिणा चिरोत्थितं च वर्जयेत् ॥

बालादीनां बाधिर्यमसाध्यम् । सर्वस्य च चिरोत्थितं बहुकालप्ररूढं बाधिर्यं यत्तद्साध्यम् ।

इतरत्तु स्नेहस्वेदनस्यशिरोवस्तिवस्तिकर्मप्रभृतिभिर्दोषानुबन्धमवेक्ष्य साधयेत् ॥

इतरत्त्वनन्तरोक्तलक्षणविपरीतं बाधिर्यं दोषानुबन्धस्वरूपानतिक्रमेण नस्यादिभिः साधयेत् ॥

तत्र प्रागेव पुराणसर्पिषा वा वातहरतैलेन वा स्निग्धं स्नेहेनैव विरेचयेत् । कृतसंसर्जनस्य पुनः स्निग्धस्य शोणितमपहरेत् । कर्णात्तत्र जलौकोभिस्ततो वस्तिकर्ममूर्धतैलनस्यधूमान् कर्णपूरणं च शीलयेत् ॥

तत्रेति बाधिर्ये । संसर्जनं पेयादिक्रमः । मूर्द्धतैलमभ्यङ्गादिभेदेन चतुर्विधं सूत्रे प्रदर्शितम् ॥

तरुणबिल्वफलानि गोमूत्रेण क्वाथयेत्तेन क्वाथेन सितामधुकबीजकरञ्जकल्केन च पयोयुक्तं तैलं पाचयेत् । तत्तैलमुष्णं शीते बिल्वक्वाथे प्रक्षिप्य मन्थयेत् यावत् पिण्डीभूतमुद्धृत्य चैतत्पुनरन्यत्र बिल्वोदके मन्थयेत्। ततश्चोद्धृत्याष्टगुणे पयसि मधुकगन्धचन्दनगर्भं साधितमाशु कर्णपूरणाद् बाधिर्यं नाशयति ॥

तरुणस्याचिरकालप्ररूढस्य बिल्वस्य फलानि गोमूत्रेण क्वाथयेत् । तेनेति क्वथितगोमूत्रेणेत्यादि तैलपाकविधिः । शेषं सुबोधम् ॥

तिलान् नवमल्लकान् वस्त्रबद्धान् वहन्तीष्वप्सु रात्रिमुषितान् दिवा शोषयेत् पञ्चरात्रम् । एवं गते पञ्चरात्रे मधुयष्टिकाक्षीरकाकोलीमञ्जिष्ठापञ्चमूलदेवदारुशताह्वाजीवककाथिते पयसि पञ्चाहमेव वासयेच्छोषयेच्च । ततोऽनेनैव क्षीरेणैषामेव च द्रव्याणां चूर्णमात्रया युक्तान् प्रपीडयेत् । तत्तैलं नीलोत्पलानन्ताचन्दनागरुमधुकजीवककाकोलीसुनिषण्णकमूलकल्कैः चतुर्गुणेन पयसा पचेत् । एतदस्य कर्णपूरणे शिरसि चाभ्यञ्जने प्रणीतमाशु शूलनादबाधिर्याणि सर्ववातविकारांश्च पित्तानुबन्धानपोहति भग्नास्थिसन्धानजननं च ।

तिलानित्यादिना तिलभावनं सुबोधम् । एवमिति प्रतिदिनं शोषणं च वहदम्बुवासनं च पञ्चरात्रम् । ततस्तथैव मधुयष्ट्यादिक्वथितपयसि वासनं शोषणं च पञ्चरात्रमेव । अनेनैवेति यष्ट्यादिशृतेन । एषामेव चेति यष्ट्यादीनां चूर्णेन युक्तान् तिलान् ॥

शुष्कमूलकभस्मक्षारद्वयहिङ्गुशुण्ठीमिश्रिवचाकुष्ठामरदारुसौभाञ्जनभूर्जग्रन्थिमुस्तालवणत्रये सोद्भिदैस्तैलं शुक्तकदलीबीजपूरकरससंयुक्तं सिद्धं शूलनादबाधिर्यकण्डूशोफक्लेदोपदेहकृमिपूतिकर्णेषु ॥

शुष्कमूलकभस्मादिभिर्द्रव्यैः शुक्तादिभिश्च द्रवैस्तैलं सिद्धं शूलादिषु दृष्टशक्ति ॥

वातशूल कर्णरोगे प्रथममुक्तम् । स्विन्न च पाळीशोष तिल्वादिफरकेनोद्वर्तयेत् ॥

उद्वर्तित च मधुकपयस्याशतपुष्पाश्वगन्धाकल्काष्टगुणवाजिगन्धाबृहत्यर्भकक्वाथक्षीरसाधितेन तैलेनाभ्यज्यात् । शतावर्यश्वगन्धैरण्डपयस्याजीरकक्षीरसिद्धेन वा ॥

उद्वर्तित च पाळीशोष मधुकादिभिः सिद्धेन तैलेनाभ्यञ्ज्यात् । शतावर्यादिसिद्धेन वा ॥

गोधाप्रतुदविष्किरानूपोदकमांसवसामज्जानः सर्पिस्सर्षपतैलं च यथालाभं सगृध्याकोलर्कलातिबलानन्ताविदारिगन्धाजलशूकमधुरवर्गप्रतीवापं विपचेदयमभ्यङ्गः पाल्या परं मांसजननः ॥

गोधेत्यादिनाभ्यङ्गाय तैलम् । अर्कोऽर्कः मन्दारः । अनन्ता दूर्वा यापश्च । जलशूकः शैवालम् ॥

एवमपि तु या क्षीयते पाळी तस्या यद्दुष्टं तच्छित्त्वा विधिवत् सन्धाय यथोक्तेन क्रमेणोपचरेत् ॥

एवमनन्तरोक्तेनप्रकारेण चिकित्स्यमाना या पाळी क्षीयते तस्याः पाळ्या यद्दुष्टं दृश्यते तच्छित्त्वा शेषं विधिवत् सन्धाय यथोक्तेन पाळीशोषक्रमेणोपचरेत् ॥

तन्त्रिकामपि चैवमेव नस्याभ्यङ्गादिभिर्यापयेत् ॥

तन्त्रिकां याप्यैवोक्तां तां पाळीशोषप्रकारेणैव प्रथमं चिकित्सेत्याप्यत्वं च नस्यादिभिर्यापयेत् ॥

परिपोटकेऽप्ययमेव विधिः । तथा मधुकक्षीरमञ्जरीसैन्धवाश्वगन्धादेवदारुमूलकावल्गुजफलमूलमप्रच्छिष्टैः सक्षीरैर्महास्नेह सिद्धोऽभ्यङ्गः । तिलमधुकमपौण्डरीकासिद्धार्थकन्यूतक्षीरकृतयोलकाक्रियोपनाहः ॥

अयमेवेति पाळीशोषोक्तः । तथेति परिपोटके ॥

उत्पाते जलौकोभिरपनीतरक्ते शीतैः प्रदेहः । तिलमधुकशारिवोत्पललोध्रकदम्बमलाम्रजम्बूपल्लवैस्सधान्याम्लं तैलं साधितमभ्यङ्गः । तथा क्षीरसर्पिर्विसर्पोक्तानि च घृतानि ॥

विसर्पोक्तं घृतानि चेत्यन्तमुत्पाताख्ये । रक्ते हृते शीतैश्चन्दनादिभिः प्रलेपः शारिवादिभिः कल्कितैर्धान्याम्लसहितं साधितं तैलमभ्यङ्गश्च । तथा क्षीरोत्थं घृतं विसर्पे यानि घृतान्युक्तानि तानि च हितानि ॥

उन्मन्थे तीक्ष्णः शिरोविरेकः । तिलसर्षपलोध्रहरिद्राद्वयैरुद्वर्तितायाः कर्णपाल्याः स्थालीसतमालैलाकट्फलरसाञ्जनैर्लेपः । सालपर्ण्यश्वगन्धार्कसैन्धवावल्गुजजीजसुरसलाङ्गलिकाभिर्गोधाकुळीरवसायुक्तं तैलं विपक्वमभ्यञ्जनम् । तैलमेव वा पटोलकटुरोहिणीरसाञ्जनशिरीषैः ॥

पटोलादितैलान्तमुन्मन्थाख्ये । तैलमेवेत्येवकारेण पटोलादौ वसाप्रतिषेधः ॥

सम्भवति । सर्वे सर्वे प्रकारैर्दर्शयितुमशक्यः ॥

समासतस्तु पञ्चदश कर्णसन्धयःप्रायोनामानुगतसस्थानस्थानविशेषतया सम्भवन्ति ॥

समासतस्तु छिन्नकर्णसन्धयः पञ्चदश वैद्यघटनीया सम्भवन्ति । कथमित्याह । प्रायो बाहुल्येन स्वनामार्थानुगतसस्थानविशेषतया स्वनामानुगतस्थानविशेषतया च । संस्थानमाकृतिः । स्थान प्रदेश । प्रायोग्रहण व्यभिचारसूचनार्थम् ॥

तद्यथा । पृथुलायतसमोभयपालीश्च क्रनेमि ॥

तयेत्यादिना त एव सन्धयः पञ्चदशोच्यन्ते । कर्णेतावदेकापाळीभवति । सा छिन्ना सतीद्वे सम्पद्यते । एका गण्डलग्ना । द्वितीयाश दुल्यवद्धा । एव स्थिते एक सन्धिश्चक्रनेमिनामा भवति । तस्य लक्षण पृथुले चायते स मेनिम्नोन्नतरहिते पाली यस्यसन्धे स तथोक्त । रथचकेहि नेम्याख्य बाह्यवृत्तिकाप्रमेतरूपमेवभवति ॥

वृत्तायतसमोभयपालिरुत्पलभेदक ॥

द्वितीयोऽद्युत्पलभेदाख्य । तस्य लक्षण वृत्ते परिवर्तुळे आयते दीर्घे समे निम्नोन्नतरहिते पाळी यस्य । वृत्ते हि भग्नमुत्पलमाकृत्यैव भवति ॥

अभ्यन्तरदीर्घपालिः कवाटः ॥

तृतीय सन्धि कवाटाख्य । तस्यलक्षणमभ्यन्तरागण्डनिवद्धा पाली शष्कुली बाह्यपाल्यपेक्षया दीर्घा यस्य स तथोक्तः । अत्रनामानुगतत्वे प्रायोग्रहणम् ॥

विपरीतोर्द्धकवाटः

चतुर्थोऽर्द्धकवाटाख्य । तस्य लक्षण कवाटलिङ्गवैपरीत्यम् ॥ अत्र हि बाह्याशष्कुल्यवबद्धापाळी दीर्घा भवति । कवाटेद्वारपर्भो ।

ह्रस्ववृत्तसमोभयपालिर्वल्लूरक ॥

पञ्चमोवल्लूराख्य तस्यलक्षणमुभे अपि पाळीह्रस्वे स्तोकलम्बे वृत्ते वर्तुळे परस्पर च समे । वल्लूराख्या हि शुष्यन्मासपेश्याः । व्याधाङ्गनास्वेवविधा एव दृश्यते ॥

अणुस्थूलसमनिपमपालिर्व्यायोजिमः ।

षष्ठोव्यायोजिमाख्य । तस्य लक्षण एकापाल्यणुर्ह्रातितनु । द्वितीयास्थूलातीवघना च । एकासमानिम्नोन्नतरहिता । द्वितीयातद्विपरीता यस्यसतथोक्त । अस्यार्थे प्रायोग्रहणम् ॥

बाह्यपालिर्गण्डाधार ॥

सप्तमोगण्डाधाराख्य । तस्यलक्षण बाह्यशष्कुल्याश्रया एकैवपालिर्गण्डमूलछिन्नत्वाद्यस्यतस्य हि वन्ये गण्डएवाधारो द्वितीयपाल्यभावात् ॥

अतोविपरीतस्त्वासङ्गिम ॥

दुःखवर्द्धने जम्ब्वाम्राश्मन्तकपत्रक्वाथ परिषिक्तां कर्णपाली तैलेनाभ्यज्य यष्टीमधुरुहरिद्राप्रपौण्डरीकमञ्जिष्ठा चूर्णेनावचूर्णयेत् । लाक्षाविडङ्गपक्वेन तैलेनाभ्यञ्जयेत् ॥

दुःखवर्द्धनाख्ये प्रथमं जम्ब्वाम्रादिक्वाथपरिषिक्तस्य तैलेनाभ्यञ्जनं ततो यष्ट्यादिचूर्णेनावचूर्णनं लाक्षाविडङ्गाभ्यां पक्वतैलमभ्यञ्जनं च हितम् ॥

लेहिका पिटकासु कर्णपाल्यां वचाशोणामयपिण्डसिन्धूत्थसुरभीमूत्रपिष्टैः कृमिघ्नैरालिम्पेत् । कुम्भकुम्भीद्रुगुडूचीनाराचवल्याभिर्वा । एभिरेव च सरससमरिचनिम्बपत्रगुग्गुलुसर्षपतैलं सिद्धं लेहिकाव्रणेऽभ्यङ्गः । परिदहने जलजाभिरसृक् स्रावयेत् । शीतैश्च प्रदिह्यात् ॥

लेहिकापिटकासु लिहाख्यासु । सुरभी गवां मूत्रम् । कृमिघ्नानि विडङ्गफलानि । कुम्भादिभिर्वा लिम्पेदिति सम्बन्धः । एभिरित्यनन्तरोक्तैः । सरसशब्देन निम्बत्वचा च परिग्रहः । परिदहने तु लिहाख्या इति प्रकरणात् । जलजा जलौकसः । इत्युक्ता यथोद्दिष्टाः कर्णरोगाः ॥

सर्वेषु च पाल्यारोगेषु स्नेहस्वेदशोधनाभ्यङ्गप्रदेहनस्यासृग्विस्रावणानि यथार्हं प्रयुञ्जीत । प्रकोपकारणानि च परिहरेत् ॥

सर्वेषु चोक्तानुक्तेषु पालीरोगेषु । यथार्हमिति दोषाद्यपेक्षं स्नेहादि प्रयुञ्जीत । सुबोधम् ॥

उत्पन्यमानायां तु पाल्यां सर्जरसापामार्गपटोलनिम्बनिचुलत्वग्भिरालेपः । उत्पन्नायां शिग्रुगन्धाकूपूतीकगोरखराहपित्तगोधाव्रसासर्पिर्भिः । क्षतायां गौरीसुगन्धाऽपामार्गत्वङ्मधूकैः । नष्टायां पाठानन्तातार्क्ष्यशैलेयमार्कैः । दह्यमानायां क्षीरिवृक्षजीवनीयत्वङ्मधुघृतैः । व्रणितायां क्षीरजीवनीयैः । कृशायां गोधावराहवसाभिः । ग्रथितायां ग्रन्थिं पाटयित्वा विलिख्य च कृष्णासैन्धवमधुभिः प्रतिसारयेत् । स्रावत्यां मधुमधुकमधूकमधुपर्णीभिर्लेपः । एभिरेव च यथास्वं स्नेहानभ्यङ्गार्थं प्रकल्पयेत् ॥

उत्पद्यमानायामित्यादिना पाल्यामवस्थाविशेषेषु साधनविशेषः । उत्पुटनं स्फुरणम् । गौरी हरिद्रा । सुगन्धा गन्धनाकुली दह्यमाना दाहयुक्ता । व्रणिता सव्रणा । ग्रथिता ग्रन्थिमती । एभिरेव चान्तरोक्तैरवस्थाविशेषे यथास्वमभ्यङ्गार्थं स्नेहान् प्रकल्पयेत् । उत्पद्यमानायां सर्जरसादिभिरेव । उत्पुटन्त्यां शिग्र्वादिभिरेवेत्येवमादि यथास्वशब्दार्थः ॥

अथ रोगतो बलाद्वा छिन्नं कर्णमनुसन्दध्यात् ।

अथेत्यादिना छिन्नपालीसन्धानविधानम् । अथेति मङ्गले । रोगतः कर्णं छिन्नं स्वस्थमेव वा समासादौ बलात् छिन्नमुभयमप्यनुसन्दध्यात् । तस्मिन् विच्छेदे दोषस्थानविशेषवशात् प्रहारादिगतिविशेषवशाच्चानेकप्रकारो घटनीयः सन्धि

अण्वादिविषमयोस्तु परस्परविपर्ययः॥

येतुपाली अण्वादिविशेषेण विषमे भिन्नस्वरूपे तयो पाल्यो परस्परविपर्ययेण सन्धिः । यत्रैका अणुरपरा स्थूला एका समाऽपरा विषमा तत्राणो सन्धिः तथा विधेया कर्तव्या यथा स्थूलाचाणुर्भवत्यणुश्च स्थूलेसेकीभूता स माभवत्येव समाविषमयोरपि विपर्ययो वाच्य. ॥

यात्वेकैरपाळीस्थूला पृथ्वीस्थिराच स्यात् ता द्विधापाटयित्वोपरिछित्वा सन्दध्यात् ॥

द्विधा पाटितायाः । पाल्या एकैकोभागो मूलेछित्वा शून्ये पाळीमूले योज्य । ततो द्विपार्श्वे सन्दध्यात् ॥

गण्डोत्कृत्तेन वासशोणितेन सानुबन्धेन मांसेन पाळीं कल्पयेत् । यस्य पाळी द्वयमपि नास्ति तस्याप्येष एव विधि । अथ वा समानवयोदोषादे सश्चार्य कर्णपीठ सममध्ये निवेश्य वर्द्धयेत् ॥

सहानुबन्धेन जीवन्मांसस्कारेण वर्तत इति यथोक्त । सुबोधम् ॥

सन्धानविधि. पुनरातुरे ग्रथितकेशान्ते बन्धनमुपधारिते छेद्यभेद्यलेख्यैरुपपन्नैरुपपाद्यकर्णं शोणितमवेक्षेत दुष्टमदुष्टं वेति ॥

आतुरइत्यादिना कर्णसन्धानविधिर्भवति। उपधारिते निश्चितयोग्ये बन्धे वर्णस्यछेद्याद्युपपादनमस्थाने विषये कर्तुं नयाति । दुष्टादुष्टशोणितलक्षणं सिराव्यध उक्तम् ॥

ततो वातदुष्टे धान्याम्लोष्णोदकाभ्या पित्तदुष्टे क्षीरशीतोदकाभ्या श्लेष्मदुष्टे वारुणीसलिलाभ्या प्रक्षाल्य पुनश्चावलिख्यानुन्नतमहीनाविषमं सन्धिं निवेश्य ततो मधुघृताभ्यामभ्यज्य पिचुप्लोतयोरन्यतरेणावगुण्ठ्यसूत्रेण नातिगाढमशिथिलं च बध्वा सिराव्यधोक्तेन कपालस्यवा चूर्णेनावकीर्याचारिकमुपादिशेत् ॥

तत इत्यादि सुबोधम् । पिचुः कार्पासचुर्णकम् । प्लोतवस्त्रम् । सिराव्यधोक्तेनेतिचूर्णेनसम्बध्यते । आचारिकं व्रणवत्तुप्तम् ॥

सन्धिमाश्लिष्यन्तं क्षौमसूत्रेण सीव्येत्। अतिक्षीणपाळिकं वा शोणिताक्तेन पिचुना वेष्टयेत् । व्रणवचैनमुपाचरेत् । त्र्यहाच्चतुरहाद्वा सलिलेन परिषिच्य पिचु सूत्र चापनयेत् । न चाशुद्धरक्तमतिप्रवृत्तरक्तं क्षीणरक्त वा कर्णं सन्दध्यात् ॥

यदि च कर्णसन्धि श्रृप न गृह्णाति तत क्षौमसूत्रेण साव्येत । तस्येत्यशुद्धरक्तस्य वा तिप्रवृत्तरक्तस्य वा क्षीणरक्तस्य वा कर्णं न सन्दध्यात् ॥

तस्य हि स्वयमपि सन्धिर्विश्लिष्यते आध्मायते श्यावतामुपैति पच्यते शुष्यति चिराद्रोहति रूढोऽप्याभरणं न क्षमते । सशोफ-

कुर्याच्चाभ्यञ्जनालेपान् पालीशोषे प्रकीर्तितान्

चर्मचटिकेत्यादि सुबोधम् । चर्मचटिका प्रसिद्धा चर्मपक्षा । एतत् पक्व कपित्थे स्थित कर्णवर्धनम । अत्र च कर्णवर्धनप्रसङ्गे पालीशोषोक्तानभ्यञ्जनादीन् कुर्यात् ।

अनेन च कर्णसन्धानप्रसङ्गेनाथेत्यादिना नासासन्धानकर्माप्युच्यते ।

अथ कुर्याद्वयस्थस्यच्छिन्नांशुद्धस्य नासिकाम् ।
छिन्द्यान्नासा सम पत्र तत्तुल्य च कपोलत ॥
त्वक्पार्श्वे नासिकासन्ने रक्षंस्तच्चतनुता नयेत् ।
सीव्येत् गण्ड तत सूच्यासेवन्यापिचुयुक्तया ॥

अथेत्यानन्तर्ये । छिन्ना नासा नासिका वयस्थस्य प्राप्तवयस शुद्धस्य च वमनादिना पुनरन्या कुर्यात् । कथमित्याह । छिन्द्यादित्यादि । कपोलत छिन्न नासिकासमप्रमाण मासपत्र तत्तुल्यमिति नासाकार छिन्द्यात् । नासिकाप्रत्यासन्ने प्रदेशे त्वक्पार्श्वे रक्षन् सीवनोपयोगाय । तच्च मासपत्र तनुता तत्क्षणेन नयेत । ततोनन्तरमुद्वृत्तपत्र गण्ड व्रणोत्थयो पिचुयुक्तया सीवन्या सीव्येत् । व्रणोत्थवत् पिचुरपि सूच्या ग्राह्येत्यर्थ ।

नासाच्छेदेथलिखिते परिवर्त्योपरि त्वचम् ।
कपोलवध्र सन्दध्यात् सीव्येन्नासा चयत्नत ॥
नाडीभ्यामुत्क्षिपेदन्त सुखोच्छ्वासप्रवृत्तये ।
आमतैलेन सिक्त्वानु पत्तङ्गमधुकाञ्जनै ॥
शोणितस्थापनैश्चान्यै सुश्लक्ष्णैरवचूर्णयेत् ।
ततो मधुघृताभ्यक्त बध्वाऽऽचारिकमादिशेत् ।

अथानन्तर नासाच्छेदे यत छिन्ना नासा तस्मिन् लिखिते कपोलवध्रमुपरित्वच कृत्वा सन्दध्यात् । सन्धाय च नासा यत्नतस्तेन वध्रेण सह सीव्येत् । ता च नासामन्त स्रोतसि सुखेनोच्छ्वासप्रवृत्त्यर्थं नाडीभ्यामुत्क्षिपेत् । अनु चामतैलेनापक्वतैलेन सिक्त्वा पत्तङ्गादिभिरन्यैश्च सूत्रस्थानोक्तैर्मधुकादिभि शोणितस्थापनै सुश्लक्ष्णपिष्टैरवचूर्णयेत् । आचारिक व्रणोक्त आचार ॥

ज्ञात्वावस्थान्तर कुर्यात् सद्योव्रणविधिं तत ।
छिन्द्याद्रूढेधिक मास नासोपान्ताच्च चर्मतत् ॥
सीव्येत्ततश्च सुश्लक्ष्ण हीन सवर्धयेत् पुन ।

ततोनन्तरमवस्थाविशेष ज्ञात्वा सद्योव्रणोक्तमपि विधिं कुर्यात । ततोत्र यदाधिकं मास तच्छिन्द्यात । नासानिकटादुच्छ्रायि यच्छपित चर्मतदाकृतिलाभाय च । ततोन तर सुश्लक्ष्ण कृत्वा सीव्येत । यश्च प्रदेशो हीन स्यात् त पुनरन्येन वध्रलेशेन सन्दध्यात ॥

निवेशिते यथान्यास सद्य च्छिन्नेप्ययं विधि ।

यच्च सद्य एव प्रहारादिना नासिकाच्छिन्न तस्मिन् यथान्यासं पूर्वसन्निवेशानतिक्रमेण निवेशिते अयमेव सीवनादिको विधिः । प्रसङ्गेनोच्यते ।

नाडीयोगाद्विनोष्ठस्य नासासन्धानवद्विधि ।

इत्युत्तरे द्वाविंशोऽध्याय ।

कण्डूसन्तापो ग्रन्थिमात्रं भवति । तत्र च य थास्वं प्रतिकुर्वीत । दुष्टरक्ते च रक्तमवसेच येत् । क्षीणरक्ते स्नेहपानस्वेदनस्यमांसरसाश नाभ्यङ्गैर्बृंहयेत् ॥

नस्य इत्यादि सुबोधम् । तथेत्यादि यथास्वमिति स्वचिकित्सितानतिक्रमेण ॥

सर्वत्र चैवमपि सोपद्रवसन्धौ सन्धि वि-मुच्य पूर्वोपचारोपस्थापितस्मृतिःसम्यक्सन्द-धीतेति । भवतीत्यत्र ॥

एवं च विधीयमानेपि यदि सोपद्रव एव सन्धिर्भवति ततस्तं विमुच्य पूर्वोपक्रमहेतुना स्मरणं पुनस्तथाभावप्रतिषेधाय कृत्वा सम्यक् सन्दधीत । गतानुगतिका ॥

न कर्णे शोफरागादियुक्ते सन्धानमाचरेत् ।
न चासम्यस्यनात्युष्णेना विशुद्धतनोरपि ॥

शोफादियुक्ते कर्णे सन्धानं नाचरेत् , यस्मात्स्याल्पदनशीलस्य । अत्युष्णे इति नेप काले च । अशुद्धतनोरजातवमनादिकस्य ॥

सुरूढं जातरोमाणं श्लिष्टसन्धि समं स्थिरम् ।
सुवर्माणमरोगं च शनैः कर्णं विवर्द्धयेत् ॥

सुरूढत्वादिगुणं कर्णं शनैर्वर्धयेत् । सु वर्मा सुसारः ॥

अन्यथा दाहरुक्तोदशोफाः स्युस्तत्रकारयेत् ।
शीतान्प्रदेहसेकादीन् शुद्धिं च क्लेदनाशिनीम् ॥

अन्यथेति सुरूढत्वादिविपरीते वर्धना दाहादयः स्युः । तत्रेति दाहादिषु शीतान् प्र देहादीन् । क्लेदनाशकरणीं च वमनादिकां शु द्धिं कारयेत् ॥

स्नेहमानूपजं तेन सर्पिर्लाक्षारससमम् ।
साधयेन्मधुरस्कन्धहयगन्धामयूरकैः ॥
पिष्टैर्दशगुणक्षीरं तत्परं कर्णवर्द्धनम् ।
कठिना सरुज क्षामा पाल्यः स्वेदितमर्दिताः ।
अभ्यक्तास्तेन जायन्ते मृदवो नीरुजः स्थिराः ॥

आनूपप्राणिनां स्नेहो मज्जवसाद्यमांसजा तौ । घृतं च तैलं च लाक्षारसं चेति पञ्चक परस्परम० । मधुरस्कन्धः सूत्रोक्तः । हय गन्धा अश्वगन्धा । मयूरकः अपामार्गः । क्षी रं द्रवपचकाय दशगुणम् । कठिनादिगुणाः पाल्यः स्वेदितमर्दिताः सत्यः । तेनेति मधुर-स्कन्धादिपक्वेन स्नेहेनाभ्यक्ताः मृदवो नीरुजो र हिताः स्थिराश्च जायन्ते ॥

बृहतीमश्वरोधावारिशूकमर्कजटाघृतम् ।
माक्षिकं शाङ्खिनी तैलं सम्राह ताम्रभाजने ।
स्थापयेत्तत्परं कर्णमालेपात्पोषयेत् कृशम् ॥

बृहत्यादिकमालेपयोग्यं सम्राह ताम्रभा-जनस्थितमालेपात् कृशं कर्णं परं पोषयेत् । वन्तु रा फणिकारी । वारिशूकः जलशूकम् । शा-ङ्खिसन्धायवतिचायां स्नेहः शङ्खिसनीतैलम् ॥

चर्मचटिकाजलौकोहयगन्धाशवरकन्दकतुल्यम्
माहिषनवनीतयुतं कपित्थगं कर्णवर्धनं साक्षात्

कुर्याच्चाभ्यञ्जनालेपान् पालीशोषे प्रकीर्तितान्

चर्मचटिकेत्यादि सुबोधम् । चर्मचटिका प्रसिद्धा चर्मपक्षा । एतत् पक्व कपित्थे स्थित कर्णवर्धनम । अत्र च कर्णवर्धनप्रसङ्गे पालीशोषोक्तानभ्यञ्जनादीन् कुर्यात् ।

अनेन च कर्णसन्धानप्रसङ्गेनार्थेत्यादिना नासासन्धानकर्माप्युच्यते ।

अथ कुर्याद्वयस्थस्य च्छिन्नाशुद्धस्य नासिकाम् ।
छिन्द्यान्नासा सम पत्र तत्तुल्य च कपोलत ॥
त्वड्मास नासिकासन्ने रक्षस्तत्तनुता नयेत् ।
सीव्येत् गण्ड तत सूच्यासेवन्यापिचुयुक्तया ॥

अथेत्यानन्तर्ये । छिन्ना नासा नासिका वयस्थस्य प्रत्यग्रवयस शुद्धस्य च वमनादिना पुनरन्या कुर्यात् । कथमित्याह । छि द्यादित्यादि । कपोलत छिन्न नासिकासमप्रमाण मासपत्र तत्तुल्यमिति नासाकार छिन्द्यात् । नासिकाप्रत्यासन्ने प्रदेशे त्वड्मास रक्षन सीवनोपयोगाय । तच्च मासपत्र तनुता तत्क्षणेन नयेत् । ततोनन्तरमुत्कृतपक्ष गण्ड प्रणोद्वयो पिचुयुक्तया सीवन्या सीव्येत्। व्रणोद्भवत् पिचुरपि सूच्या ग्राह्येत्यर्थ ।

नासाच्छेदेथलिखिते परिवर्त्योपरि त्वचम् ।
कपोलवध्र सन्दध्यात् सीव्येन्नासां चयत्नत ॥
नाडीभ्यामुत्क्षिपेदन्त सुखोच्छ्वासप्रवृत्तये ।
आमतैलेन सिक्त्वानु पत्तङ्गमधुकाञ्जनै ॥
शोणितस्थापनैश्चान्यैः सुश्लक्ष्णैरवचूर्णयेत् ।
ततो मधुघृताभ्यक्त बध्वाऽऽचारिकमादिशेत् ।

अथानन्तर नासाच्छेदे यत छिन्ना नासा तस्मिन लिखिते कपोलवध्रमुपरित्वच कृत्वा सन्दध्यात् । सन्धाय च नासा यत्नतस्तेन वध्रेण सह सीव्येत् । सा च नासामन्त स्रोतसि सुखेनोच्छ्वासप्रवृत्यर्थं नाडीभ्यामुत्क्षिपेत् । अनु चामतैलेनापक्वतैलन सिक्त्वा पत्तङ्गादिभिरन्यैश्च सुश्रुतोक्तैर्मधुकादिभि शोणितस्थापनै सुश्लक्ष्णैरवचूर्णयेत् । आचारिक व्रणोक्त आचार ॥

ज्ञात्वावस्थान्तर कुर्यात सद्योव्रणविधि तत ।
छिन्द्यात्तदेधिक मास नासोपान्ताच्च चर्मतत् ॥
सीव्येत्ततश्च सुश्लक्ष्ण हीन सवर्धयेत् पुन ।

ततोनन्तरमवस्थाविशेष ज्ञात्वा सद्योव्रणोक्तमपि विधिं कुर्यात । ततोत्र यदाधिकं मास तच्छिन्द्यात् । नासानिकटादुच्छ्रायि यच्छोपित चर्मतदाकृतिलाभाय च । ततोनन्तर सुश्लक्ष्ण कृत्वा सीव्येत । यश्च प्रदेशो हीन स्यात् त पुनरन्येन वध्रलेशेन सन्दध्यात् ॥

निवेशिते यथान्यास सद्य च्छिन्नेप्यय विधि ।

यश्च सद्य एव प्रहारादिना नासिकाच्छिन्न तस्मिन् यथान्यास पूर्वसन्निवेशानतिक्रमेण निवेशिते अयमेव सीवनादिको विधि. । प्रसङ्गेनोच्यते ।

नाडीयोगाद्विनोष्ठस्य नासासन्धानवद्विधि ।

इत्युत्तरे द्वात्रिंशोऽध्याय ।

ज्वरसः सुप्तता ताम्रनेत्रत्व श्वासपूतिता ॥
कण्डूःश्रोत्राक्षिनासासु पित्तोक्तं चात्रलक्षणम् ।

असृग्रक्त वातादिदूषणैर्दुष्ट नासासिरा प्राप्य प्रतिश्याय करोति । अत्र च रक्तप्रतिश्याये ज्वरसः सुप्ततादिपित्तप्रतिश्यायोक्त च लक्षणम् ॥

सर्व एव प्रतिश्याया दुष्टतां यान्त्युपेक्षिता ।
यथोक्तोपद्रवाधिक्यात् स सर्वेन्द्रियतापनः ॥
साग्निसादज्वरश्वासकासोर पार्श्ववेदन ।
कुप्यत्यकस्माद् बहुशो मुखदौर्गन्ध्यशोषकृत् ॥
नासिकाक्लेदसशोषशुद्धिरोधकरो मुहु ।
पूयोपमासितारक्तग्रथितश्लेष्मसस्रुति ॥
मूर्च्छन्ति चात्र क्रिमयो दीर्घस्निग्धसिताणवः ।

सर्व एवानन्तरोक्ता प्रतिश्याया उपेक्षिता सन्तो दुष्टप्रतिश्यायता यान्ति । स च दुष्टप्रतिश्यायो यथोक्तानामुपद्रवाणा मुखशोषादीना प्ररूढत्वेनाधिक्यात् सर्वेन्द्रियाणा तापन उपतापकरो भवति । अग्निसादादियुतश्च । स च दुष्टप्रतिश्यायोऽकस्मादेवातिशयेन कुप्यति । मुखदौर्गन्ध्यादिकृच्च भवति । मुहुः प्रतिक्षण नासिकाया. क्लेद च शोष च शुद्धिं च रोध च करोति । पूयोपमादिगुणश्लेष्मसस्रुतिश्च भवति । अत्र च दुष्टप्रतिश्याये कफस्रुतौ दीर्घादिरूपाः क्रिमयो मूर्च्छन्ति समुच्छ्राय लभन्ते । अणवो लघुप्रमाणा ॥

पक्वलिङ्गानि तेष्वङ्गलाघव क्षवथो शम ।
श्लेष्मा सुचिक्कणः पीतोऽज्ञान च रसगन्धयो ॥

तेषु च सर्वेषु प्रतिश्यायेषु पक्वेष्वङ्गलाघवादिक लिङ्गम ॥

तीक्ष्णाघ्राणोपयोगार्करश्मि सूत्रतृणादिभिः ।
वातकोपिभिरन्यैर्वा नासिकातरुणास्थनि ॥
विघट्टितेऽनिल क्रुद्धो रुद्ध शृङ्गाटक व्रजन् ।
निवृत्तः कुरुतेऽत्यर्थ क्षवथु स भृशक्षव ॥

तीक्ष्णाघ्राणादिभिर्नासिकायास्तरुणास्थनि मृदुस्थनि विघट्टिते क्षुण्णे सत्यनिल क्रुद्धो यदि केन चिद्धेतुना रुद्धो भवति तदा मरुद्ध स्सन् बहिः प्रतिनिवृत्यान्त शृङ्गाटकाख्य नासास्रोतो व्रजन्नेव निवृत्त सन्नत्यर्थ क्षवथु कुरुते । स रोगो नाम्ना भृशक्षवः । उपयोगश्च द्रस्तीक्ष्णेन सम्बध्यते । आदिशब्द एवञ्जातीयग्रहणार्थः ॥

शोषयन् नासिकास्रोत कफ च कुरुतेऽनिलः ।
शूकपूर्णाभनासत्व कृच्छ्राढुच्छ्वसन ततः ॥
स्मृतोऽसौ नासिकाशोष

स्वहेतुत क्रुद्धोऽनिलो नासिकास्रोत शोषयन् कफ च शोषयन प्रथम शूकपूर्णाभनासत्व कुरुते । ततः कृच्छ्रादुच्छ्वसनमसौ रोगो नाम्ना नासिकाशोष स्मृत ॥

नासानाहे तु जायते ।
नद्धत्वमिव नासायाः श्लेष्मरुद्धेन वायुना ॥
निश्वासोच्छ्वाससरोधात् स्रोतसी सवृते इव ।

नासानाहाख्ये तु रोगे नासाया नद्धत्वमिव जायते । केन हेतुनेत्याह । श्लेष्मरुद्धेन

ओष्ठस्य विच्छिन्नस्य सन्धाने नासासन्धानवत् सर्वो विधिः । श्वासोच्छ्वासप्रसुप्तसूत्यर्थं नाडीयोगवर्ज्यमिति ॥

इतीन्दुविरचितायामष्टाङ्गसंग्रहव्याख्यायामुत्तरे द्वाविंशोऽध्यायः ।

# त्रयोविंशोऽध्यायः ।

## नासारोगविज्ञानीयम् ।

ऊर्ध्वाङ्गप्रसङ्गेन नासारोगाणां हेत्वादिकं प्रदर्शयितुमध्याय आरभ्यते ॥

अथातो नासारोगविज्ञानीयं नामाध्यायं व्याख्यास्यामः । इति ह ॥

अवश्यायानिलरजोभाष्यातिस्वप्नजागरैः ।
नीचात्युच्चोपधानेन पीतेनान्येन वारिणा ॥
अत्यम्बुपानरमणच्छर्दिबाष्पग्रहादिभिः ।
क्रुद्धा वातोल्बणा दोषा नासायां स्त्यानतां गताः ।
जनयन्ति प्रतिश्यायं वर्धमानं क्षयप्रदम् ।

अवश्यायादिभिर्हेतुभिर्वातोल्बणास्त्रयो दोषा नासायां कुपितास्तत्रैव स्थानतां सहत्वं प्राप्ताः प्रतिश्यायाख्यं रोगं जनयन्ति । स च वर्धमान उपेक्षया क्षयं ददाति । अवश्यायः प्रदोषे जलं शीतमन्तरीक्षात् पतत् । रजः क्षितिरजो धूलिः । अतिशब्दः स्वप्नजागराभ्यां सम्बध्यते । उपधानशब्दः शय्यायां शिरोनिधानपर्यायो नीचात्युच्चाभ्याम् । अन्येन विजातीयेन वारिणा पीतेनार्थादन्यस्मिन् पीते । अत्यम्बुपानात्यम्बुरमणेन छर्दिबाष्पग्रहादिभिश्च । आदिग्रहणेन वेगरोधादीनां ग्रहणम् ॥

तत्र वातात् प्रतिश्याये मुखशोषो भृशं क्षवः ।
घ्राणोपरोधनिस्तोददन्तशङ्खशिरोव्यथाः ॥
कीटका इव सर्पन्ति मन्यते परितो भ्रुवौ ।
स्वरसादश्चिरात् पाकः शिशिराच्छकफस्रुतिः ॥

तत्रेत्यादिनाऽधिकदोषविशेषवशेन प्रतिश्यायादीनां लक्षणमुच्यते । मुखशोषादिशिशिराच्छकफस्रुत्यन्तं वातप्रतिश्यायलक्षणम् । प्रतिश्यायानां पाकः इहैव वक्ष्यमाणलक्षणः ॥

पित्तात्तृष्णाज्वरघ्राणपिटकासम्भवभ्रमाः ।
नासाग्रपाको रूक्षोष्णताम्रपीतकफस्रुतिः ॥

तृष्णादिकं रूक्षादिगुणकफस्रुत्यन्तं पित्तात् प्रतिश्याये भवति ॥

कफात् कासारुचिश्वासो वमथुर्गात्रगौरवम् ।
माधुर्यं वदने कण्डूः स्निग्धशुक्लकफस्रुतिः ॥

कासादिस्निग्धादिस्रुत्यन्तं कफात् प्रतिश्याये ॥

सर्वजो लक्षणैः सर्वैरकस्माद्वृद्धिशान्तिमान् ।

यस्तु सर्वदोषजः प्रतिश्यायः स सर्वैरनन्तरोक्तैर्वातादिप्रतिश्यायलक्षणैर्युक्तो भवति । सचाकस्मादहेतुहान्या वृध्या च युक्तो भवति ॥

दुष्टं नासासिरा प्राप्य प्रतिश्यायं करोत्यसृक् ।

ज्वरसः सुप्तता ताम्रनेत्रत्व श्वासपूतिता ॥
कण्डूःश्रोत्राक्षिनासासु पित्तोक्तं चात्रलक्षणम् ।

असृग्रक्त वातादिदूषणैर्दुष्ट नासासिरा प्राप्य प्रतिश्याय करोति । अत्र च रक्तप्रतिश्याये ज्वरसः सुप्ततादिपित्तप्रतिश्यायोक्त च लक्षणम् ॥

सर्व एव प्रतिश्याया दुष्टता यान्त्युपेक्षिता ।
यथोक्तोपद्रवाधिक्यात् स सर्वेन्द्रियतापनः ॥
साग्निसादज्वरश्वासकासोर पार्श्ववेदन ।
कुप्यत्यकस्माद् बहुशो मुखदौर्गन्ध्यशोपकृत् ॥
नासिकाक्लेदसंशोपशुद्धिरोधकरो मुहु ।
पूयोपमासितारक्तग्रथितश्लेष्मसंस्रुतिः ॥
मूर्च्छन्ति चात्र क्रिमयो दीर्घस्निग्धसिताणवः ।

सर्व एवानन्तरोक्ताः प्रतिश्याया उपेक्षिता सन्तो दुष्टप्रतिश्यायता यान्ति । स च दुष्टप्रतिश्यायो यथोक्तानामुपद्रवाणा मुखशोषादीना प्ररूढत्वेनाधिक्यात् सर्वेन्द्रियाणा तापन उपतापकरो भवति । अग्निसादादियुतश्च । स च दुष्टप्रतिश्यायोऽकस्मादेवातिशयेन कुप्यति । मुखदौर्गन्ध्यादिकृच्च भवति । मुहु प्रतिक्षण नासिकायाः क्लेद च शोष च शुद्धिं च रोध च करोति । पूयोपमादिगुणश्लेष्मसंस्रुतिश्च भवति । अत्र च दुष्टप्रतिश्याये कफस्रुतौ दीर्घादिरूपाः क्रिमयो मूर्च्छन्ति समुच्छ्राय उभन्ते । अणवो लघुप्रमाणा ॥

पक्वलिङ्गानि तेष्वङ्गलाघव क्षवथो श्रमः ।
श्लेष्मा सुचिक्कणः पीतोऽज्ञान च रसगन्धयो ॥

तेषु च सर्वेषु प्रतिश्यायेषु पक्वेष्वङ्गलाघवादिक लिङ्गम ॥

तीक्ष्णाघ्राणोपयोगार्करश्मि सूत्रतृणादिभिः ।
वातकोपिभिरन्यैर्वा नासिकातरुणास्थनि ॥
विघट्टितेऽनिलः क्रुद्धो रुद्ध शृङ्गाटक व्रजन् ।
निवृत्तः कुरुतेऽत्यर्थ क्षवथु स भृशक्षवः ॥

तीक्ष्णाघ्राणादिभिर्नासिकायास्तरुणास्थनि मृद्वस्थनि विघट्टिते क्षुण्णे सत्यनिल क्रुद्धो यदि केन चिद्धेतुना रुद्धो भवति तदा सन्रुद्धस्सन् बहिः प्रतिनिवृत्तान्त शृङ्गाटकाख्य नासास्रोतो व्रजन्नेव निवृत्त सन्नत्यर्थं क्षवथु कुरुते । स रोगो नाम्ना भृशक्षवः । उपयोगशब्दस्तीक्ष्णेन सम्बध्यते । आदिशब्द एवञ्जातीयग्रहणार्थः ॥

शोषयन् नासिकास्रोत कफ च कुरुतेऽनिलः ।
शूकपूर्णाभनासत्व कृच्छ्रादुच्छ्वसन तत ॥
स्मृतोऽसौ नासिकाशोष

स्वहेतुत क्रुद्धोऽनिलो नासिकास्रोत शोषयन् कफ च शोषयन प्रथम शूकपूर्णाभनासत्व कुरुते । ततः कृच्छ्रादुच्छ्वसनमसौ रोगो नाम्ना नासिकाशोष स्मृत ॥

नासानाहे तु जायते ।
नद्धत्वमिव नासायाः श्लेष्मरुद्धेन वायुना ॥
निश्वासोच्छ्वाससरोधात् स्रोतसी संवृते इव ।

नासानाहाख्ये तु रोगे नासाया नद्धत्वमिव जायते । केन हेतुनेत्याह । श्लेष्मरुद्धेन

वायुना । तत्र च नासानाहे निश्वासोच्छ्वासयो रोधान्नासास्रोतसी संवृतेपि हिते इव भवत ॥

पचेन्नासापुटे पित्तं त्वङ्मांसं दाहशूलवत् ।
स 'घ्राणपाकः'

पित्तं स्वहेतुना नासापुटे कुपितं दाहशूलाभ्यां युक्तं तत्रैव त्वङ्मांसं पचेत् स रोगो नाम्ना घ्राणपाकः ॥

स्रावस्तु तत्संज्ञः श्लेष्मसम्भवः ।
अच्छो जलोपमोऽजस्रं विशेषान्निशि जायते ॥

यस्तु श्लेष्मसम्भवोऽच्छत्वादिगुणो नासायाः स्रावः स तत्संज्ञो रोगो नाम्ना स्रावः । अजस्रं सन्ततम् । स च स्रावो निशि विशेषाज्जायते ॥

कफः प्रवृद्धो नासायां रुध्वा स्रोतांस्यपीनसम् ।
कुर्यात् सघुर्घुरश्वासं पीनसाधिकवेदनम् ॥
अवेरिव स्रवत्यस्य प्रक्लिन्ना तेन नासिका ।
अजस्रं पिच्छिलं शीतं पक्वं सिंघाणकं घनम् ॥

नासायां स्वहेतोः प्रवृद्धः कफः स्रोतांसि रुध्वा अपीनसाख्यं रोगं कुर्यात् । किम्भूतमाह । सघुर्घुरश्वासम् । पीनसाख्याद्रोगाद् धिकवेदनम् । तेनापीनसाख्येन प्रक्लिन्ना सती नासिका अवेर्मेषस्येवाजस्रमविच्छिन्नं स्रवति । किं स्रवतीत्याह । पिच्छिलादिगुणं सिंघाणकं नासाकफं स्रवति ॥

रक्तेन नासा दग्धेव बाह्यान्तःस्पर्शनासहा ।
भवेद्धूमोपमोच्छ्वासा सा दीप्तिर्दहतीव च ॥

रक्तेन क्रुद्धेन दग्धेव नासा भवेत् बाह्यान्तःस्पर्शनासहा धूमोपमोच्छ्वासा च भवेत् । स रोगो नाम्ना दीप्तिः । सम्भवाश्रय दहतीव ॥

तालुमूले मलैर्दुष्टे मारुतो मुखनासिकात् ।
श्लेष्मा च पूतिर्निर्गच्छेत् पूतिनासं वदन्ति तम् ॥

तालुमूलमाश्रित्य मलैर्वातादिभिर्दुष्टे मुखाच्च नासिकातश्च पूतिर्मारुतो निर्गच्छेत् कफश्च पूतिर्निर्गच्छेत् । तं रोगमाचार्याः पूतिनासं नाम्ना वदन्ति ॥

निचयादभिघाताद्वा पूयासृङ्नासिका स्रवेत् ।
तत्पूयरक्तमाख्यातं शिरोदाहरुजाकरम् ॥

निचयात् सन्निपातादभिघाताद्वा हेतोर्नासिका पूयमसृक्च स्रवेत् । तत्पूयासृक् शिरोदाहरुजाकरम् । नाम्ना पूयरक्तमित्याचार्यैराख्यातम् ॥

पित्तश्लेष्मावरुद्धोऽन्तर्नासायां शोषयन्मरुत् ।
कफं स शुष्कः पुटतां प्राप्नोति पुटकं तु तत् ॥

पित्तश्लेष्मभ्यां कर्तृभ्यामेवान्तर्नासं वायुरवरुद्धः कफं शोषयेत् । स कफः शुष्कः पुटता शुष्कत्वाच्चर्मोत्कर्तितत्वं प्राप्नोति । एवंविधो रोगः पुटकमित्युच्यते ॥

अर्शोऽर्बुदानि विभजेद्दोषलिङ्गैर्यथायथम् ।

अर्शांस्यर्बुदानि च नाम्ना प्रसिद्धान् नासाकुरान्यथायथं यथास्वमारम्भकवातादिदोष

लिङ्गैर्विभजेत् । बहुवचनं नासाङ्कुराणामनेकत्वा-पेक्षया ॥

सर्वेषु कृच्छ्रोच्छ्वसनं पीनस प्रतत क्षुतम् ।
सानुनासिकवादित्व पूतिनास शिरोव्यथा ।
अष्टादशानामित्येषा यापयेद्दुष्टपीनसम् ।

इत्युत्तरे त्रयोविंशोऽध्याय ।

सर्वेषु च नासारोगेषु कृच्छ्रोच्छ्वसनादि साधारण लिङ्गम् । एषां च रोगाणां, वात प्रतिश्याय, पित्तप्रतिश्याय, कफप्रतिश्याय, सन्निपातप्रतिश्याय, रक्तप्रतिश्याय, दुष्टप्रतिश्याय, भ्रशथव, नासाशोष, नासानाह, घ्राणपाक, स्रावा, पीनस, दीप्ति, पूतिनास, पूयरक्त, पुटका, अर्शो, अर्बुदा, एवा अष्टादश रोगा उक्ता । तेषां रोगाणां मध्ये दुष्टपीनस यापयेत् । शेषा साध्या इत्यर्थादिति ॥

इतीन्दुविरचितायामष्टाङ्गसंग्रहव्याख्याया-मुत्तरे त्रयोविंशोऽध्यायः ।

## चतुर्विंशोऽध्यायः ॥

### नासारोगप्रतिषेधम् ।

उक्तक्रमेणैव नासारोगाणां चिकित्सा प्रदर्शयितुमध्याय आरभ्यते ॥

अथातो नासारोगप्रतिषेध नामाध्याय व्याख्यास्यामः ॥ इति ह ।

सर्वेष्वादौ पीनसेषु स्नेहस्वेदवमन-धूमगण्डूषोष्णभोजननिवातशयनासनानि सेवेत ॥

सर्वेष्वित्यादिना सामान्येन प्रतिश्यायाना चिकित्सा ॥

पाचनार्थं च गुलार्द्रकक्षीरत्रिकटुकाजमासम्राम्लभोजनानि ।

पाचनार्थमिति येन प्रतिश्याय पक्वता याति तदर्थं गुडादिभोजनानि सेवेतेति सम्बन्धः ॥

रोहिषाजाजीवचाचोरकोपकुञ्चिकातवारीचातुर्जातकरजो वस्त्रावबद्धं मुहुर्मुहुरुपजिघ्रेत् । घृताक्तसक्तून् मल्लकसम्पुटे कृत्वा धूमं च पिबेत् ॥

सर्वेषु च रोहिषादिचूर्णं वस्त्रे बध्वा मुहुर्मुहुरुपजिघ्रेत । घृताक्तसक्तूनित्यादि सुबोधम् ॥

पक्वे तु शिरोविरेचनमवपीडं च युञ्ज्यात् ॥

पक्वे तु सर्वस्मिन् प्रतिश्यायेऽङ्गलाघवादिना ज्ञाते शिरोविरेकादिकं युञ्ज्यात्तीक्ष्णद्रव्यैः । कल्कादीनामायोज्य औषधोऽवपीडः ॥

निदानोक्तानि च वर्जयेत् । विशेषेण शीताम्बुस्नानपानातुष्णोपधानानुपधानक्रोध-शोकान् ।

तपाकः श्वेतकाम्बोजिका । अक्ष कर्ष । जीर्णे इति तस्मिन् घृते । पारिषेक स्नापित मातुरम् । रसेनेति मासरसेन ॥

विरिक्तभुक्तस्य शीतै शिरोवक्त्रलेपपरिषेककवलग्रहान् वितरेत् ॥

एवं विरिक्तस्यानन्तरं च भुक्तस्य शीतैः शीतवीर्यस्पर्शैर्द्रव्यैः शिरोवक्त्रे लेपादीन् वितरेत् ॥

व्यजनपवनविधूयमानश्च नीलशाद्वलोपवनशिशिरकरकिरणधारागृहाणि सेवेत ।

व्यजनपवनैस्तालवृन्तादिकैर्विधूयमानः स आतुरो नीलशाद्वलोपवनादिकं सेवेत । नीलशाद्वलं दूर्वायवादि तुच्छनं तत्तथोक्तम् । शिशिरकरस्य शीतरश्मेः किरणाः पादाः । धारागृहं यन्त्रमयूरवारिजं (नन्तसम) वेश्म एवाद्रष्ट । [ धारागृहं नाम चतुस्तम्भप्रतिष्ठितं महद्यन्त्रभवं भिर्नियन्त्रिनीभिर्जलधाराभिः परिवृतं मण्डपम् ] ॥

तत्र च पक्वे तु दोषे शिरोविरेकं पुराणघृतेन सम्यगनेन घृतमण्डेन वा कट्फलाभ्यां कुर्यात् । विशुद्धस्रोतसश्च नाड्वलरसेन क्षीरेण वा शीतेन भोजनम् ॥

तत्र च पित्तप्रतिश्याये दोषे पक्वे सति स्यघेन पुराणघृतेन शिरोविरेकं कुर्यात् । अथवा कट्फलान्वितेन घृतमण्डेन तत्कुर्यात् । विशुद्धस्रोतसश्चेति शिरोविरेचनेन शीतरसक्षीरभोजनं हितम् । इति पित्तप्रतिश्याये ॥

कफजे तु यवक्षारावचूर्णितमुष्णोदकानुपानं घृतं पाययेत् । जीर्णे च तिलमाषपललवतीं यवागूम् । ततो वामनीयौषधक्वाथसिद्धया ससर्पिष्कया सैन्धवमाषचूर्णमगाढया पेययोष्णाम्भसा च वामयेत् ॥

कफजे प्रतिश्याये । सुखोष्णम् । जीर्णे इति घृते । पललं तिलकल्कः । ततः इत्यस्मिन् क्रमे कृतेऽनु तदहरेव वमनम् । वामनीयान्यौषधानि मदनादीनि सूत्रपठितानि । सैन्धवमाषयोश्चूर्णेन अगाढा घना ॥

ततस्तीक्ष्णधूमकवलप्रधमनक्रमाहारनाडीस्वेदैरुपाचरेत् । अरुचिगौरवयोस्तु विशोधयेत् ॥

ततो वमनस्य पश्चात्तीक्ष्णधूमादिभिरुपाचरेत् । तीक्ष्णो धूमः सूत्र उक्तः नाडीस्वेदश्च । अरुचिगौरवयोस्तु विशोधयेदित्यर्थाद्वमनेन विरेचनेन च ॥

पक्वे क्षवकत्रिकटुसैन्धवादिभिर्नस्यम् । तैलाप्लुतो नागरचूर्णानुविद्धो मुस्त आहारो यथासात्म्यं च रूक्षतीक्ष्णोष्णम् ॥

पक्वे च तस्मिन् प्रतिश्याये क्षवकादिभिर्नीक्ष्णैर्नस्यम् । क्षवको राजसर्षपः । तत्र च मुस्त आहारो यथासात्म्यं चान्यच्च रूक्षादि हितम् । किम्भूतो मुस्त आह । तैलप्लुतः तैलभूयिष्ठ इत्यर्थः । नागरचूर्णेन चानुविद्धः कृतसंस्कारः ॥

शुद्धघ्राणपथस्य देवदारुसरलकाकोलीजीवकमधुकपिप्पल्यनन्ताक्षीरविपक्वं तैलं नस्यम् ॥

तस्य च कोशाम्रादीनां यथासम्भवं पत्रादिभिरजस्य मूत्रेण पिष्टैरजाश्वशकृद्रसेन युक्तैर्धूमविध्युक्तप्रकारेण धूमवर्तिं कृत्वा घृतेनाभ्यक्तां पातुं प्रयच्छेत् । पानाय दद्यात् ॥

पिप्पलीवर्धमानं चोपयुञ्जीत । क्रिमिघ्नांश्च योगान्पाययेत् ॥

पिप्पलीवर्धमानं रसायने वक्ष्यते । क्रिमिजा योगाश्चिकित्सिते उक्ताः । तैर्दुष्टप्रतिश्याय पाययेत्योक्तयोपयत् । इति दुष्टप्रतिश्याये ॥

भृशक्षवथौ पुटके च निम्बकटफलकुष्ठमरिचचूर्णं छर्दनाय प्रधमनम् । पिप्पलीकुष्ठशुण्ठीविडङ्गमृद्वीकाकषायकल्कविपक्वं तैलं घृतं वा नावनम् ॥

भृशक्षवाख्ये रोगे पुटके च शुष्कत्वनाशाय छर्दोत्पादनाय निम्बादिचूर्णं प्रधमनम् । पिप्पल्यादीनां क्वाथेन कल्केन च विपक्वं तैलं वा घृतं वा नावनम् ॥

नासाशोषे बलातैलं पाने शिरोबस्तौ च । स्निग्धस्य स्वेदः । क्षीरसर्पिर्नस्यं मधुरवर्गसाधितं वा तैलम् । स्नैहिको धूमः तथा नासानाहेऽपि । एवमनुपशमे शिरोविरेकः ॥

नासाशोषाख्ये सुबोधम् । क्षीरात् गृहीतं घृतं क्षीरसर्पिः । स्नैहिको धूमः सूत्राक्तः । तथेति नासाशोषक्रमसमुच्चयो नासानाहाख्येऽपि । एवं च नासानाहस्यानुपशमे शिरोविरेकः ।

नासापाके दीप्तौ च जलौकोभिरस्रविस्रावणम् । शीतैरूर्ध्वाधोविरेकलेपसेकाः । नासास्रावे तीक्ष्णं नस्यं धूमश्च ॥

नासापाकदीप्त्याख्ययोर्जलौक आदिकम् । नासास्रावे सुबोधम् ॥

अपीनसे पूतिनासे च गुडमरिचहिङ्गुशिवाटिकाविडङ्गैरजामूत्रपिष्टैर्नस्यम् । कफप्रतिश्यायवच्च स्नेहस्वेदवमनानि ॥

अपीनसपूतिनासयोर्गुडादिभिरजामूत्रपिष्टैर्नस्यम् । हिङ्गुशिवाटिका हिङ्गुपत्री । कफप्रतिश्यायवत् स्नेहादीनि ॥

वमितवतो निर्गुण्डीशिग्रुतर्कारीफाणिजकक्षवकसुरसार्जकपत्रस्वरसेन सार्षपं पीलुजं वा तैलं विपाच्य नस्यं विदध्यात् ।

वमितवतः कृतवमनस्य । निर्गुण्ड्या विपत्रस्वरसेन सर्षपतैलं पीलुजं वा तैलं विपाच्य नस्यं विदध्यात् ॥

लाक्षाविडङ्गपिप्पलीलवङ्गक्षवकनिशाकुष्ठवचाकरञ्जिकाकल्कैर्वा तिलतैलम् । शिग्रुबृहतीदन्तीमूलबिल्वव्योषसुरसरसैर्वा ॥

अथवा लाक्षादिकल्कैस्तिलतैलं विपाच्य नस्यं विदध्यात् । शिग्र्वादिकल्कैर्वा । इत्यपीनसे पूतिनासे च ॥

उत्पन्नमात्रं पूयरक्तं रक्तप्रतिश्यायवच्चिकित्सेत् । प्रवृद्धं नाडीव्रणवत् । कृतवमनस्य चास्य नस्यधूमौ प्रयोजयेत् ॥

कार्पासमज्जोष्णाम्बुपिष्टं नावनं सर्वशिरोरुजाघ्नम् । त्वगादीनि तद्वदुष्णाम्बुपिष्टानि नावनम् । चन्दनादिभिर्लेपस्तथा । तथेति समुच्चये । देवदार्वादिभिश्च सघृतैर्लेप इति सम्बन्धः ॥

कुङ्कुमशर्करासंस्कृतमाज्यं रक्तपित्तानुबन्धे मर्शः । नचात्र रक्तमवसेचयेद्वातोद्रेकभयात् । स्नैहिकं धूमं पिबेत् । शिरोबस्तिं च शीलयेत् । वस्तिकर्म चाचरेत् ॥

वातज एव यदि रक्तपित्ताभ्यामनुबन्धो भवति । ततः कुङ्कुमशर्कराभ्यां संस्कृतमाज्यं मर्शो दशाष्टषड्बिन्दुः कर्तव्यः । अत्र च वातशिरोभितापे रक्तपित्तानुबन्धेपि रक्तं नावसेचयेत । कुत इत्याह वातोद्रेकभयात् । स्नैहिकं धूमं सूत्र उक्तम् । शिरोबस्तिं च शीलयेदित्यनेन शिरोबस्तेः पुनः पुनर्योजनमुक्तम् । सुबोधम् ॥

एवमसिद्धौ वातजे श्लेष्मजे च यथोक्तो दाहः ॥

एवमियनन्तरोक्तक्रिययाऽसिद्धौ वातजे शिरोभितापे यथोक्तो दाह इति सूत्रनिर्दिष्टस्तद्दाहः । श्लेष्मजे चेति लाघवार्थं प्रकरणे ॥

अर्द्धावभेदकेप्ययमेव विधिः । निर्गुण्डीपत्ररसश्च सघृतमण्डसैन्धवो नस्यम् । शिरीषमूलफलानि वा । शारिवोत्पलकुष्ठचामधुकपिप्पलीभिः । सतैलाम्लो लेपः ।

प्रतिकुर्वीतेत्येवमनन्तमर्द्धावभेदके । अयमेवेति वातशिरस्तापोक्तः । अत्र तु निर्गुण्ड्याः पत्ररसस्सघृतसैन्धवो नस्यं हितम् । शिरीषमूलफलानि वा नस्यमिति सम्बध्यते । शारिवादिभिस्तैलेनाम्लेन काञ्जिकादिनायुक्तैर्लेपः । अशाम्यतिस्त्वर्द्धावभेदके कस्य दोषस्यानुबन्ध इति समीक्ष्य तदपेक्षया प्रतीकारं कुर्यात् ॥

सूर्यावर्तेऽप्ययमेव विधिः विशेषतस्तु सिरामोक्षः ॥

अयमनन्तरोक्तद्वयविधिः सूर्यावर्ते । लाघवार्थं क्रमभङ्गः । सिरामोक्षस्तु विशेषः सूर्यावर्ते ॥

पित्तजे रक्तजे च शिरोभितापे स्निग्धस्य सिरां विध्येत् । कायं च विरेचयेत् । सुशीतैः शतधौतघृतान्वितैः शिरोवक्त्रं सिञ्चेत् प्रदिह्याच ॥

क्षीरसंस्थापनमित्येवमन्तं रक्तपित्ताभितापयोः । पित्तजे शिरोभितापे रक्तजे च घृतपानादिना स्निग्धशरीरस्य सतः सिरां विध्येत् ललाट्यामित्यर्थाद् गम्यते । कायं शरीरं विरेचयेच्छोधयेच्च । सुशीतैरतिशीतैर्द्रव्यैः शतधौतघृतयुक्तैः शिरोवक्त्रं सिञ्चेत् प्रदिह्याचेति यथासंख्यं सम्बन्धः ॥

चन्दनशारिवामधुकदूर्वोत्पलमपौण्डरीकपद्मविदारीभिः सक्षीरसर्पिर्विपाचितं नावनं शिरोबस्तिश्च । जीवनीयनिष्क्वाथात् पयसो नवनीतमुद्धृत्य जीवनीयक्वाथकल्काभ्यां पाचितं पानभोजननस्याभ्यङ्गबस्तिषु म-

पीत पित्तरक्तजान् सर्वान्विकारान् साधयति । जीवनीयगर्भं षोडशगुणे पयसि सिद्धमाज्यं वा ॥

चन्दनादिभिर्घृतं समानक्षीरं विपक्वं नावने शिरोबस्तौ च योज्यम् । जीवनीयविपक्वामित्यादि व्याख्यातमम् ॥

क्षीरेक्षुजाङ्गलरसखर्जूरद्राक्षाकशेरुकमृणालसिद्धं सर्पिर्मण्डोऽनुवासनम् । अञ्जनादिवर्गसंभृतं क्षीरमास्थापनम् ॥

क्षीरादिभिः सिद्धं सम्यक् सर्पिषो घृतस्य मण्डोऽनुवासने योज्यः । अञ्जनादिगणो विविधगणसङ्ग्रहोक्तेन शृतं क्षीरमास्थापनम् ॥

शङ्खकं प्रत्याख्यायैवमेवोपचरेत् । विसर्पवच्च । विशेषतस्तु कृष्णतिलशतावरीनीलोत्पलमूर्वापुनर्नवैर्लेपः ॥

शङ्खकाख्यं रोगं प्रत्याख्याय न सेत्स्यतीत्युक्त्वा । एवमेवेति पित्तरक्ताभितापप्रकरणेन चिकित्सितोक्तपित्तरक्तविसर्पवच्चोपचरेत् चिकित्सेत् । शङ्खके तु कृष्णतिलादिभिर्विशेषेण लेपः कार्यः ॥

कफजे शिरोभितापे लङ्घयेत् । पुराणसर्पिःस्निग्धं वा वामयेत् । स्वेदः पिण्डेन रूक्षेण । शिग्रुनिम्बगण्डूक्वाथेन वा नाडीस्वेदः ॥

मुहुर्मुहुराघ्राणमित्येवमन्तं कफजे शिरोभितापे । सूत्रोक्तप्रकारेण रूक्षेण पिण्डेन स्वेदो हितः । अथवा शिग्र्वादिक्वाथेन नाडीस्वेदः कार्यः ॥

देवदारुकुष्ठनलदहिंसारास्नादिभिः सलवणैः सुखोष्णैरालेपः । यवचूर्णमधुकचन्दनहरिद्राकुष्ठसिद्धार्थकशिग्रुपुष्पासुरदारुभिस्तैलाजक्षीरयुक्तैः सस्नेहैर्लेपनाद्वा ॥

सलवणैर्लवणयुक्तैः सुखोष्णैर्देवदार्वादिभिरालेपो हितः । सुरकाष्ठं देवदारु । तैलाजक्षीरेण च युक्तैः स एवं मणिमन्थेन सहितैर्यवचूर्णादिभिर्लेपनाद् पिण्डबन्धः ॥

विडङ्गतैलं नस्यं सार्षपं वा तद्वच्च व्योषसिद्धम् । मधूकसारकल्को वा मधुयुतस्त्वङ्मेषशृङ्ग्या इङ्गुद्या वा । एभिरेव च धूमवर्तिः ॥

विडङ्गजं विडङ्गसाधितं वा तैलं विडङ्गतैलं । सर्षपतैलं वा नस्यं योज्यम् । तद्वच्चेति विडङ्गतैलं वा सर्षपतैलं वा व्योषेण त्रिकटुकेन सिद्धं पक्वं । मधूकसारकल्कादिना मधुयुक्तेन नस्यमिति सम्बन्धः । मेषशृङ्ग्या इङ्गुद्याश्च त्वक् । एभिरेवानन्तरोक्तैर्धूमवर्तिः ॥

शिरोविरेचनद्रव्यैर्वा सूत्रस्थानोक्तं प्रधमनम् । तैरेव च पक्वं तैलं मर्शः प्रतिमर्शो वा ॥

शिरोविरेचनद्रव्यैः सूत्रस्थाने शोधनादिगणसङ्ग्रहोक्तैः प्रधमनं नासाया हितम् । प्रधमनं सूत्रोक्तलक्षणम् । तैरेव चेति शिरोविरेचनद्रव्यैः । मर्शप्रतिमर्शौ सूत्रोक्तलक्षणौ ॥

शिरोविरेचनान्ते कर्णनादोक्तस्नेहनस्यम् । तीक्ष्णा कवळाः । मनःशिलानलदतुत्थकासीसचूर्णं ससर्पिष्को धूमः । नलदचूर्णस्य च मुहुर्मुहुराघ्राणनम् ॥

एषां च शिरोविरेचनानामन्ते प्रयोगान्ते कर्णनादोक्ते तिलान् नवमल्लिकानित्यादिना पठितं स्नेहनस्यं योजयेत् । तीक्ष्णाः कवळास्तीक्ष्णद्रव्यैर्मरिचशुण्ठ्यादिभिः कृताः । सुबोधम् ॥

सन्निपाते व्यामिश्रो विधिः ॥

सन्निपाताभितापे पृथग्दोषोक्तो विधिर्मिश्रीकृत्य दोषबलाद्यपेक्षया योज्यः ॥

क्रिमिजे दुरालभासुरदारुरोहिषपूतीकनिफलाकट्फलवचात्रिकटुभिरजामूत्रयुक्तं सर्पिः पक्वं पानम् । उपस्निग्धस्विन्नस्य देवदारुपूतीककटभीसर्षपविळङ्गतिलकण्टकविपक्वेन तैलेन शिरः कर्णौ चाभ्यज्य स्वेदयेत् ॥

क्रिमिचिकित्सितचेष्टेत्यन्तः क्रिमिजे शिरोभितापे । दुरालभादिभिर्द्रव्यैरजामूत्रयुक्तं पक्वं सर्पिः पानाय । अनेनोपस्निग्धस्य स्विन्नस्य च देवदार्व्यादिविपक्वेन तैलेन शिरः कर्णौ चाभ्यज्य पुनः स्वेदयेत् । कण्टको गोकण्टकः ॥

ततः क्रिमिमूर्च्छनार्थमसृङ्नस्तोऽवसेचयेत् । ततो रुधिरगन्धमदेन प्राविष्टानां सप्तच्छदस्य त्वग्रसेन पुष्परसेन वाऽनन्तरनिषिक्तेन क्रिमयः पतन्ति ॥

ततः स्वेदानन्तरं क्रिमीणां मूर्च्छनार्थं येन क्रिमयस्त्यक्तबन्धना मत्ता इव सर्वतोऽन्तः सरन्ति तदर्थमसृग्रक्तं नस्तोऽवसेचयेत् । अनन्तरनिषिक्तेन रक्तनिषेचनस्य पश्चात् सिक्तेन । पुष्परसः सप्तच्छदपुष्पाणां रसस्तेन । पतन्ति नासिकातो बहिर्निस्सरन्ति ॥

सरळदेवदारुकट्फलसर्षपापामार्गक्षवककटुकाऽलाबुसुरसबीजपिप्पलीतण्डुलचूर्णैस्तत्पक्वं वा तैलं सद्यः क्रिमीन् निरस्यति । विळङ्गतण्डुला वाजिमूत्रपिष्टाः शिरीषबीजानि वा छागमूत्रपिष्टानि । पुष्करमध्यबीजानि वा ॥

सरळादी ॥ चूर्णस्तत् पक्वं तैलं वा नस्यप्रयोगात् सद्यः क्रिमीन् बहिर्निरस्यति । क्षवको राजक्षवकः । अथवा वाजिमूत्रपिष्टा विळङ्गतण्डुला विळङ्गफलानि क्रिमीन् निरस्यन्ति । अथवा छागमूत्रपिष्टानि शिरीषबीजानि । अथवा पुष्करमध्यबीजानि छागमूत्रपिष्टानीति सम्बन्धः । मध्यशब्देन पुष्करबीजानां त्वक्परिहारेण प्रयोगो दर्शितः ॥

गोमांसेन छागमांसेन वा वसापिष्टेन यवाग्रं कृत्वा शिरो विलेपयेत् । ततो निम्बार्कनक्तसुरसकुटजकरञ्जकरवीरपत्रक्वाथेन सेचयेत् । अजामूत्रेण वा कवोष्णेन । पूतिमत्स्ययुताश्च धूमाः ॥

गोमांसेनेत्यादिना शिरोलेपः सुबोधः । तत इति यवाग्रलेपानन्तरं निम्बादिक्वाथेनाजामूत्रेण वा कोष्णेन सेकः । पूतिमत्स्यः छिन्नमत्स्यः ॥

एवं क्रिमिष्वपगतेषु तेजोवती पूतीकशिम्बीसुरसमकमालविळङ्गहरीतकी सर्षपाश्वे-

करवीरमूलमालती देवदारुक्षवकमुस्तफाणिज्जक पिप्पलीशतपुष्पा मधूकशणनिम्बमारकलैं-रजामूत्रयुतै सार्षपतैलमङ्गुद पैलुक वा विपक्व युक्त्या नावनम् ॥

एवमिलन तरोस्तन्त्रियया क्रिमिष्वपगतेषु वेजोवत्यादिकल्कै रजामूत्रयुतै सार्षपाद्यन्यतमतैल विपक्व युक्त्या बलाद्यपेक्षया मात्रान्तितया नावन कुर्यात् ॥

न तु जातुरुधिरमवसेचयेत् । जन्तुभि पीतशोणिते हि शिरसि पुनरस्रावसेकादकाण्डे मृत्यु स्यात् । क्रिमिचिकित्सित चेक्षेत ॥

जन्तुभिताये तु कदाचिन्निरवन नाव सेचयेत् । कुत इत्याह । जन्तुभिरित्यादि । अकाण्डे अकाले । क्रिमिचिकित्सिते च यदुक्त त विधि प्रयोगायेक्षेत ॥

शिर कम्पमक्षीणस्यान्यथा ऽनुपद्रुतस्य दाहवर्ज्य मारुतविज्ञानेनोपक्रमेन ॥

शिर कम्पारय मक्षीणत्वादियुक्तस्य पुसो वाताभितापवदुपक्रमेत । वाताभितापेभ्यः भिना दाह उक्त । अत्र तु दाहवर्जमिति विशेष ॥

उपशीर्षके जन्मोत्तरकालजाते नवोत्थिते वातव्याधिविहितान् स्नेहान् पाननावनाभ्यञ्जनेषु योजयेत् । अभ्यक्त च स्वेदयित्वोपनाहयेद्यथा विदाहो न भवति । विदाहे विद्रधिवत् कर्म ॥

विद्रधिवत् कर्मेत्यनेनमन्तगुपशीर्षके । जन्मोत्तरकालजात इत्यनेन सहजस्या चिकित्स्यत्वमुक्तम् । विदाह पाकावस्था ॥

पिटकार्बुदविद्रधिषु यथास्व माचरेत् । व्रणीभूतासु पिटकासु निम्बनिशामधुकधात्रीफलैर्विपक्व तैल शोधनरोपणम् ॥

पिटकादिषु यथास्वमिति दोषाद्यपेक्षया चिकित्सितादि निर्दिष्टमाचरेत । व्रणीभूतास्वि विपाकात् । सुबोधम ॥

मूर्वाचन्दनशारिवाधातकी कान्तालोध्रमधुकसमङ्गा पद्मकेसरशतपर्वकमूलैर्विद्रधिषु । एभिरेव च सिद्ध सर्पिर्भक्ष्यम् । रूढ तु विद्रधौ यदि त्वक् सुप्तैव भवति ततो वामयेत् । उपास्निग्य च विरेचयेत् ॥

मूर्वादिभिर्विपक्व तैल विद्रधिषु व्रणीभुतासु शोधन रोपण च । एभिरिति मूर्वादिभि । उपस्निग्ध किञ्चित् स्निग्ध ॥

अरूंषिकासु जलौकापहृत शोणित शिर क्षुरा मृष्ट वा निम्बोदकेन परिषिच्याश्वशकृद्रसेन लवणमगाढेन लेपयेत् । किञ्चित् काल स्थित चोष्णोदकाम्लकाञ्जिकान्यतरधौत विलङ्गव्योषपलाशागार धूममनोहालवचा रसाञ्जनहरिद्राद्यैरालिम्पेत् । तिलमष्या वा स्नुहीक्षीरयुक्तया । मधुकोत्पलतिलैरण्डमार्कवपत्रैर्वा । शिग्रुमूलकसर्षपबीजैर्वा गोमूत्रपिष्टै । बालकामलकनागरमूलकसर्षपबीजैर्वा क्षीरपिष्टै । शिरीषत्वग्दधिमधुकाभ्या वा । पुराणपिण्याककुक्कुटपुरीषाभ्या वा ॥

शिरःकायविरेकान् कुर्यादित्येवमन्तमरू विकासु । किञ्चित् कालाश्रितमित्यत्र शङ्कुद्रसाल्पिमिति विज्ञेयम् । धौत च विडङ्गादिभिरालिम्पेत् । तिलमान्या वा स्नुही क्षीरयुक्तयालिम्पेदितिसम्बन्ध । मधुकादिपत्रैर्वा केवलैरालिम्पेत् । निम्बादिबीजैर्वा गोमूत्रपिष्टैः । वाळकादिभिर्वा क्षीरपिष्टैः । शेषयो. क्षीरमेव । सुबोधम् ॥

कपालभृष्टकुष्ठचूर्णतैलयुक्त कण्डूक्लेददाहस्वेदवेदनाघ्नम् । तथाचाचोक्त चित्रकादि तैलमभ्यञ्जनम् । दन्तीपाठाकोशातकीचित्रकातिविषा महालाङ्गलिकी सिद्ध तैल व्रणाभ्यङ्ग ॥

कपाले मृन्मयेऽग्निना भृष्टस्यकुष्ठस्यचूर्ण तैलयुक्त प्रकरणाल्लेपात् कण्वादिघ्नम् । चाचा इन्द्रलुप्त इत्येकार्थे । सुबोधम् ॥

मनःशिलैलाहरितालापिप्पलीकुष्ठकासीसहरिद्राकरञ्जमुस्तातगरमञ्जिष्ठाचित्रकासिद्धार्थकरवीरमूलचूर्णगर्भ तैलमादित्यपाक व्रणरोपणम् । एवमनुपशमे वमनधूमकायशिरोविरेकान् कुर्यात् ॥

मनःशिलादिकल्क तैलमादित्यपाक य दातपेनैव पच्यते । एवमिति पूर्वोक्तेनानुपशमे वमनादीन् कुर्यात् ॥

दारणके ललाटे सिरा विध्येत् । अभ्यङ्गस्नाननावनानि च शीलयेत् प्रियाळबीजमधुककुष्ठमाषसर्षपै ससौद्रैर्लेप । कोद्रवतृणक्षाराम्भ प्रक्षाळनम् ।

क्षाराम्भ प्रक्षाळनमित्येवमन्त दारणके अभ्यङ्गादीनिदोषापेक्षम् को द्रवतृणक्षारस्रुत मम्भस्तथोक्तम् ॥

इन्द्रलुप्ते यथासन्न सिरा विध्वा तुत्थकासीसमनःशिलामरिचैर्लेपयेत् । भद्रदारकुटन्नटाभ्या वा चित्रककरवीरनक्तमाल मालतीसिद्धेन वा तैलेनाभ्यज्यात् ॥

आरोमोद्गमात् परिहरेदित्येवमन्तमिन्द्रलुप्ते । यथासन्नमिति शीर्णरोमनैकट्यन सिराव्यध । तुत्थादिभिर्लेप शीर्णरोमस्थाने । भद्रदारुकुटन्नटाभ्या निर्वापणाय लेपयेदिति सम्बन्ध । भद्रदारुर्देवदारु अथवा चित्रकादिसिद्धेन तैलेनाभ्यज्यात् ॥

अवगाढपद वा सूचीकूर्चकेन प्रच्छाय भूयोभूय. प्रदिह्यात् कपोतपङ्कामूलेन लाङ्गलिकामूलेन वा महिषी क्षीरपिष्टेन ॥

अवगाढपद बहुप्रविष्टशस्त्रपद कृत्वा सूचीकूर्चकेन प्रच्छाय । कपोतपङ्का सुवर्चला तस्या मूलेन लाङ्गलिकामूलेन वा महिषीक्षीरपिष्टेन पुन पुन प्रदेह ॥

घृष्टलिप्तमेरण्डपत्राच्छादित रात्रिमुषित माहिषनवनीतेन लिम्पेत् । मार्कवपत्र सहचरपुष्पक वा । वार्ताकफलैस्तैल पक्व सौद्राञ्जनयुक्तमालेप । ससौद्रो वा क्षुद्रवार्ताकरस । जलशूको वा पलाशक्षारसान्द्र ॥

घृष्टलिप्तमेरण्डपत्रावच्छादित सद्रात्रिमुषित प्रातर्माहिषेण नवनीतेन लिम्पेत् । सुबोधम् ॥

गोशकृता वा घृष्टमिन्द्रलुप्तमरुष्करर-सेनावलिप्यान्तर्धूमदग्धकूर्मपृष्ठाच्चूर्णयेत् । कूर्मकपालभस्मना वा सुरसारसाक्तेन प्रदिह्यात् । हस्तिदन्तमष्या वा तैलान्वितया । पूतीकरञ्जपत्राणि वा ससैन्धवानि लेप. । पिप्पल्यञ्जनरसाञ्जन वा कुचिकाफललोहर-जांसि वा गोमूत्रपिष्टानि । खलतिं विहितानि वा चरेत् । सलिलसेकमारोमोद्गमात् परिहरेत् ।

गोशकृता वा घृष्टमिन्द्रलुप्तमरुष्करस्य भल्लातकस्य रसे नावलिप्यान्तर्धूम दग्धया कूर्म-पृष्ठया वचूर्णयेत् । सुरसारसाक्तेन कूर्मकपा-लभस्मनान्तर्धूमदग्धेन प्रदिह्याद्वा । सुरसा मू-र्वा । कूर्मकपाल कूर्मपृष्ठम् । सुरोपम् । खलतिविहितान्यौषधादीनि ॥

खलताविन्द्रलुप्तोक्त क्रमो यथादोष च प्रशुद्धि ॥

मधुरवर्गकल्कनेत्येवमन्न खलतौ । यथादोष संशुद्धि कफाधिके वमन पित्ताधिके विरे-चनमित्येवमादिर्यथायोग्यार्थ ॥

त्रिफलार्जुनमेषकरञ्जपुष्पकृष्णापिण्डी-तकफलमूलनीलोत्पललोध्रचूर्णकासीसजम्बू-मार्कवमञ्जिष्ठामेषशृङ्गीखदिररज सकर्दममार्त्त-तोक्ताणुतैलयुक्तमसनमारसमुद्गकेऽन्यस्त कर्दमे मास निखात स्थितमुद्धृत मूर्वाकूर्चप्रच्छिता-या: खलतेर्लेप ॥

न्यस्त निखात कर्दमे मास निखात स्थितमुद्धृत प्रच्छितखलतौ लेप । कृष्णापिण्डीतकफल कृष्णमदनस्यफलम् ॥

रक्ताश्मन्तकपुष्पकिंशुकनलदमूलमधु-कहस्तिदन्तभस्मान्यजाक्षीरपिष्टानि लेप. ॥

रक्ताश्मन्तपुष्पादीना भस्मान्यजाक्षीरे णाजक्षीरेणपिष्टानि लेप । रक्तो लोहितोऽश्मन्त-कस्तस्यपुष्पम् ॥

जम्ब्वाम्रपल्लवपत्रमधुकभृङ्गरजस्त्रिफला श्लेष्मातकमञ्जिष्ठा फणिज्जकनलदद्राक्षाजम्बी-चपलातिविषाकट्फलकल्केन क्षीरद्विगुणेन च तिलतैलमक्षतैल चैक य साधयेत् तन्नस्ये-ऽभ्यङ्गे च नियुञ्ज्यात् । एवमेव मधुरवर्गक-ल्केन ॥

जम्ब्वाम्रत्वगादिकल्केन क्षीरद्विगुणक्वाथेन च तिलतैलमक्षतैल च मिश्रीकृत्य साधित नस्येऽभ्यङ्गे च युञ्ज्यात् । मधुरवर्गकल्केनैवमेवेति क्षीरि-वृक्षक्वाथे मधुरवर्गे कल्क दत्वा तिलतैलमक्षतैल चैकध्य साधयेन्नस्येऽभ्यङ्गे च ॥

खलतिपलितयोश्च प्रयोगान् परस्पर निदध्यात् ॥

खलतौ प्रयोगान् पलिते पलितप्रयोगान् खलतौ च निदध्यादिति परस्परस्यार्थ ॥

अकालपलितेषु वातादीनवेक्ष्य स्नेह-स्वेदसंशोधनास्रविस्रावणानि कुर्यात् । ततो-ऽस्यार्दितोक्तमणुतैल नस्यमभ्यञ्जन च ॥

गुतैलेन

च ऽर्के

अकालपलितेष्विति परिणामपलिते रसायनोक्तेरकाल इति विशेषणम् । वातादीन - वेदनेति तद्योग्यतया । सुबोधम् ॥

मधुकामलकमाक्षिकैः केशमूलानि लिम्पेत् । तिलामलकक्षौद्रतैलैर्वा । तुत्थकाम्रजम्ब्वास्थिकासीसकिट्टशर्कराभिर्वा । सैर्यकपुष्पनीलीनी त्रिफलाभृङ्गरजोभिर्वा कृष्णाजमूत्रपिष्टैः ॥

केशमूलानि केशस्थानानि मधुकादिभिर्लिम्पेत् । तिलादिभिर्वा तुत्थकादिभिर्वा । कासीसकिट्ट कासीसत्वक । सैर्यकपुष्पादिभिर्वा कृष्णाजम्यमूत्रेणपिष्टैः ॥

असनपुष्पपत्रमये पात्रे बहिरामलककल्कप्रदिग्धे निहितमक्षतैलं षण्मासं व्रीहिपल्ले स्थितमभ्यङ्गात्स्नानाच्च पलितं जयति । अयमेव कल्पः सैरीयकेपि ॥

असनस्यपुष्पैः पत्रैश्च वर्द्धिकाकृति पात्रं कर्तव्यमेतच्च बहिरामलककल्केन तथा प्रदेह्यं यथा तैलाधिरणता याति । ततस्तस्मिन् पात्रे बिभीतकतैलं निधेयम् । ततस्तत् षण्मासं व्रीहिराशौ स्थाप्यम् । तत्तैलमभ्यङ्गात्स्नानाच्च पलितं जयति । अयमेवासनपुष्पपत्रविधिः सैरीयकेपि । सरीयकं सहचरमम्लायनं च ॥

कपिकच्छूफलमूलगर्भमक्षतैलं सिद्धमये पात्रे पूर्ववत् स्थितं समानं पूर्वेण ॥

कपिकच्छ्वा फलानि मूलानि च गर्भे दत्वाक्षतैलं सिद्धमये पात्रे पूर्ववदिति षण्मासं व्रीहिपल्ले स्थितं पूर्वेणासनपात्रस्थिततैलेन गुणैः समानम् ॥

रामतरणीमूलपलद्वयं यष्टीमधुकपञ्चशारिवार्द्धपलमेकत्र जर्जरीकृतमक्षतैलपलैर्दशभिराप्लुतं लोहभाजने दशाहं दिव्रसकरकरमतप्तनावनात् पलितघ्नं सर्वेन्द्रियदार्ढ्यावहं च।

रामतरण्यादिकं जर्जरीकृत्य दशभिरक्षतैलपलैराप्लुतं लोहपात्रे दशाहमादित्यकिरणैः प्रतप्तं तन्नावनात् पलितघ्नत्वादिगुणम् । रामतरणी सैर्यकः ॥

कृष्णतिलतिलपर्णी त्रिफलामधुककासीसपत्मककर्दममासीमार्कवमसनपत्रस्वरसपिष्टं निरातमयं पात्रे स्थापयेत् । ततः पूर्वोक्तरसद्रुतेनपद्मिनीकर्दमप्रलिप्तगैतान् केशान् कपालं च लेपयेत् । ततः पद्मिनीकर्दमे भस्त्राग्रकौशेयेन वेष्टयेत् । तृतीयेचाह्निप्रक्षाल्यैवमेव कुर्यात् । एवमलिकुलनीला केशा शिरोविभूषयन्ति । भवति चात्र ॥

कृष्णतिलादिकमसनपत्ररसपिष्टमयः पात्रे निरात्नं स्थापयेत् । ततोनन्तरमसनपत्ररसद्रुतेन पद्मिनीकर्दमेन प्रलिप्तान् पुनर्द्धातान् केशान् पद्मपत्रैः प्रच्छाद्य कौशेयपट्टेन वेष्टयेत् ततस्तृतीये ह्नि प्रक्षाल्य पुनरेवमेव लेपादिकं कुर्यात् । एवमित्यनया क्रियया अलिकुलवत् भ्रमरसदृशनीलाः कृत्वा शिरोविभूषयन्ति । गतानुगतिका ॥

खलतौ पलिते वल्या हरिल्लोम्नि
अंगेमहत्यसे

खलत्यादिके वमनादिशोधिते पुरुषे यो-ग्यैर्भिन्यादिभिरुपाचरेत । हरिल्लोमा कपिल-केश ॥

सिद्धतैलं बृहत्याद्यैर्जीवनीयैश्च नावनम् ॥

बृहत्यादौ दन्त्यपञ्चमूलद्रव्यैर्जीवनीयैर्जी-वन्तीकाकोल्यादिभिश्च सिद्धं तैलं खलत्यादौ नावनं हितम् ॥

क्षीरात्साहचरात् भृङ्गरजसः सौरसाद्रसात् ।
प्रस्थस्तैलस्य कुडवो यष्टीमधुपलान्वितः ॥
सिद्धः शैलमये भाण्डे शृङ्गे मेषस्य वा स्थितः ।
नस्यं स्यात्

क्षीरादीनां प्रत्येकस्य प्रस्थेन मधुयष्टीप-लान्वितः सिद्धस्तैलस्य कुडुवः शैलमयभाजने भा-ण्डे स्थितः खलत्यादिषु नस्यं स्यात् ॥

क्षीरपिष्टौ वा दुग्धिका करवीरको ॥
उत्पाट्यपलितं देयावाशये पलितापहौ ॥

अथवा दुग्धिका करवीरको क्षीरेणक्ष-णपिष्टौ पलितमुत्पाट्याशये पलितमूले देयौ । तौ हि पलितापहौ ॥

आदित्यवल्ल्यामूलानि कृष्णसैरेयकस्य च ।
फलं कृष्णशणात्पत्रं सुरसायष्टिमार्कवम् ॥
सुराह्वं काकमाची च पृथग्दशपलांशिकम् ।
प्रपौण्डरीकमञ्जिष्ठा लोध्रकृष्णागरूत्पलम् ॥
आम्रास्थिकर्दमं कृष्णो मृणाली रक्तचन्दनम् ।
नीलीभल्लातकास्थीनि कासीसमदयन्तिका ॥
सोमराज्यसनाम्रं कृष्णं पिण्डीतचित्रकौ ।
पुष्पाण्यर्जुनकाश्मर्यो दाडिमजम्बूफलाञ्जनम् ॥
प्रत्येकपलिकं पिष्टं सत्रिफलाकणम् ।
अर्धतैलाढकं तेन पचेद्धात्रीरसार्मणे ॥
कुर्यादादित्यपाकं वा यावच्छुष्कोभवेद्रसः ।
लोहपात्रे ततः पूतं महानीलं प्रयोजितम् ॥
तनुपानेनावनेभ्यङ्गे शुद्धस्यानियतात्मनः ।
सर्वजत्रूर्ध्वरोगघ्नं पलितघ्नं विशेषतः ।
एभिरेव च भेषज्यैः शिरःकल्कं च लेपयेत् ॥

आदित्यवल्ल्या इत्यादिना महानीलाख्यो योगः । आदित्यवल्ल्यर्कवल्ली तस्या मूलानि । कृष्णसैरेयकः कृष्णसहचरः तस्यापि मूलानि । कृष्णशणस्य फलम् । यष्टिमार्कवं नाडिका भृङ्ग-राजः । आदित्यवल्लीमूलान्याद्याकाकमाच्यन्तं द्रव्य-न्दशपलभागिकम् । प्रपौण्डरीकादिकं प्रत्येकं पञ्चपलप्रमाणम् । कृष्णमितिशणविशेषणम् । पिण्डीतको मदनः । आम्रस्पर्कं जम्बूफलम् । एतत् सर्वं पिष्टं कृत्वा तेन धात्रीरसस्यामलक-रसस्यार्मणो द्रोणः द्वादशाधिकानि पञ्चपलश-तानि । तस्मिन्नर्धतैलस्य निर्मीतकतैलस्याढक-मष्टाविंशत्यधिकं पलशतं लोहभाजने मन्दं पचे-द्यावद्रसः शुष्कोभवेद्यावदादित्यपाकं वा कुर्यात् । तत पूतं महानीलसंज्ञं तत्तैलं पञ्चकर्मशुद्धस्य-नियतात्मनो जितेन्द्रियस्य पानादिषु प्रयोजितं सर्वान् जत्रूर्ध्वरोगान् हन्तीति सर्वजत्रूर्ध्वरोगघ्नं विशेषतः पलितघ्नं भवति । एभिरित्यादित्यव-ल्यादिभिः । सुबोधम् ॥

क्षीरं प्रियालं यष्ट्याह्व जीवनीयोगणास्तिलाः ।
कृष्णाः प्रलेपो वक्त्रस्य हरिल्लोमवली हितः ॥

क्षीरादिभिः कृष्णतिलान्तैर्वक्त्रस्य प्रलेपो हरिल्लोमसु वलीषु च हितः वलयस्त्वक् सङ्कोचाः ॥

तिला सामलका पद्मकिञ्जल्को मधुकमधु ।
बृंहयेद्रञ्जयेच्चैतत् केशान्मूर्ध्नि प्रलेपनात् ॥

तिलादिक मूर्ध्नि प्रलेपनात् केशान् बृंहयेद्रञ्जयेच्च ॥

पचेत् सैन्धवशुक्ताम्लैरयश्चूर्णं सतण्डुलम् ।
तेनालिप्तं शिरः शुद्धमस्निग्धमुषितनिशाम् ॥
तत्प्रातस्त्रिफला धौतं स्यात्कृष्णस्निग्धमूर्द्धजम् ॥

पचेदित्यादि सुबोधम् । [ सतण्डुलम् अयः कृष्णलोहस्य चूर्णं सैन्धवशुक्ताम्लैः सह पचेत् यावल्लेपनयोग्यो भवति । सैन्धवं सैन्धवज लवणम् । अम्लोपितकाञ्जिकम् । ततो रचनं स्येन शुद्धमस्निग्धमनभ्यक्तं शिरस्तेन लेपनद्रव्येण समन्तात् लिप्तं निशामुषितं प्रातः त्रिफलाक्वाथेन धौतं तत् शिरः कृष्णस्निग्धमूर्द्धजं कृष्णाः स्निग्धाश्च मूर्द्धजाः यस्मिंस्तत् स्यात् ] ॥

अयश्चूर्णोम्लपिष्टश्च रागः सत्रिफलोवरः ॥

अयश्चूर्णोम्लेन मद्यादिना पिष्टस्त्रिफलायुक्तोवरः श्रेष्ठो रागः केशरागः ॥

कन्यायास्तिलनिम्बबीजमधुकश्रेष्ठावचामा...
... ... पल्लेहेनमप्रा...

पालेस्थापितमासेक्षितितलेमासानिधायोध्धृत
पालित्यसल्लति च दर्पणानिभा हन्त्येतदभ्यञ्ज
[नात् ॥

कन्यायाश्चूर्णं छागलादिमासं विपाच्य जातेन स्नेहेनमभ्यञ्जावितमलोञ्छितम् । सुबोधम् । कन्यास्थूलैला ॥

बीजं श्लेष्मातकस्यव्यपगमिततुषं काञ्चिकश्लेष्मापिष्टैर्यालिप्तं लोहदण्डादिनकराकिरणैस्तापितात् पन्यवेत । तत्तैलं केशकार्ष्ण्यं जनयति परमं नावनाभ्यञ्जनाभ्यां मूर्द्धघ्राणाक्षिदन्तश्रवणगलरुजं हन्तिनिश्शपतय ।

लोहदण्डश्चत्रमयष्टिस्तस्मात्म्लका - ञ्चिकपिष्टश्लेष्मातकबीजलिप्तादातपस्थिताद्यत्तैलं स्यवते तन्नावनेनाभ्यञ्जनेन च केशकार्ष्ण्यं जनयति निश्शेषतश्च मूर्द्धादिरुजं हरति ॥

बलामधुकमधुकं विदारी चन्दनोत्पलैः ।
जीवकर्षभकद्राक्षा शर्कराभिश्च साधितः ॥
प्रस्थस्तैलस्य सक्षीरो जाङ्गलार्द्धतुलारसे ।
नस्यं सर्वोर्ध्वजत्रूत्थवातपित्तामयापहम् ॥

जाङ्गलमांसस्यार्द्धतुला तुलार्द्धं तस्य रसे कषाये कल्कैर्बलादिभिः समक्षीरस्तैलस्य प्रस्थः साधितः सस्नेन नस्यं सर्वान् ऊर्ध्वजत्रूत्था - नामयानपहन्ति ॥

मयूरपक्षपित्तान्त्रपादविट्तुण्डवार्जितम् ।
दशमूलबलारास्ना मधुकैस्त्रिफलैर्युतम्
...ले पक्त्वा घृतप्रस्थं तस्मिन् ...

सर्वेन्द्रियाणि येनास्मिन् प्राणा येन च संश्रिताः ।
तेन तस्योत्तमाङ्गस्य रक्षायामादृतो भवेत् ॥

इत्यष्टाविंशोऽध्यायः ॥

येनास्मिन्नुत्तमाङ्गे सर्वेन्द्रियाणि संश्रितानि येन चास्मिन् प्राणाः संश्रिताः तेनोत्तमाङ्गरक्षायामादृतो भवेदिति ॥

इति बुधविरचितायामष्टाङ्गसंग्रहव्याख्यायामुत्तरस्थानेऽष्टाविंशोऽध्यायः ॥

इति शालाक्य नाम चतुर्थमङ्गमष्टाङ्गस्य समाप्तम् ॥

## एकोनत्रिंशोऽध्यायः ॥

### व्रणविभक्तिपरिज्ञानीयम् ।

निजप्रधानानां चिकित्सितमुक्त्वागन्तुप्रधानानामवसरोत शल्यतन्त्रमारभ्यते । सर्वस्य च शल्यस्य व्रणफलत्वाद्व्रण एवादौ विचार्यते । व्रणस्य तु स्वरूपज्ञाने हेत्वादिकं वक्तुं न पार्यते । न हि स्वरूपं सामान्यतः प्रसिद्ध्यैव ज्ञायते । विशेषेस्त्वागमोऽपेक्ष्यते । अतो व्रणविभागपरिज्ञानार्थमध्याय आरभ्यते ॥

अथातो व्रणविभक्तिपरिज्ञानीयं नामाध्यायं व्याख्यास्याम इति ह स्माहुरात्रेयादयो महर्षयः ॥

अथेत्यादि पूर्ववद्व्याख्येयम् । व्रणनज्ञातुं निरूप्यते ॥

यावदायुर्वृणीते विवृणोति वा शरीरमिति व्रणः ॥

यावदित्यादि । यावदायुरायुरन्तं यावच्छरीरं वृणीते विवृणोति वाऽतो व्रणः । वृणीत इति वृङ्सम्भक्तावित्यस्य रूपम् । सम्भक्तिः प्रार्थना । विवृणोति प्रकटयति साशयत्वात् प्रार्थयते ॥

स च द्विविधो निज आगन्तुश्च । तत्र निजो दोषसमुत्थः । आगन्तुः शस्त्रानुशस्त्रोपलल-गुडनखदशनविषाणविषारुष्करादिनिमित्तः । सोऽपि पुनर्वातादिभिरधिष्ठितो निजतां लभते ॥

स च व्रणो निजागन्तुभेदेन द्विविधः । तत्र यो दोषनिमित्तो वातादिकोपहेतुः स निजः । आगन्तुः शस्त्रादिनिमित्तः । आदिग्रहणेन शेषाणां क्षतकराणां ग्रहणम् । साप्यागन्तुर्व्रणो यदा वाताद्यधिष्ठानतां प्राप्नोति तदा निजसंज्ञामेव लभते ॥

पुनश्च द्वेधा व्रणो दुष्टः शुद्धश्च । तत्र दोषदूषितो दुष्टः ॥

पुनरन्येन प्रकारेण द्वेधा द्वाभ्यां प्रकाराभ्यां व्रणो भवति । एको दुष्टव्रणो द्वितीयः शुद्धव्रणः । पूर्वोक्ते च द्वयेऽप्येतद्द्वयं सम्भवति । ननु दुष्टः क उच्यत इत्याह । तत्रेति तत्र द्वयोर्मध्ये स दुष्टो विज्ञेयो यो दोषैरधिष्ठितः ॥

कथं स ज्ञायत इत्याह ॥

स्मिन् व्रणे सतथोक्त । स्रावादियुक्त सिराद्य वततो मन्दवेदनः कठिनश्च । अवततो व्याप्त ॥

प्रवालरक्त कृष्णस्फोटपिटकाजालोप चितो वाजिस्थानगन्धि । सरक्तपूयस्रावी पित्तलिङ्गश्च रक्तात् ॥

प्रवालरक्तत्वादिगुणो रक्तात् भवति । प्रवळवद्विद्रुमवद्रक्तो लोहित । कृष्णै. स्फोटै· पिटकाजालैरुपचितो व्याप्त. । वाजिस्थानमश्व शाला तत्समगन्ध । पित्तलिङ्ग. पित्तव्रणल- क्षण ॥

यथा स्वलिङ्गसङ्करे द्वाभ्या त्रिभि स वैश्चदुष्ट विद्यात् । अपि च । घृतमण्डाभो म त्स्यधावनगन्धिर्मृदुर्विसर्पी कृष्णोष्णपूयश्च पि त्तरक्ताभ्याम् ॥

यथा स्वलिङ्गसङ्करे लक्षणसङ्करे समर्गजो व्रण । अपि चेति पित्तरक्ताभ्या द्विसयोगज- त्वोऽप्याधिकमनुबध्नं । घृतमण्डाभत्वादियुक्तो व्र णः पित्तरक्ताभ्या भवति । घृतमण्डाभो वर्ण स्निग्धत्वाभ्यामिति पञ्चदशभेदस्य दुष्टव्रणस्यल क्षणमुक्तम् ॥

वातादिभिरेव च व्रणस्यानधिष्ठान शु- द्धिः । तत्र यथोक्त दुष्टलिङ्गाभावात् सर- म्भरहितत्व जिह्वावर्णताश्लक्ष्णत्व नीरुजत्व निरास्रावता स्यात्पर्यन्तत्वं समोष्ठम यता कि ञ्चिदुन्नतमध्यता वा ॥

व्रणस्य वातादिभिरनधिष्ठान शुद्धि । ~ त्र विशुद्धे व्रणे यथोक्ताना सामान्येन ^ चोक्ताना दुष्टव्रणलिङ्गाना मभावाद्वेतो स्वाभा- विक सरम्भहितत्वादिक भवति । सरम्भो वेद नाविशेष· ॥

त्वङ्मांससिरास्नायुसन्ध्यस्थिकोष्ठमर्मा- ण्यष्टौ व्रणाशयाः । आशयविशेषाच्च स्राव- विशेष ॥

तस्य च व्रणस्यत्वगादीन्यष्टावाशया. । आशयविशेषाच्च व्रणस्य स्रावविशेष ॥

तत्र घृष्टासु वा त्वक्षु स्फोटेषु वा भिन्नेषु सलिलप्रकाशो भवत्यास्राव । किञ्चिद्विस्र पीतावभासश्च ॥

तत्रेत्यादिना आस्रावविशेषा उच्यन्ते । घृष्टासु भिन्नासु वा शस्त्राद्यागन्तुना । स्फोटेषु वा भिन्नेष्विति निज ॥

मासगत सर्पि प्रकाशो बहळ पिच्छि- लश्च ॥

मासगतव्रणास्राव सर्पि प्रतीकाशो ब- हळो घन पिच्छिलश्च ॥

सिरागतस्तु सद्य छिन्नासु सिरासु र- क्तातिप्रवृत्ति' । पक्वासु च तोयनाडीभिरि वाम्भस पूयस्यागमनम् । स च तनुर्विच्छि- न्न. पिच्छिलोऽवलम्बी श्यावश्च ।.

सिरागतस्तु सद्य छिन्नासु पक्वासु च सिरासु रक्तातिप्रवृत्त्यादिलक्षणो भवत्यास्राव ॥

स्नायुगत स्निग्धो घन सिं॰ सरक्तश्च ॥

स्राव ११ आस्राव. स्निग्धत्वादिगुण ।
सिङ्घाणकप्रतिमो नासास्रावसन्श ॥

सन्निगत. समन्तात् प्रपीड्यमानो न प्रवर्तते तथाकुञ्चनप्रसारणोन्नमननमनप्रवाहणेषु स्रवति पिच्छिलोऽल्पश्री स फेनरुधिरो िमिश्रश्च ॥

सन्धिगतस्त्वास्राव समन्तात् प्रपीड्य मानो न प्रवर्तते तथा यथा कुञ्चनादिषु स्रवति । पिच्छिलादिगुणश्च भवति ॥

अस्थिस्थभिहत स्फुटित भिन्न द पार दारित वा दोपभक्षितत्वान्निस्सार भवति । आस्रावश्चात्र मज्जमिश्र सरुधिर स्निग्धश्च ॥

अस्थित्वभिहत स्फुटितादिगुण भवति । अथवा ोषादारितमस्थिदोषभक्षितत्वान्नि - स्सार साररहित भवति । मार्गो मज्जा । अत्रे स्य ५ यभिहते दावावदारिते च । आस्रावश्च मज्जमिश्रितत्वादिगुण॰ ॥

कोष्ठाश्रितस्तु व्रणः मूत्रपुरीषरुधिरपूयोदकानि स्रवति ॥

कोष्ठाश्रितो व्रणस्तु मूत्रपुरीषादीनि स्रवति ॥

मर्मगतस्तुनोच्यते त्वगादिष्वेवावरुद्धत्वात् ॥

मर्मगतस्त्वास्राव प्रयत्नोन्यतेत्वगाद्यवरुद्धत्वान्मर्मणाम् । तद्यथा तरोस्त्वत्रगादिमन्त्रमपहायमर्मणा सम्भवाति । तेपुचोक्तेपू-क्रान्वेन ।

तेपु यथापूर्वं सुखसाध्यत्वम् । तथाऽयतश्चतुरश्रोऽष्टचत्रिपुटकश्च व्रण । शेपास्तु विकृताकृतयोदुरुपचारा । ते च प्रायशोभग्न्त्यागन्तव । स्वय विदीर्णाश्च दोपजा न तु वैद्यकृता ॥

तेपु च त्वगादिव्रणेषु यथापूर्वं सुखसाध्यत्वम । यो यस्मात् पूर्वं स तस्मात् सुखसाध्य । तत्र कोष्ठव्रणादस्थिव्रण सुखसाध्य । ततोऽस्थिव्रणात् सन्धिव्रण इति यथापूर्वं व्याख्यय । यन्नायत चतुरश्रादिरूपो व्रण सोपि तथा सुखसाध्य । अत शेपाये विकृताकृतयस्तेतु दुरुपचारा । ते च दुरुपचारा आगन्तव प्रायेण भवन्ति । निजा अपि ये स्वयपाकादिना विनीर्णा विकृताकृतयस्ते च दुरुपचारा । न वैद्यकृता ये तु विकृताकृतयोपि सुसाध्या भवन्ति वैद्यो हि बुद्धिपूर्वकमेव प्रयोजनापि तथा सुखसाध्या तत्राभिधास्यति विदध्यादिति ॥

वयस्थाना दृढाना प्राणवता सत्त्ववता मात्मवता दीप्ताग्नीना च व्रणा सुचिकित्स्या ॥

वयस्थादीनामाशु व्रणसरोहो भवति ॥

कुत इत्याह ।

तत्र वयस्थान, प्रत्यग्रधातुत्वादाशुव्रणसरोहो भवति । दृढाना स्थिरवन्मांसत्वाच्छस्त्रमवचार्यमाण सिरा स्नाय्वादीन् न प्राप्नोति । प्राणवता वेदनाहारविहारयन्त्रणादिभिर्न्ग्लानि सत्त्ववता दारुणैरपि क्रियाविशेषर्व्यथा भवति । आत्मवता सुनियमिताहारविहा

रादिभिरुपद्रवैर्नान्यथा भवति दीप्ताग्नी नाम प्रक्लिन्नदेहत्वात् । प्रकृतिस्तथा प्रक्लेदिशरीराणां तद्विधयोश्च देशकालयोरास्रावदौर्गन्ध्याभावादाशुविशुद्धेन मासेनानुपद्रवमापूरणम् ॥

तत्रेत्यादि सुबोधम् । दीप्ताग्नी नाम प्रक्लेदित्वप्रसङ्गेन निर्दिष्टमपि स्वभावाप्रक्लेदित्वमप्रक्लेदिदेशकालभावश्चेति निर्दिष्टम् ॥

एत एव गुणा वृद्धकृशाल्पप्राणभीरुमन्दाग्निप्रक्लेदिदेहदेशकालेषु विपरीता शिष्योपनयनीये चेक्षेत ॥

एत एव चाशुव्रणसंरोहादयो वयस्थादीनां गुणा वृद्धादिषु विपरीता भवन्ति । शिष्योपनयनीयचाध्यायमीक्षेत साध्यत्वपरिज्ञानार्थेति शेषः । [वृद्धानामल्पधातुत्वाच्चिराद्व्रणसंरोहो भवतीत्यादि विपरीतत्वम् ॥ ]

तथा स्फिक्पायुप्रजननललाटगण्डोष्ठपृष्ठकर्णफलकोशोदरजत्रुमुखाभ्यन्तरस्था सुखरोपणीया । विपरीतास्त्वक्षिदन्तनासापाङ्गश्रोत्रनाभिजठरसेवनीनितम्बपार्श्वकुक्षिवक्षःकक्षास्तनसन्धिभागगता । सफेनपूयरक्तानिलवाहिनोऽन्तःशल्याश्चाधोभागाच्चोर्ध्वभागनिर्गमना रोमान्तोपनखमर्मजङ्घास्थिप्राणाश्रिताश्च । भगन्दराश्चान्तर्मुखाः सेवनीकट्यस्थिसंश्रिताः । अपि च ॥

स्फिगादिस्था व्रणाः सुखरोपणीयाः । अक्षिदन्तादिगतास्तु विपरीता दुःखरोपणीया इत्यर्थः । फलकोशो वृषणः । ये च व्रणाः सफेनपूयादिवाहिनोऽन्तःशल्याश्च तेऽपि दुःखरोपणीयाः । तथा येऽपि देहस्याधोभागाद्बाधिता ऊर्ध्वेन निर्गमन्ति कृच्छ्रा भवन्ति । तथा रोमान्ताद्याश्रिताश्च । अन्तर्मुखो भगन्दरो दुःखरोपणीयः सेवन्यादिसंश्रितश्च । अपि चेति श्लोकसूचये ॥

कुष्ठिनां विषजुष्टानां शोषिणां मधुमेहिनाम् ।
व्रणाः कृच्छ्रेण सिध्यन्ति येषां च स्युर्व्रणे व्रणाः ॥

कुष्ठ्यादीनां ये व्रणास्ते कृच्छ्रसाध्याः । [कुष्ठिनां त्वग्लसीकासृगाभिदूषणात् । विषजुष्टानां सर्वधातुदूषणात् । शोषिणां धातुसंहननाभावाद्रक्तक्षयाच्च । मधुमेहिनां सर्वधातुक्षयाद्द्रावकारणतया वा । येषां पुरुषाणामेव विधैर्हेतुभिर्व्रणप्राये शरीरे पुनरपि व्रणाः स्युस्ते व्रणाश्च कृच्छ्रसाध्याः ॥ ]

याप्यास्त्ववपाटिका निरुद्धमणिनिरुद्धगुदव्रणग्रन्थिप्रभृतयः सर्वास्थिक्षतं च ॥

अवपाटिकादयो गुह्यरोगे वक्ष्यमाणलक्षणा याप्याः ।

असाध्याः पुनर्मांसपिण्डवदुद्गता प्रसेकिनोऽन्तःपूया वेदनावन्तोऽश्वपायुवदुद्वृत्तौष्ठाः कठिना गोशृङ्गवदुन्नतमांसप्ररोहा दुष्टशोणितास्राविणस्तनुपिच्छिलास्रावस्राविणो वा मध्योन्नताः समन्ततः सुषिरपर्यन्ताः शणतूलवत्स्नायुजालवन्तो दुर्दर्शना मेदोमज्जवसामस्तुलुङ्गस्राविणश्च दोषसमुत्थाः पीतासिता मूत्रपुरीषवातवाहिनश्च कोष्ठस्था रक्तान्यजा-

श्च क्षारोदकसमास्रावा' तथा मांसजा क्षायाम्भोनिभास्रावा पक्वाशयजाश्च पुलाकोदकमिव स्रवन्त क्षीणमांसाना च सर्वतोगत्वस्त्वणुमुखमासुद्बुदवन्त सशब्दवाताहिनश्च शिर कण्ठस्था विसर्पज्वरपिपासारोचका विपाककासश्वासातीसारच्छर्दियुक्ता भिन्ने च शिर कपाले यत्रमस्तुलुङ्गदर्शन त्रिदोषलिङ्गप्रादुर्भावो नास्त्यादिति । भवति चात्र ॥

असाध्यमामपिण्डवदुन्नताये स दध्युक्ते । सुबोधम् । तथा दुष्टरक्तास्राविणो वात वादिगुणास्रावस्राविणो वा । शणतूल शणास्थावसूक्ष्मरोम । दुर्दर्शनार्थ स्नायुजालवन्तो दुष्टनाडिका । ये च दोष समुत्था सन्तो मेद प्रसृतिवाहिन' । सुबोधम । क्षीणमांसाना पुसा सर्वतोगतित्वाच्युपिरा । नाडिर्नाडी । मस्तुलुङ्ग' कपालपूरणम । गतानुगतिका ॥

स्नायुक्लेदात् सिराच्छेदात् गाम्भीर्यात् कृमि [भक्षणात् ।
अस्थिभेदात्सशल्यत्वात्सविषत्वादतर्कितात् ।
मिथ्याबन्धादतिस्नेहाद्रौक्ष्याद्रोमादिघट्टनात् ।
क्षोभादशुद्धकोष्ठत्वात्सौहित्यादतिकर्शनात् ॥
मद्यपानाद्दिवास्वप्नाद्व्यवायाद्रात्रिजागरात् ।
व्रणोमिथ्योपचाराच्च नैवसाध्योपि सिध्यति ॥

स्नायुक्लेदादित्या व्रण साध्योपिनैवसिध्यतीतिसम्बन्ध च । अतर्कितात्सभया विशेषमनधिगते । रोमादीत्यादिशब्देन तृणपांस्वादीना ग्रहणम् । [अशुद्धकोष्ठत्वात यथाकालेऽन्तिश्रम-नाद्यभावेनाशुद्ध । सदोष: कोष्ठोयस्य तस्य भावास्तस्मात् । सौहित्यादतितृप्त्या । अति कर्शनादनशनात् । मिथ्योपचारात् शस्त्रकर्मविष क्वोपचारविभ्रमात् ॥ ]

कपोतवर्णप्रतिमा यस्यान्ता' क्लेदवर्जिताः ।
स्थिराश्चपिटकावन्तोरोहतीतितमादिशेत् ॥

इत्येकोनत्रिंशोऽध्याय ॥

कपोतवर्णप्रतिमपर्यन्तादिरोहद्व्रणलक्षणम । पिटकावन्त बुद्बुदसङ्कोचप्रायाः । [यस्या व्रणस्यान्तर्मध्य पर्यन्तो वा कपोतवर्ण प्रतिम कपोततुल्यवर्ण क्लेदवर्जित क्लेदरहित स्थिर स्थिरव्रण वृद्धिक्षयरहित इत्यर्थ च चिपिटकावान चिपिटकायुक्त चिपिटका (अरिप्पुण्ण इति भाषाया) त व्रण रोहतीति निर्दिशेत ॥ ]

इतीन्दुविरचितायामष्टाङ्गसङ्ग्रहव्याख्यायामुत्तरे एकोनत्रिंशोऽध्याय ॥

---

## त्रिंशोऽध्यायः ॥

---

### व्रणप्रतिषेधम् ॥

व्रणत्वविभाग दर्शयित्वा साध्यस्य चिकित्सा प्रदर्शयितुमध्याय आरभ्यते ॥

अथातो व्रणप्रतिषेध नामाध्याय व्याख्यास्याम । इति ह ॥

निजस्य प्राधान्यात् प्रथमनिर्णयः । सञ्चयतः शोफपूर्वकोभवत्यत उच्यते ॥

व्रणस्य शोफावस्थायां शस्त्रकर्मविधौ श्वयथुचिकित्सिते च साधनमुद्दिष्टम् । तत्रापतर्पणमेवादौ प्रधानतमम् । अपि च ॥

व्रणस्यशोफावस्थायामित्यादि सुबोधम् । अपतर्पणं सर्वं लङ्घनम् । अपिचेत्यपतर्पणविभागसमुच्चयाय ॥

दोषाच्छ्रयोपशान्त्यर्थमुपदिष्टं यथायथम् । अवेक्ष्यदेहप्राणादीन् कर्तव्यमपतर्पणम् ॥

दोषाणामुच्छ्रायस्योपशान्त्यर्थं यदपतर्पणमुपदिष्टं तद्देहादीनवेक्ष्य यथायथं कर्तव्यम् ॥

रागसंरम्भरहिताः परिम्लानाहृताश्रयाः । सद्यःशाम्यन्तिशुद्धानांव्रणाःशोफाश्चदेहिनाम्॥

राग इत्यादिना शोधनाख्यस्यापतर्पणस्य फलद्वारेण गुणकीर्तनम् । शुद्धानां देहिनां व्रणाः शोफाश्च सद्यः शाम्यन्ति ॥

लेपाभ्यङ्गपरीषेकान् यथोक्तांश्चप्रयोजयेत् । यथाम्बुभिः सिच्यमानः शान्तिमग्निर्नियच्छति। दोषाग्निरेव सहसा प्रलेपाद्यैः प्रयोजितैः ॥

तत्र च व्रणे लेपादीन् यथोक्तान् सामान्यविशेषत उक्तान् प्रयोजयेत् । यथेत्यादिना दृष्टान्तपूर्वकं लेपादीनां प्रभावकीर्तनम् ॥

प्रतिलोममेवचानुलिम्पेन्नानुलोमम् । तथाह्यौषधं सम्यगवतिष्ठते । अनुप्रविशति च रोमकूपान् । न तु शुष्यदुपेक्षितव्यमन्यत्र पीडयितव्यात् । शुष्कं हि दाहोपरागश्यावत्वशूलानि वर्द्धयति ॥

प्रतिलोममित्यादि सुबोधम् । तथाहीति प्रतिलोमलेपनेन । पीडयितव्ये व्रणे शुष्यदुपेक्षितव्यमेव । अन्यत्र कुतो हेतोः शुष्यदौषधं नोपेक्षितव्यमित्याह शुष्कं हीत्यादि ॥

यस्तुशीतस्तनुर्मुहुर्मुहुश्च प्रयुज्यते स प्रदेहो रक्तपित्तत्वचां प्रसादकृत् । प्रलेपस्तूष्णः शीतो वा बहलश्च तथा वातश्लेष्मप्रशमनस्तस्योपयोगः क्षताक्षतेषु । यस्तु क्षतेषूपयुज्यते स भूयः कल्क इति संज्ञां लभते ॥

यस्तु शीतादिगुणः पुनः पुनश्च प्रयुज्यते सरक्तादिप्रसादकृत् एवम्भूतस्य प्रदेह इत्याख्या । यस्तूष्णादिगुणस्तथेति पुनः पुनर्युज्यते स प्रलेपाख्यो वातश्लेष्मप्रशमनः तस्य प्रलेपस्य क्षतेचाक्षतेचोपयोगः । सुबोधम् । भूय इति पुनः प्रलेपसंज्ञायां स्थितायाम् ॥

दशविधश्च समासादालेपः । तद्यथा । स्नैहिको निर्वापणः प्रसादनः स्तम्भनो विलायनः पाचनः पीडनः शोधनो रोपणः सवर्णीकरणश्च ॥

समासात् सङ्क्षेपतः स्नैहिकादिभेदेन दशविध आलेपोनामभिरेव व्याख्यातार्थः ॥

तत्र वाते स्निग्धद्रव्यैः स्नेहाढ्यैः स्नेहेनैव वा स्नैहिकः । पित्ते पित्तप्राये च शोफे विषाग्निक्षारदग्धे च शीतैर्निर्वापणः । स

एव चान्तर्दुष्टे रक्तप्रसादनं । स एव च पुनरस्रातिप्रवृत्तौ स्तम्भनसंज्ञः । श्लेष्ममेदोभूयिष्ठे शीतैश्चाविदग्धे पिण्डलब्धे ग्रथिते वा रूक्षैर्विलायनं । तैरेव च विदग्धे पाचनं । सूक्ष्मास्ये व्रणे रूक्षे पिच्छिलैश्च पीडनं । अशुद्धे यथास्वमुपदिष्टे शोधनं । शुद्धे रोपणं । रूढे च सवर्णीकरणं । नामभिरेवैषां स्वरूपमाख्यातम् ॥

प्रलेपेत्यादिना दशविधो नामालेपानां विषयाद्भेदः चाख्यायते । स एव स एवेति यथोक्तलक्षणो निर्वापणं । अविदग्ध परिवाखना प्राग्पाकावस्थं । तैरवति शीतादिगुणैः । अशुद्ध इत्यादिना शोधनादीनां क्रमेण प्रयोगकथनम् ॥

न च प्रदेहं रात्रौ प्रयुञ्जीत । माभूच्छैत्यपि हितस्योष्मणो बहिरनिस्सरणाद्विकारपरिवृद्धिः ॥

रात्रौ प्रदेहं न प्रयुञ्जीत । कायुक्तिरित्याह माभूच्छैत्य इत्यादि रात्रिशैत्येन शरीरोष्मणः कृतपिधानस्य सुतरां बहिरनिस्सरणाद्विकारपरिवृद्धिर्माभूदिति ॥

पुष्कलावतस्तु पठति ॥

पुष्कलावतनामा ऋषिस्तु पठतीत्यनेन रात्रौ लेपप्रतिषेधे युक्त्यन्तरप्रदर्शनं करोति ॥

तमसापि हितोष्मा रोमकूपैरनावृतैः ।
लेपाद्दिनेव निर्याति रात्रौ नालेपयेदतः ॥

यदात्रौ तमसापि हितः शरीरोष्माऽनावृतैः रोमकूपैर्लेपाद्दिनेव निर्यात्यतो नालेपयेत् ॥

न च पर्युषितं लेपं दद्यात् भूयस्तमेव वा ।
अम्लः पर्युषितो हि स्यात् भ्रष्टवीर्यस्तथेतरः ॥

न चेत्यादि सुबोधम् । पर्युषितं हानिष्टम् । भूयस्तमेवेति योद्दस ॥

शोफे व्रणे च कठिने विवर्णे वेदनान्विते ।
सविषे च विशेषेण जलजाद्यैर्हरेदसृक् ।
वेदनायां प्रशान्त्यर्थं पाकस्याप्राप्तयेऽपि च ॥

शोफे व्रणे वा कठिनादिगुणे जलजाद्यैरस्राहरणम् । किम्प्रयोजनमित्याह । वेदनाया इत्यादि । [अत्र विशेषशब्देन सर्वधातुदूषकस्यापि विषस्य विशेषाद्रक्तदूषकत्वं सूचितम् ॥]

निर्वापणान् पुनश्चात्र न्यग्रोधाद्यैः सुशीतलान् ।
कुर्यात् प्रदेहसेकादीन् सघृतक्षीरशर्करान् ॥

अत्र पुनश्च विस्राविते रक्ते निर्वापणान् पूर्वोक्तलक्षणान् सुशीतलान् प्रदेहादीन् घृतादियुक्तान् कुर्यात् । कैरौषधैरित्याह । न्यग्रोधाद्यैर्न्यग्रोधोदुम्बरेत्यादिभिः ॥

तान्येव पठति ॥

न्यग्रोधोदुम्बराश्वत्थप्लक्षवेतसवल्कलैः ।
प्रदेहो भूरिसर्पिर्भिः शोफनिर्वापणं परम् ॥
प्रदेहः ससितस्तद्वत् सक्तवो मधुरः घृतम् ।

न्यग्रोधादीनां वल्कलैः स्त्रग्भिर्भूरिसर्पिर्भिः प्रदेहः परं शोफनिर्वापणं । सुबोधम् ।

[सक्त्वादिभि सितासहित प्रदेहस्तद्वत् पूर्वगुणः ॥ ]

वातोद्वणानां स्तब्धानां कठिनानां महारुजाम्
स्रुतासृजां च शोफानां व्रणानामपि चेदृशाम् ॥

ग्राम्यानूपौदकामिषवेशवारकृसरापायसोत्कारिकाभि स्वेदो योज्यः ॥

वातोद्वणादीनां शोफानां वा व्रणानां वा ग्राम्यादिमांसवेशवारादिभिरुत्कारिकाभि स्वेदो योज्य ॥

सदाहशूलास्तु तिलानतसीं च भृष्ट्वा पयसि निर्वाप्य तेनैव क्षीरेण पिष्ट्वा प्रलेपयेत् ॥

सदाहशूलानिति शोफान्वा व्रणान्वा । सुबोधम् । निर्वाप्य पयसि क्षिप्त्वा ॥

बलामधुकपृश्निपर्णीच्छिन्नरुहामीरुजीवन्तीशर्करामदनक्षीरमहास्नेहसिद्धोत्कारिकाकवोष्णा शूलदाहहरा ॥

बलादिसिद्धोत्कारिका कवोष्णा सती शूलदाहहरा । उत्कारिका क्षिप्तपिण्डी ॥

तद्वन्मधुकयवचूर्णतैलसर्पिर्भि. कोष्ण आलेप. । तथा सतिलो मुद्गपायसमुपनाह ॥

मधुकादिभि कोष्ण आलेपस्तद्वदिति शूलदाहहर. । तथैव तिलमुद्गाभ्यां पायसेनोपनाह ॥

दशमूलसिद्धेन सुखोष्णेनाम्भसा पयसा वा घृततैलाभ्यां वा परिषेक शोफे व्रणे वा दाहशूलघ्न ॥

दशमूलसिद्धेन सुखोष्णेनाम्भसा परिषेक । पयसा वा दशमूलसिद्धेन सुखोष्णेन, घृतेन, तैलेन वा, द्वाभ्यां वा, परिषेक शोफे दाहशूलघ्नो व्रणे वा ॥

स्थिराणां मन्दवेदनानां शोफानां विम्लापनं कार्यम् ॥

स्थिरादिगुणानां शोफानां विम्लापनं कार्यम् । विम्लापनं विलयनम् ॥

अभ्यज्येत्यादिना तदेवोच्यते ॥

अभ्यज्य स्वेदयित्वा च वेणुनाड्या तत शनै' ।
विम्लापनार्थं मृद्नीयात्तलेनाङ्गुष्ठकेन वा ॥

सुबोधम् । तलो हस्ततल । [अभ्यज्य वातकफघ्नै स्नेहैरभ्यङ्ग कृत्वा पिण्डद्रवनाड्यान्यतमेन स्वेदेन स्वेदयित्वा च शब्द. समुच्चये तत स्वेदानन्तर विम्लापनार्थं विलयनार्थं विलयनार्थं वेणुनाड्याद्यन्यतमेन मन्द मन्द विमृद्नीयान्मर्दयेदित्यर्थ ।. ]

तथास्फोतपत्रमसूरकल्केन लेप । सुसिद्धपिष्टैः सघृतैर्मुद्गयवगोधूमैर्वा ॥

सुबोधम् । आस्फोतोऽर्क । मुद्गादिभिर्दिगुणै. प्रलेपः ॥

पीडनविषय प्रलेप शुष्यन्त शोष गच्छन्त समु पेक्षेत नापनयेदित्यर्थः । शुष्यन्तमित्युक्ततया-देव शुष्कस्यानुपेक्षणीयत्वमप्यर्थात् गम्यते । एत पीडनीय शोफ मुखे व्रणमुखेनैवा लिम्पेत न प्रलेपयेत । तथा एव विधे सति दोषः अन्तर्गतः पूयाशयो मल प्रसिच्यते प्रस्रवति] [आलेप. शुष्कोऽवपीड्य पूय नाडिर्निष्कासयति यस्तदवपीडन इति जर्ज्झट ॥ ]

अथ कि तत् प्रपीडनमित्याह ॥

कळाय यवगोधूममुद्गमाषहरेणव ।
द्रव्याणापिच्छिलाना च त्वङ्मूलानिप्रपीडने ॥

कळायेत्यादि । पिच्छिलाना शाल्मल्या-दीना द्रव्याणा त्वचोमूलानि च ।,

विवर्णान्पिच्छिलान्पूतिगन्धीनक्लेदरुजावत ।
व्रणानशुद्धान् विज्ञायसो ऽनैरेभिरुपाचरेत् ॥

विवर्णादिगुणान् व्रणानप्यवाशुद्धानि-तिविज्ञाय एभिर्वक्ष्यमाणै शोधनैरुपाचरेत ॥

कानिशोधनानीत्याह ॥

शङ्खिन्यङ्कोलसुमन करवीरसुवर्चला ।
त्रिफला खदिरो दार्वी कोलपत्र पलङ्कषा ।
प्रक्षाळने कषायाणिवर्गश्चारग्वधादिक ॥

शङ्खिनीत्यादि । शङ्खिन्यादीनि क पायरमानि च द्रव्याण्यारग्वधादिको वर्गश्चा शु-द्धाना व्रणाना प्रक्षाळने योज्य ॥

पटोलीतिलयष्ठ्याह्वत्रिवृद्दन्तीनिशाद्वयम् ।
निम्बपत्राणिचालेप सपटुर्व्रणशोधन ॥

पटोल्यादि ।। सलवण आलेपो व्रणशो धन । [पटोल्यादिक निम्बपत्राणि च आलेप. एतत् सर्वमालेपनद्रव्यमित्यर्थं सपटु' सैन्ध वोपेतो व्रणशोधनो भवति ॥ ]

अजगन्धाजश्रृङ्गी च गवाक्षी लाङ्गली निशा ।
पूतीकश्चित्रक पाठा पटोली वेल्लरेणुका ।
कटुत्रय यवक्षारो लवणानि सुराह्वजा ॥
निकुम्भकुम्भकाशीस हरितालमनःशिला ।
कल्काज्यतैलरसजाचूर्णवर्तिषु भेषजम् ॥

अजगन्धादीनि कल्कादिषु नयोगेण शा-कानां व्रणाना च भेषजम् । रसजा रसक्रि-या । वर्तिर्व्रणानिधेयाचेलमयी ॥

तत्र गम्भीरेषु पित्तात्मकेषु दाहपाकन त्सु व्रणेष्वतीक्ष्णोष्णैरेभि कार्पासीफलमिश्र कल्क घृत च साधयित्वा योजयेत् ।

तत्रेत्यादि ।। कल्काश्च उच्यन्ते । गम्भी रत्वादियुक्तेषु व्रणेष्वेभिरित्यजगन्धादिभि पूती कादितीक्ष्णोष्णद्रव्यरहितै कृत कर्पासीफलमि श्र कल्क घृत च साधयित्वा योजयेत् ॥

उत्सन्नमासेष्वनुपस्नातेषु रूक्षेषु तिला-पामार्गबृहतीद्वययुक्तैः पूर्वोक्तै पूतीकादिभि. सार्षप तैल च ॥

उत्सन्नमासादिषु व्रणेषु पूर्वोक्तै सर्वे पू-तीकादिभिस्तिलादियुक्तै सर्षपतैल चैक साध यित्वा योजयेदितिसम्बन्धः ॥

प्रचलप्रदेशजेषु क्लेदबहुलेषूत्सन्नास्थिरमा सेषु तैलेनचासि यस्तु रसक्रिया कुर्यात् ।

यथोक्ताना सशोधनौषधाना कषाये पुन प रिस्राव्याधिभूते मनःशिला तुवरीकासीसचूर्णप्रतीत्रापसिद्धा च मातुलुङ्गरसोपेता सक्षौद्रा युञ्जीत ॥

प्रचलप्रदेशजत्वादिपुस्तेपु व्रणेपु येच तैल तनगुष्यन्तितेपु च रसक्रिया कुर्यात् । यामित्याह । यथोक्तानामित्यादि ॥

मेदो युक्तेषु गम्भीरेषु क्लेदिषु कल्कक्रिया सिध्यन्तु ॥

वचाया सैन्धव निम्बे कासीसे रजनीद्वये ।
शोधनाप्ययेषुचान्येषु चूर्ण कुर्वीत शोधनम् ॥

मेदो युक्तादिषु व्रणेषु वचादिकेष्वन्यपि शोधनौषधेषु शोधन चूर्ण कुर्वीत ॥

अन्त शल्यानणुद्वारान् गम्भीरान् माससंश्रितान् ।
सन्धिमर्मनिविष्टाश्च शोधयेद्वर्तिभिर्व्रणान् ॥

अन्तश्शल्यप्रभृतिकान् व्रणान् वर्तिभि शोधयेदितिसम्बन्ध. ॥

वाताभिभूतान् सास्रावान् धूपयेदुग्रवेदनान्

श्रीवेष्टकसर्जरससालदेवदारु शिंशपा खदिरासन कैडर्यसारयवम् गुन्दिष्ठभूर्जपत्रक्षौमसर्पिभि

वातादिभूतत्वादिगुणान् व्रणान् श्रीवेष्टकादिभिर्धूपयेत् । नि । श्रीवेष्टको वायसिक श्रीवासश्चेति शब्दित. मालादीना सार । कैडर्य करञ्ज. । [वाताभिभूतान् उद्रिक्तवातान् । सास्रावानास्रावयुक्तान् आस्राव पूर्ववदुक्तम् । उग्रा अतिशयिता वेदना पीडा विशेषो येषा तानुग्रवेदनान् ॥ ]

निर्वापयेत् भृश शीतै पित्तरक्तविषोद्भवान्

पित्ताद्युद्भवान् व्रणान् भृश शीतैर्निर्वापयेत् । [उद्रिक्तपित्तानुद्भवरक्तान् विषयुक्ताश्च व्रणान् शीतैश्चन्दनोशीरादिशीतद्रव्यैर्भृशमतिशयेन निर्वापयेत् । लेपसेकादिनोष्मोपशमन कुर्यादित्यर्थ. । ]

शुष्काल्पमासे गम्भीरे व्रण उत्सादन हितम् ॥

अश्वगन्धापामार्गतालपत्री सुवर्चलावल्लातिवलानन्ता धातकीकुसुमसमङ्गाभि पत्तङ्गादिवर्गेणन्यग्रोधादिना च कल्कस्तथा सर्पिव्यभ्यञ्जनार्थे ॥

शुष्कमासादिके व्रणे उत्सादन मासवर्धन हितम् । अश्वगन्धादिभि कल्को वा सर्पिर्वा उत्सादनानि । [शुष्कमासे अल्पमासे गम्भीरे च व्रणे । गम्भीर निम्नम ॥ ]

अद्या मासादमासानि विधिनोपहितानि च ।
मासमासादमासेन वर्धते शुद्धचेतस ॥

उत्सादनार्थे च मासादाना सिंहश्येनादीना मासानि विधानेनोपहितानि संस्कृतान्यद्यात् । यत शुद्धचेतस शोकादिरहितस्य मासादमासेनाशस्य व्रणे मास वर्धते ॥

उत्सन्नमृदुमासाना व्रणानामवसादनम् ॥

सैन्धवकासीसमुमनो मुकुलगुग्गुलाचि-

व्रणाग्निमन्थदन्तीशिरीषकरञ्जफलभूर्जग्रन्थि-कुक्कुटाण्डत्वक्कपोतकलविङ्कपुरीषनेपालीहरितालचूर्णानि सक्षौद्राणि ॥

उत्सन्नमांसादीनां व्रणानामवसादनं प्रमांसनिम्नीकरणं हितम् । किं तदित्याह । अग्निमन्थेत्यादि । सुबोधम् । कलविङ्कोऽग्रामचटक ॥

सरुजे कठिने स्तब्धे रूक्षेशुष्यति च व्रणे ॥

मार्दवजननार्थं व्रणाविरोधि वातघ्न सिद्धस्य सर्पिषः पानम् । तद्विधैरेव च सिद्ध तैलमभ्यङ्गः । पूर्वोक्ताश्च स्वेदाः । तथा सर्पिर्मज्जवसाभिर्धूपाः सुस्निग्धसक्तुसंयाव किण्वतिलपिष्टकृसरपायसानूपवेशवाराः किञ्चिदुष्णा बहुशः प्रलेपाः ॥

सरुजादिके व्रणे व्रणाविरोधिभिः काञ्जिकादिरहितैर्वातहरैर्द्रव्यैः सिद्धस्य सर्पिषः पानम् । तद्विधैरिति व्रणाविरोधिभिर्वातहरैः । पूर्वोक्ता इति शोफाध्यायोक्ताः ॥

पित्तविद्रधिवीसर्पशोफकुष्ठघृतानि च ।
सर्वव्रणेषु योज्यानि पानसेकप्रलेपने ॥

पित्तजानां विद्रध्यादीनां यानि घृतान्युक्तानि तानि सर्वव्रणेषु पानादिषु योज्यानि ॥

अतिमृदुमांसेषु व्रणेषु दारुणीकरणार्थं त्रिफलालोध्रप्रसर्जजम्बूशिरीषदग्धशोकवल्कलानि । सौराष्ट्री कासीसरोचनावचूर्णनम् । सारैर्गन्धैश्च धूपः

अतिमृदुमांसेषु व्रणेषु दारुणत्वापादानाय त्रिफलादिवल्कलानि नानाप्रयोगैर्योज्यानि । सौराष्ट्र्यादिचूर्णेन हितम् । सारैरगुरुचन्दनादिभिर्गन्धद्रव्यैश्च मांसादिभिर्धूपः ॥

उत्सन्नमांसान् कठिनान् कण्डूयुक्तांश्चिरोत्थितान् ।
व्रणान् सुदुःखशोध्यांश्च शोधयेत् क्षारकर्मणा ॥

उत्सन्नमांसत्वादियुक्तान् व्रणान् क्षारकर्मणा शोधयेत् ॥

स्रवन्तोऽश्मरिजामूत्रं ये चान्ये रक्तवाहिनः ।
छिन्नाश्च सन्धयो येषां यथोक्तैर्ये च साधनैः ।
साध्यमाना न सिध्यन्ति शोध्याः स्युस्तेऽग्निकर्मणा ॥

ये व्रणा अश्मरिजाः सन्तो मूत्रं स्रवन्ति अ ये च ये रक्तवाहिनः येषां च सन्धयश्छिन्ना ये च सर्वेऽपि साधनैर्यथोक्तैर्न सिध्यन्ति ते सर्वे अग्निकर्मणा साध्याः स्युरिति सम्भावनायाम् ॥

व्रणानामथशुद्धानां रोपणानि प्रयोजयेत् ॥

असनादिन्यग्रोधादिवर्गत्वक्सल्लकीकुटजत्वचोपजिह्वा समङ्गा मूर्वाश्वगन्धारग्वधजातकीपुष्पाणि पत्रकादिश्च प्रक्षालनादिषु सप्त सुप्रयोज्या इति । भवन्ति चात्र ॥

एवमन्तःशुद्धानां व्रणानां रोपणं योज्यम् । किं तदित्याह । असनादीन्यादि । असनादिकं पत्रकाद्यन्तं प्रक्षालनादिषु सप्तसु प्रक्षालनालेपघृततैलरसक्रियाचूर्णवर्तिषु योजयेत् । गतानुगतिका ॥

उत्सन्नदुष्टपिशिते सास्त्रिष्यामशोणिते ।
व्रणे प्रच्छर्दनं शस्तं कफदुष्टे विशेषतः ॥
विरेचनं पित्तदुष्टे दीर्घकालानुबन्धिनि ।
रूक्षे सवेदने बस्तिरन्ते काये विशेषतः ॥

उत्सन्नरक्ताग्निगुणे व्रणे प्रच्छर्दनं शस्तम् । कफदुष्टे व्रणे विशेषेण प्रच्छर्दनम् । विरेको बस्तिश्च सुबोधः ॥

जत्रूर्ध्वजे च श्वयथौ कण्ड्वाढ्येतीक्ष्णनावनम् ।
तज्जण्वानिलाढ्येतु श्वयथौ स्नेहनावनम् ॥
तथास्रशोफरुक्स्रावे धूमोवातकफोद्धणे ।
रुजादिमातिवक्त्रस्थे यथास्वं कवलो हितः ॥

जत्रूर्ध्वजे कण्ड्वाढ्ये च श्वयथौ तीक्ष्णनस्यं शस्तम् । तज्जएवेत्यूर्ध्वजत्रुजन्मन्येव श्वयथावनिलाढ्ये च स्नेहनस्यम् । तथेत्यूर्ध्वजत्रुजन्य च व्रणे वातकफोल्बणे शोफादियुक्ते धूमः । वक्त्रस्थे रुजादिमतिव्रणे यथास्वं दोषाधिक्येन कवलो हितः ॥

द्वावाग्नी पञ्चमूलाख्यौ गणावथानिलापहः ।
ते व्रणे वातिके योज्याः कषायादिषु सप्तसु ॥
न्यग्रोधपद्मकाद्यौ तु पैत्तेवर्गश्च पित्तजित् ।
आरग्वधादिः श्लेष्मघ्नः कफे मिश्रास्तु मिश्रजे॥

द्वावाग्नी पञ्चमूलौ महद्ह्रस्वाख्यौ । अनिलापहोगणः शोधनादिकः इत्येनेवातिके व्रणे सप्तसु कषायादिषु योज्याः । कषायः क्वाथने । न्यग्रोधपद्मकाद्यौ गणौ पित्तजिद्वर्गश्च पित्तव्रणे सप्तसु कषायादिषु योज्यः । आरग्वधादिर्गण श्लेष्मघ्नवर्गैश्च कफजे । मिश्रजे व्रणे यथायोगं मिश्राः योगाः ॥

पिष्टोर्म्मर्चीतिकैर्लेपस्तैलसर्पिरसायुतः ।
घन कोष्णस्तथैव तु पयः पिष्टोघृतान्वितः ॥
तनुवस्त्रान्तरः शश्वत्पुष्णो गोमूत्रपेषितः ।
रूक्षस्तैलेन वा स्निग्धो बहलःकफजेहितः ॥

पिष्टोर्म्मरैरित्यादिना वातादिषु लेपविधानं सुबोधम् । घनः घनलेपश्चयमन्त वाते । तनुवस्त्रान्तर इत्येवमन्त पित्ते । कफे शश्वदुष्ण इत्यादि बहलो घनः ॥

अपेतपूतिमांसाना मांसस्थानामरोहताम् ।
कल्कसंरोहणं कुर्यात्तिलानांमधुकान्वितम् ।
स्निग्धोष्णतिक्तमधुरकषायत्वं ससर्वजित्॥

मांसस्थानां व्रणानामपगतपूतिमांसानामरोहतां सतां तिलानां कल्कः मधुकान्वितः संरोहणं कुर्यात् । स हि तिलकल्कः स्निग्धादिगुणत्वात् सर्वदोषजित् भवति ॥

स क्षौद्रनिम्बपत्राभ्यां युक्तः संशोधनःपरम् ।
पूर्वाभ्यांसर्पिषाचासौ युक्तः स्यादाशुरोपणः ।
तिलवद्यवकल्कन्तु केचिदिच्छन्तितद्विदः ॥

समधुकान्वितस्तिलकल्कः क्षौद्रनिम्बपत्राभ्यां युक्तः परं संशोधनः । असौ च मधुकान्वितस्तिलकल्कः पूर्वाभ्यामेव क्षौद्रनिम्बपत्राभ्यां सर्पिषा च युक्तः आशुरोपणो भवति । केचिदाचार्यारोपणविदस्तिलकल्कप्रकारेण यवकल्कमपीच्छन्ति ॥

सास्रपित्तविषागन्तुगम्भीरान्सोष्मणोव्रणान्।
क्षीररोपणभैषज्य शृतेनाज्येन रोपयेत् ।
रोपणौषधसिद्धेन तैलेन कफवातजान् ॥

योजयेत् । नळदादिचूर्णतिलपिष्टयामिश्रीकरणे नळदादिचूर्णं तिलचूर्णाद्दशांश योज्यम् । तिलाद्दशांश तिलपीडनेषु चूर्णं तु भैषज्यमेव प्रयुञ्ज्यात् । चूर्णातिरिक्तेन तु तैलभावोन्यूनेन भेषज्यफलभ्रंश इत्युक्तत्वात् । ततोऽनन्तरं स तिलापिष्ट ममक्षागन्धभैषज्यासिद्धदुग्धेन समस्तैर्गन्धभैषज्यैश्चोरकवाळकोशीरकुष्ठचन्दनादिगन्धद्रव्यै सिद्धेन पयसा सह यन्त्रयन्त्रे पीडयेत् । पीडनस्यतो यस्थाने पयो योज्यमित्यर्थः । पीडनोत्भूत त तैल पुन सक्षीरशुक्तं क्षीरशुक्तासहितै, म दूर्वैर्दूर्वयोपेतै शैलेयादिभिः पूर्वोक्तैर्नळदादिभिश्च सह मपय पयोयुक्त तैलाच्चतुर्गुणेन पयसा युक्तमित्यर्थः । उक्तं च सौश्रुते । चतुर्गुणेन पयसा तत्तैल विपचेत् भिषगिति । उत्तम श्रेष्ठ इद गन्धतैलाख्य तैलमस्थिस्थैर्यकृत् पानाभ्यङ्गादिना अस्थ स्थैर्यं करोति । विविधैरुपयोगैः पानाञ्जनभ्यङ्गादिभेदैःप्रयोगविशेषै वा तत्पित्तजनितान् वातपित्तोत्थान अतिवीर्यं अतिशयितमुत्कृष्ट वीर्यं यस्य तत् अतिक्रान्तमर्याद मित्यर्थ यथा भवति तथा व्यापिन सकलशरीरव्यापिनः विकारान् व्याधीनप्याशु न चिराज्जयति । गन्धतैलाख्येऽस्मिन्योगे वस तातिलका यौपच्छन्दसि केन्द्रवज्राख्यागताख्यानि क्रमात् पञ्चवृत्तानि च ॥ ]

इतीन्दुविरचितायामष्टाङ्गसग्रहव्याख्यायामुत्तरे द्वात्रिंशोऽध्यायः ॥

# त्रयस्त्रिंशोऽध्यायः ।

## भगन्दरप्रतिषेधम् ॥

व्रणतन्त्रप्रकरणे भगन्दराणां निर्णयं कर्तुमध्याय आरभ्यते ॥

अथातो भगन्दरप्रतिषेधं नामाध्याय व्याख्यास्यामः इति ह स्माहुरात्रेयादयो महर्षयः ॥

हस्त्यश्वपृष्ठगमनकठिनोत्कटकासनैः ।
अर्शोनिदानाभिहितैरपरैश्चानिषेवितैः ॥
अनिष्टदिष्टपाकेन सद्यो वा साधुगर्हणैः ।
प्रायेणपिटकापूर्वो योंगुलेद्व्यगुलेपि वा ॥
पायोर्व्रणोन्तर्बाह्यो वा दुष्टासृङ्मांसगोभवेत् ।
वस्तिमूत्राशयाभ्याशगतत्वात्स्यन्दनात्मकः ॥
भगन्दरः ससर्वोश्च दारयत्य क्रियावतः ।
भगवस्तिगुदास्तेषु दीर्यमाणेषुभूरिभिः ।
वात मूत्र शकृच्छुक्रं खैः सूक्ष्मैर्वहति क्रमात् ॥

हस्त्यश्वपृष्ठगमनादिभिः पायोरङ्गुले द्व्यङ्गुले वा निकटे यो व्रणो भवेत् स भगन्दरः । अर्शसां च निदाने ये हेतवोभिहितास्तैरप्यपरैर्निषेवितैरिति सम्बन्ध । यच्च किञ्चिद्दिनचर्यादावनिष्टमिति दिष्टमुक्त तस्य पाकेन फलपरिणामेन । सद्य साधुगर्हणैराचिरकृतसज्जननिन्दाभि । प्रायेण पिटका पूर्वमारम्भो यस्य स तथोक्तः । स च व्रण पायोरन्तर्मुखो वा भवेत् बहिर्मुखो वा । स च व्रणो वस्त्यादीनामभ्याशगतत्वान्निकटवर्तित्वात् स्यन्दनात्मकः स्रा-

व्रणाश्रयो भवति । स भगन्दरोऽक्रियावतोऽपथ्यशीलिन सर्वान् सफलान् भगादीन् दारयति च । तेषु भगादिषु दीर्यमाणेषु सै. स्रोतोभिर्बहुभि सूक्ष्मैर्वातादिचतुष्टय क्रमाद्वहति । [ निषेवितैर्नितरा सेवितैर्हस्त्यश्वपृष्ठगमनादिभि, हस्तिपृष्ठगमनमश्वपृष्ठगमन कठिनासनमुत्कटकासन च । अर्शोनिदानेभिहिता-युक्तानि यान्यपराण्यतिव्यवायादीनिति अर्शोनिदानाभिहितत्वे नैव हस्त्यश्वपृष्ठगमनादिषु सिद्धे पुनरप्यत्र कथनादेषा भगन्दरस्य विशेषकारणत्व सूचितम्। अथवा एव त्रिधैरपानमरुत्प्रकोपकारणैरन्यै च शब्द समुच्चये । अनिष्टदिष्टपाकेन पुराकृताशुभकर्मफलपरिपाकेन । अथवाऽनिष्टदिष्टस्य दिनचर्यानिर्दिष्टस्य पापकर्मण पाकेन फलपरिणामेन सद्य साधुगर्हणैरचिरकृताभि सज्जनि दाभि पायोर्गुदस्यैकाङ्गुलप्रमाणे वा निकटे वाशब्दाद्द्व्यङ्गुलत्र्यङ्गुलयोरपि ग्रहणम् । उक्त च शास्त्रान्तरे । पिटका जनयेज्जन्तोर्गुदनाड्या सुदारुणाम् । गुदस्यार्द्धाङ्गुलेनापित्र्यङ्गुलेत्र्यङ्गुलेपि वा इति । अन्तर्बहिर्भागे वाह्य बहिर्भागे वा। दुष्टासृङ्मासगो दुष्टरक्तमासाश्रित । बस्तिमूत्राशयाभ्याशगतत्वाद्वस्तेर्मूत्राशयस्य च सन्निकटत्वात् । बस्तिमूत्राशययोरवयवाशयविशेषत्वमङ्गविभागाच्छारीरान्ज्ञातव्यम् । स्यन्दनात्मक सदास्रावयुक्त. । प्रायेण बाहुल्येन पिटकापूर्व, पिटकापूर्वमारम्भो यस्य स तथोक्त । पूर्व पिटका जायते तत पाकाद्व्रण स्यादित्यर्थ । प्राय, शब्देन क्षतजस्य भगन्दरस्य पिटकया विना सम्भव सूचित । य एव विधो व्रण स भग दारयो रोग अक्रियावत प्रमादाच्चिकित्सामकुर्वतो नरस्य सर्वान् भगवस्ति गुदान् द्रारयति । अत्र सर्वशब्देन साकल्यग्रहण भगादीन् साकल्येन दारयतीत्यर्थ । भगादिदेशदरणात् भगन्दराख्यास्य । गुदप्रदेशदरणात् गुदन्दराख्या वस्तिप्रदेशदरणाद्वस्तिन्दराख्या कथ न युज्यत इति चेदत्र ब्रूमः । विशेषेण भगस्य दरणादन्यत्रापि भगवद्दरणाच्च भगन्दरइत्येवाख्या न गुदन्दरो न वस्तिन्दर इति । उक्त च भोजे । भग परिसमन्ताच्च गुद वस्ति तथैव च । भगवद्दारयेद्यस्मात्तस्मात् ज्ञेयो भगन्दर इति । च शब्द समुच्चये । तेष्विति तेषु भगादिषु दीर्यमाणेषु दारितेषु भूरिभिर्बहुभि, सूक्ष्मैः स्रोतोमुखैर्वातादीन् क्रमेण वहति । वातमथो वातम् । मारुतस्य सूक्ष्मस्रोतोगामित्वात् पूर्व वात वहति । द्रवरूपत्वात् पुनर्मूत्र वहति । गुदावयवस्य निकटवर्तित्वाच्च पुरीष वहति शुक्राशयस्य किञ्चिद्दूरतया अन्ते शुक्र चेतिक्रमार्थ । ]

(एव त्रिधस्य भगन्दरस्य नानायागन्तुकारणभेदादष्टविधत्वमाह । )

दोषैः पृथग्युतैः सर्वैरागन्तुः सोऽष्टम स्मृत ॥

स च भगन्दर पृथग्दोषै स्त्रिविधो भवति । युतैर्मिलितै त्रिधा तेन सृष्टर्गेण त्रय सन्निपातेनैक इति दोषजा । सप्तभगन्दरा अष्टमआगन्तु ॥

अपक्व पिटकामाहु पाकप्राप्त भगन्दरम् ॥

त च रोगविशेषमपक्वभूमिकास्थमाचार्यो, पिटकामाहु । स एव च पाकभूमिकामारूढो भगन्दर उच्यते ॥

गूढमूलाससंरम्भारुगाढ्या रूढकोपिनीम्।
भगन्दरकरीं विद्यात् पिटकामतस्त्वयोऽन्यथा ॥

या च पिटका गूढमूलत्वादिगुणा सा भगन्दरत्वमारब्धुर्विज्ञेया। अत उक्तादन्यथा वैपरीत्येन या पिटका सा भगन्दरकरीति न विज्ञेया। [दृढमूलामिति च पाठः। दृढमूला दृढमचञ्चलं मूलं यस्याः सा पुनः पुनरेकत्र पूर्वदेशे वोत्पत्तिर्दृढमूलत्वम्। ससंरम्भा संरम्भयुक्ता संरम्भो वेदनाविशेषः। रुगाढ्यामतिशयितपीडायुक्ताम्। रूढकोपिनीं तत्तत्प्रतिक्रियया व्रणे रूढेऽपि पुनः कोपउद्भवो यस्यास्तां पिटकां भगन्दरकरीं भगन्दराख्यव्रणजननीं विद्यात्। अत उक्तप्रकारादन्यथा वैपरीत्ये तु न भगन्दरकरीं पिटकामात्रामेव विद्यादित्यर्थः ॥]

तनुश्यावारुणातोदभेदस्फुरणरुक्करी।
पिटका मारुतात्

तन्वीत्यादिना वातादिविशेषेण भगन्दरपिटकाना लक्षणम्। सुबोधम्। श्यावादिगुणा वातात् पिटका। [तत्र तासु मध्ये मारुतोद्भवा पिटका श्यावारुणान्यतरवर्णातोदादिकरी च॥]

पित्तादुष्ट्रग्रीवावदुच्छ्रिता ॥
रागिणी तनुरूष्माढ्या ज्वरधूमायनान्विता ॥

उष्ट्रग्रीवावदुच्छ्रितेत्यादिगुणा पित्तात्। [पित्तात् पिटका उष्ट्रग्रीवावत् उष्ट्रस्य ग्रीवेवोच्छ्रिता उन्नता। उष्ट्रग्रीवा साम्येनौन्नत्याधिक्यमधोगुरुत्वं च ध्वनितम्। रागिणी रागयुक्ता। तनुरल्पा। ऊष्माढ्योष्मबहुला। ज्वरधूमायनाभ्यां युक्ता धूमायनं धूमोद्गमनप्रतीतिः ॥]

स्थिरा स्निग्धा महामूला पाण्डुः कण्डूमती कफात्॥

स्थिरादिगुणा कफात्। [कफात् पिटका स्थिरा अचला स्निग्धा महामूला पृथुमूला पाण्डु पाण्डरवर्णा कण्डूमती कण्डूयुक्ता स्यादिति शेषः ॥]

श्यावाऽऽताम्रा सदाहोषा घोररुग्वातपित्तजा ॥

वातपित्तजा पिटका श्यावादिगुणा। [वातपित्ताभ्यां जाता पिटका श्यावा श्याववर्णा आताम्रा ईषत्ताम्रवर्णा। द्विदोषजत्वादस्या द्विदोषवर्णयोः समत्वलक्षणरूपत्वासम्भवाद्वा ताम्रेत्युक्तम्। सदाहोषा दाहोषासहिता दाहः सर्वाङ्गीणस्तीव्रसन्तापः। ऊषा प्रादेशिकदाहः। घोररुक् घोरा उग्रा रुक् पीडाविशेषो यस्मिन् ॥]

पाण्डराकिञ्चिदाश्यावा कृच्छ्रपाका कफानिलात्

कफानिलाज्जाता पिटका पाण्डरादिगुणा। भिन्नरुक्पजा पिटका अर्शो भगन्दर एव नक्ष्यते। [कफानिलाज्जाता पिटका किञ्चित् पाण्डराधूसरवर्णा आश्यावा ईषच्छ्यावा च अत्यन्तविपरीतयोः श्यावपाण्डरयोः सङ्करादुभयोरपि वर्णयोः स्पष्टता भवतीत्यर्थः। कृच्छ्रपाका चिरपाका कृच्छ्रशब्देन पाचनौषधप्रलेपादिभिरपि पाकस्य दुष्करत्वं सूचितम् ॥]

पादाङ्गुष्ठसमा सर्वैर्दोषैर्नानाविधव्यथा।
शूलारोचकतृड्दाहज्वरच्छर्दिरुपद्रुता ॥

सर्वैर्दोषैर्जाता पिटका पादाङ्गुष्ठसमत्वादिगुणा। [सन्निपातोत्था पिटका मानतः स्थानादिभिः पादाङ्गुष्ठसदृशी। नानाविधा नाना-

प्रकारा व्यथा पीडाविशेषो यस्या सा तथा । शूलादिभिरहिता च । शूलादिप्रभृति, पाकान्तु स्ताना सर्वासा लिङ्गमिति केचित । क्षतजस्य भगन्दरस्य पिटकाभावात्पिटका नाभिहिता ॥ ]

(पिटकावस्थालक्षणमुक्त्वानन्तर भगन्दरावस्थालक्षणानुसारेण नामविशेषश्चोच्यते ॥ )

व्रणतायान्तिता पक्वा' प्रमादात्

ता सर्वा पिटका प्रमादात पक्वा व्रणता यान्ति । ता भगन्दरकारिण्य पिटका प्रमादादचिकित्स्येत्यर्थः । अत्र प्रमादशब्दकथनेन सावधानश्चेत् पाकादर्वाक् कोपद्रवकारिणीमेवविधा पिटका कदाचिदपि नापेक्षेत इति च सूचितम् । पक्वा व्रणता यान्ति व्रणत्व प्राप्नुवन्ति ॥ ]

तत्रवातजा ॥

चीयतेऽणुमुखैश्छिद्रैः शतपोनकवत्क्रमात् ।
अच्छस्रवद्भिरास्रावमजस्रफेनसंयुतम् ॥
शतपोनकसंज्ञोयं

तत्र वातजा पिटका पक्वासत्यणुमुखै छिद्रै शतपोनकवत् चालनीवत्क्रमाच्चीयते । किम्भूतैश्छिद्रैरित्याह । अजस्रमविच्छेदेनाच्छ फेनसंयुत चास्राव स्रवद्भि । अय भगन्दरो नाम्ना शतपोनक । आस्राव पूयस्रवणम् ॥

उष्ट्रग्रीवस्तुपित्तज ॥

पित्तापिटकया पक्वयोष्ट्रग्रीवाख्यो भगन्दर उच्यते [पित्तजो भगन्दरस्तु उष्ट्रस्य ग्रीवावदुच्छ्रितमुखत्वा दुष्टग्रीवाख्य । ]

बहुपिच्छापरिस्रावी परिस्रावीकफोद्भव ॥

कफपिटकया पक्वया भगन्दरो बहुपिच्छापरिस्रावी नाम्ना परिस्रावी । [कफजो भगन्दर अतल्पपिच्छास्रावयुक्तस्मात परिस्रावी सज्ञ ॥ ]

वातपित्तात्परिक्षेपीपरिक्षिप्यगुदगतिः ।
जायतपरितस्तत्रप्राकार परिखेव च ॥

वातपित्ता भगन्दरोनाम्ना परिक्षेपी । तत्र च गुद परिक्षिप्य मण्डलाकृत्यागतिर्नाडी जायते प्राकारपरिखासदृशा । प्राकारस्यपरित परिखाबहिर्निकटे स्याता । [वातपित्तजो भगन्दर परिक्षेपीसज्ञ. । तत्र परिक्षेपिणिप्राकारस्यपरित परिखेव गुद परिक्षिप्य गुदस्य परितो मण्डलाकृत्या नाडी जायते ॥ ]

ऋजुर्वातकफादृज्व्यागुदोगत्यात्रदीर्यते ॥

वातकफाभ्यां भगन्दर ऋजुर्नाम्ना । तत्र ऋज्व्यागत्या गुद अवदीर्यते । वातकफजो भगन्दरऋज्वाख्य । तत्रेति पूर्वस्मादनुवर्तते । तत्र ऋज्वाख्ये भगन्दरे ऋज्व्या अवक्रयागत्या गुदोवदीर्यते ॥ ]

कफपित्ते तु पूर्वोत्थ दुर्नामाश्रित्य कुप्यत ।
अर्शोमूलेतत शोफ कण्डूदाहादिमान् भवेत् ॥
सशीघ्रपकभिन्नोस्य क्लेदयन् मूलमर्शस ।
स्रवत्यजस्रगतिभिरयमर्शो भगन्दरः ॥

पूर्वोत्थ स्वकारणै प्रथममुत्पन्न दुर्नामार्शं आश्रित्य कफपित्ते द्वे कुप्यत कोप गच्छत । ततो हेतोरर्शोमूले कण्ड्वादिमान् शोफ स्यात्

सशाग्रं पक्षाभिन्नस्यावोमोमूलं क्षरयन् गतिभिर्नाडीभिरजस्रमविच्छेदेनपूर्यं स्रवत्ययनामाशोंभगन्दरः ॥

**सर्वजः शम्बूकावर्तः शम्बूकावर्तसंनिभः ।**
**गतयो दारयन्त्यस्य रुजावेगैर्दारुणैर्गुदम् ॥**

यः सन्निपातजो भगन्दरः स शम्बूकावर्तो नाम शम्बूकावर्तसंनिभः शम्बूकस्यावर्तेन सदृशः शम्बूको नाम शङ्खको मत्स्यविशेषः तस्यावर्तो गेहं भवति । अस्मिन् शम्बूकावर्ताख्ये भगन्दरे गतयो नाड्यः दारुणैः रुग्वेगैः गुदं दारयन्ति ॥

**अस्थिलेशोऽभ्यवहृतो मांसगृध्या यदा गुदम् ।**
**क्षिणोति तिर्यङ्निर्गच्छन्नुन्मार्गं च ततो गतिः ॥**
**स्यात्तदा पूयदीर्णाया मांसकोथेन तत्र च ।**
**जायन्ते क्रिमयस्तस्य खादन्तः परितो गुदम् ।**
**विदारयन्ति नचिरादुन्मार्गी क्षतजश्च सः ॥**

यदा तु मांसगृध्या मांसलोभेनास्थिलेशोऽभ्यवहृतो भक्षितः सन् गुदं क्षिणोति हिनस्ति तिर्यङ्निर्गच्छन्नुन्मार्गं च तत उन्मार्गगतिर्नाडी स्यात् तदा तत्र तस्या नाड्याः पूयेन दीर्णाया मांसकोथेन हेतुना क्रिमयो जायन्ते । परितः समन्तात् गुदं खादन्तस्ते च क्रिमयोऽस्य पुरुषस्य गुदमचिरादेव दारयन्ति । स भगन्दरो नाम्ना उन्मार्गी क्षतजश्च भवति ॥

**तेषु रुग्दाहकण्ड्वादीन् विद्याद्व्रणविभक्तितः ॥**

तेषु च भगन्दरेषु व्रणविभक्तितो व्रणविभक्तिप्रकारेण रुगादीन् विजानीयात् । [रुग्दाहकण्ड्वादीन् रुगादीन् दाहादीन् कण्ड्वादींश्च वाताद्यधिष्ठितदुष्टव्रणोक्तविशेषलिङ्गान् ]

**षट् कृच्छ्रसाधनास्तेषां निचयक्षतजौ त्यजेत् ।**
**प्रवाहिणीं वलीं प्राप्तं सेवनीं वा समाश्रितम् ॥**

षडिति पृथक्संसर्गजाः कृच्छ्रसाधनाः । निचयः सन्निपातः । क्षतमस्थिक्षतम् । सर्वं च भगन्दरं प्रवाहिण्याख्यामन्तर्वलीं प्राप्तं त्यजेत् तथा सेवन्याश्रितं च इत्युक्तं भगन्दराणां हेतुलिङ्गम् । [तेषां भगन्दराणां मध्ये पृथग्दोषसंसर्गजाः शतपोनकोष्ट्रग्रीवपरिस्रावी परिक्षेप्युजर्शोभगन्दराः षट् कृच्छ्रसाध्याः । निचयक्षतजौ शम्बूकावर्तोन्मार्गिणौ त्यजन् चिकित्सेत ॥]

**अथ भगन्दरिणमपक्वपिटकं पाकपरिहारार्थमपतर्पणेन व्रणप्रतिषेधविहितेन शीघ्रमुपाचरेत् ॥**

अथेत्यादिना तेषामेव सामान्यं साधनमुच्यते । भगन्दरिणं पुरुषस्य पिटकावस्थायां पाकरक्षार्थं व्रणप्रतिषेधोक्तेनापतर्पणेन शोधनादिना शीघ्रमुपाचरेत ॥

**पक्वपिटकं पुनः स्निग्धमर्कादिक्वाथशुद्धं स्वभ्यक्तमवगाहस्विन्नं भुक्तवन्तं शयनस्थमर्शसमिव यन्त्रयित्वा पराचीनमर्वाचीनं बहिर्मुखमन्तर्मुखं वा भगन्दरं सम्यगीक्षेत ॥**

पक्वपिटकं तु भगन्दरिणं प्रथममेव स्निग्धं ततोऽर्कादिगणक्वाथेन शुद्धं ततोऽपि स्वभ्यक्तं ततः स्वेदयोग्यावगाहेन स्विन्नं भुक्तवन्तं कृतभोजनं शयनस्थमर्शःकर्मविधानप्रकारेण यन्त्रयित्वा प-

राचीनादिविशेषेण भगन्दरं मन्यमीक्षेत । प राचीनमन्तर्मुखम् । बहिर्मुखं बहिर्द्वारमन्तर्मुखं गुदनाड्यं तर्गतमुखम् ॥

ततोऽन्तर्मुखे यन्त्रं प्रणिधाय मवाहण-प्रविष्टं भगन्दरमभिसमीक्ष्यसम्यगे पित्वा श स्त्रेण पाटयेत् । बहिर्मुखेत्वेषणा प्रणिधाय साशयमुद्धरेच्छस्त्रेणानन्तरं चोऽभयमप्यग्निना क्षारेण चोपक्रमेत उष्ट्रग्रीवं तु क्षारेणैव ॥

तत इति । ततोनन्तरं यदन्तमुखं तद् पवाहणेन यन्त्रच्छिद्रं प्रविष्टमवेक्ष्य सम्यगेषित्वा शस्त्रेण पाटयेत । बहिर्मुखमेषणीं प्रणिधाय नि-ष्कस्य साशयमुद्धरेच्छस्त्रेण । अनन्तरमुभय मन्य तर्मुखं बहिर्मुखमपि । अस्त्रकर्म भवत्त्य मानम् । तस्मिन् कृते अग्निक्षाग्योर्विषयनिय-म । उष्ट्रग्रीवाख्य भगन्दरं तु क्षारेणैव न कश्चिन्मिना ॥

ततो निर्वापणशोधनरोपणैर्यथाकाल साधयेदिति सामान्यो विधि ॥

तत इति क्षारेऽग्नौ वा प्रयुक्त यथाकाल निर्वापणादिभि साधयेत । इति सामान्य भ-गन्दरहितो विधि ॥

अथ शतपानके नाडीरेकान्तरिता पा टयित्वा रोपयेत् । रूढासुचतरााश्चिकित्सेत् । अन्यथा तु विवृत व्रण गुदस्रोतो विदारणा-द्वातविण्मूत्राण्यनुमपन्न्ते । ततश्चोन्मार्गगो वायुराध्मानाटोपपायुशूलादीनुपजनयति। तत्र स्नेहाभ्यक्तगुदस्य स्निग्धान्पिण्डनाडी कुम्भी-स्वेदान् प्रयुञ्जीतावगाहं वा । स्विन्नं च वचा हिंगुकुष्ठव्योषलवणपञ्चकाजमोदान् सर्पिर्युक्त काञ्जिककुलत्थयूषान्यतमेन पाययेत् । व्रण चास्यमधुकतैलेनोष्णेन सिञ्चेत् । गुदं च वातघ्नैलादिभिर्वा तत्र । अनेन विधिना वा त्वादय. स्वमार्गमापनन्ति । तत्कृताश्च विका रा निवर्तन्ते ॥

अथेत्यादिना शतपोनकादीनां विशेषवि धिस्ता सुबोधा । [नाडीमेणमागान । एका न रिता एकैका नाडीमन्तरीकृता. । पाटयित्वा भित्वा रोपयेत । तासु रूढास्विन्ना अपरिष्टा नाडीश्च पश्चाद्वासदृश पाटयित्वा चिकित्सेत । अन्यथा एकादन्यप्रकारेण गुदस्रोतो विदारणा द्वातादीनि विवृत व्रणमनुप्रपद्यन्ते । मधुकेन सिद्ध तैल मधुकतैलम् ॥ ]

एवमेव च परिक्षेपिण्यामपि क्रमात् ग ति नाडीविहितेन क्षारसूत्रेण द्विशस्त्रिशोवाऽव दारयेत् । सकृदेवावदरणादसाध्यतायाप्य ता वा स्यात् ॥

एवमेव चेति शतपोनकवत्त्व नाडीवि हितेनेतिपथ यथायोक्तेन ॥

अर्शो भगन्दरे पूर्वमशामि चिकित्सेत् ततो गत्यनुसारेण भगन्दरम् ॥

अर्शो भगन्दर इत्यादि सुबोधम् । ग त्यनुसारेणेति नाड्यनुसारेण अर्शो नाडीकार्य क्रमेणेत्यर्थ । [तत्रत्यायविहितेन शस्त्रक्षारादन्य तमेनार्शांसिछित्वानन्तरं भगन्दरमपि शतपो नका-दिवच्छित्वा चिकित्सेदित्यर्थ ॥ ]

उन्मार्गिणं तु प्रत्याख्यायोपाचरेत् । अनिस्सृतं च शल्यमाहरेत् । तथा क्रिमिघ्नं क्रममालेपाऽऽपवहारयोः कुर्वीत । वेदनायां तु पूर्वोक्ताः स्वेदाः । उपनाहपाचनं च । सालपत्रप्रदिग्धं वा व्रणं कदलीमृगलोपाकाजिनकौशेयादिभिरुपनाहयेदिति । भवति चात्र ॥

उन्मार्गिणं क्षतजं भगन्दरं तु प्रत्याख्याय यत्नसिद्धतीत्युक्त्वा उपचरेत् । अनिस्सृतं च दृश्यमानं शल्यमाहरेत् । पूर्वोक्ताः शतपोनकोक्ताः स्वेदाः पिण्डनाडयादयः । सालपत्रा स्या । स्वेदविधावुक्ताः पत्रकाद्याः । लोपाकोनाम शरभः । गतानुगतिका ॥

भगन्दरेषु बहुच्छिद्रे छेदानालोच्य योजयेत् ।
गोतीर्थसर्वतोभद्रसार्धलाङ्गललाङ्गलौ ॥

बहुच्छिद्रे सर्वस्मिन् भगन्दरे च गोतीर्थादिभेदेन छेदानालोच्य निरूप्य गोतीर्थादीन् योजयेत् । [बहुच्छिद्रे अनेकसुषिरे सर्वस्मिन् भगन्दरे गोतीर्थादीन् छेदविशेषान् आलोच्य अवलोकनैषणीप्रणयनादिभिर्ज्ञात्वा योग्यं इति यथायोग्यमस्य गोतीर्थाद्यन्यतमं योजयेत् ॥ ]

(गोतीर्थादीनां चतुर्णां क्रमेण लक्षणं दर्शयति ॥ )

पार्श्वागतेन शस्त्रेण छेदो गोतीर्थकोमतः ।
सर्वतः सर्वतोभद्रः पार्श्वच्छेदोऽर्धलाङ्गलः ॥
पार्श्वद्वये लाङ्गलकः

पार्श्वागतेनेत्यादिना गोतीर्थादीनां चतुर्णां क्रमेण लक्षणम् । ... इति शस्त्र स गोतीर्थको नाम छेदः । यत्र तु सर्वदिशमागच्छति शस्त्रं स सर्वतोभद्रः । एकस्य पार्श्वस्य च छेदः सोऽर्धलाङ्गलः । पार्श्वद्वये तु छेदो लाङ्गलको भवति । [पार्श्वागतेन नाडीपार्श्वप्रापितेन शस्त्रेण छेदो गोतीर्थाख्यः । गोतीर्थं नाम गवां जलपानार्थं तत्खुराङ्किता भूमिः तद्वच्छस्त्रनिपातो गोतीर्थ इतीयते कैश्चित् । यत्र शस्त्रं सर्वदिशमागच्छति स सर्वतोभद्राख्यः । एकस्य पार्श्वस्य छेदोऽर्धलाङ्गलाख्यः । पार्श्वद्वये उभयोः पार्श्वयोश्छेदः स लाङ्गलकाख्यः ॥ ]

समस्तान्वाग्निनादहेत् ।
आस्रावमार्गान् निश्शेषं नैव विकुरुते पुनः ॥

भगन्दरे समस्तानास्रावमार्गान् निश्शेषमग्निना दहेत् एवं हि कृते भगन्दरः पुनर्न विकुरुते । [अग्निना अग्निमयया शलाकया समस्तान् सर्वानास्रावमार्गान् निश्शेषान् कृत्वा दहेत् सा कल्पयेनेत्यर्थः । निश्शेषसमस्तशब्दयोरेतत्प्रयत्नेन भगन्दरव्रणसुषिरस्य सूक्ष्मातिसूक्ष्मा मूलावाहश्च सूचितः । एवं कृते सति स भगन्दरः पुनश्च विकुरुते विकारकरणसमर्थो न भवति पुनर्नोत्पन्न इत्यर्थः ॥ ]

यतेत कोष्ठशुद्ध्यै च भिषक् तस्यान्तरान्तरा ॥

तस्य च भगन्दरिणः कोष्ठशुद्ध्यै भिषगन्तरान्तरा यतेत । [वैद्यस्तस्यातुरस्य कोष्ठशुद्ध्यर्थं कोष्ठशुद्धेर्वमनविरेचनाद्युक्तत्वेऽप्यत्र भगन्दरव्रणस्य पक्वाशयनिकटवर्तित्वाद्यथामल विशोधनमिति व्रणप्रतिषेधोक्त्या व्रणस्यविरेकसाध्यत्वाच्च विरेचनमेव गृह्यते । अन्तरान्तरा व्रण-

(कृम्यादिहरा स्यु । कृमि उदरकृमि । क्षत गुद क्षतम् । )

अमृतात्रुटिवेल्लवत्सक
कलिपथ्यामलकानिगुल्गुलु ।
क्रमवृद्धमिदमधुप्लुत
पिटकास्थौल्यभगन्दराञ्जयेत् ॥

अमृतादिक क्रमवृद्ध मधुद्रवमिद पिटका दीन् जये। अमृताया एको भाग । त्रुट्या द्वौ भागौ । वेल्लाना त्रय । वत्सकस्य चत्वार । एव भागवृद्धिर्यावत् गुल्गुलोरष्टाविति क्रमवृद्धार्थ ॥

गुल्गुलुपञ्चपलपलिकाशा
मागधिकात्रिफला च पृथक्स्यात् ।
त्वक्त्रुटिकर्षयुतमधुलीढ
कुष्ठभगन्दरगुल्मगतिघ्नम् ॥

गुल्गुल्वादि सुबोधम । त्वचोर्द्धकर्ष । सूक्ष्मैलाना चार्द्धकर्ष ॥

शृङ्गिवेररजोयुक्त तदेव च सुभावितम् ।
क्वाथेनदशमूलस्य विशेषाद्वातरोगजित् ॥

तदेवानन्तरोक्त गुल्गुलुपञ्चपलादिक शृङ्गिवेरचूर्णेन सयोज्य दशमूलस्य क्वाथेन भावित कुष्ठादीनन्याश्च वातप्रधानान् रोगान् विशेषा ज्जयति । [शृङ्गिवेरस्य रजसा चूर्णेनयुक्तम् । शृङ्गिवेर नागरम् । नि। नागरमूषणमार्य क टुक कटुकायन महीन्द्रक्षम । शुण्ठीकाल विश्व विश्वौषधमौषध महारसन्धम । महौषध महा वीर्य भिहर विश्वभेषजम । तीक्ष्ण कटु च कासघ्न शृङ्गिवेरमिति स्मृतम । इति मञ्जरी । दशमूलक्वाथेन सुभावित पुन पुन पेषणशोष णादिना समारोपित तद्वीर्येण । तत् पूर्वोक्त गुल्गुलुपञ्चपलाख्यचूर्णमेव विशेषाद्वातरोगान् जयति । अत्र विशेषशब्देन शुण्ठीचूर्णा दिसहितस्यापि वातहरत्व सूचितम् । वातप्र धानकुष्ठादिरोगेष्वर्थ ॥ ]

उत्तमारवदिरसारजरज -
शीलयन्नसनवारिभावितम् ।
हन्तितुल्यमहिषाक्षमाक्षिक
कुष्ठमेहपिटकाभगन्दरान् ॥

त्रिफलाखदिरसारयोश्चूर्णमसनक्वाथेन भावयित्वा समेन गुल्गुलुना माक्षिकेण च युक्त शीलयन् कुष्ठादीन् हन्ति । [अत्र महिषाक्षस्यप्रमाणेन तुल्यत्वम् । मधुनस्तुचूर्णपिण्डीभावमात्रयैव तुल्यत्वम । ]

॥ उपसहारमाह ॥

भगन्दरेष्वेषविशेषउक्त
शेषाणितुल्यानिसाधनानि ।
व्रणाधिकारात्परिशीलनाद्य
सम्यग्विदित्वौपयिकानिदद्यात् ॥

एष यावानध्याय उक्त भगन्दरेषु विशेष । शेषाणि व्यञ्जनसाधनानि तु व्यञ्जनानि लिङ्गानि दोषाणा विशेषत साधनानि च व्रणाधिकारात् व्रणप्रतिषेधात् परिशीलनात् कियाभ्यासाच्च सम्यक्सुश्रुतादिप्रकारैर्विदित्वायदौपयिक तद्विदध्यात । [भगन्दरेष्वेष विशेषोपक्रमोभिहित शेषाण्यनुक्तानि व्यञ्जनानि गो

पलिङ्गानि साधनान्युपक्रमविनाशानि तुशब्दो विशेषद्योतक अत्र पिटका भगन्दरभेदेनाऽव स्थाप्रितयदोषोद्रेकप्रणमयादिकमवगम्योपक्रम्य - त्वादुपक्रमस्यदुर्ज्ञेयत्व त्रि- प. । व्रणाधिकारात् व्रणप्रतिषेधात् परिशीलनात् चिरपरिचयात् च- शब्दाद्दृष्टदेशादिसमीक्षणमपि सूचितम् । म त्स्यविदित्वा यथावदवगम्य औपयिक यथाया य विदध्यात कुर्यान्नित्यर्थ ॥ ]

रूढस्या पुनश्चाबाय परिहार्याण्याह ॥

अश्वपृष्ठगमन चलरोध
मत्र्यपैथुनमजीर्णमसात्म्यम् ।
साहसानिविविधानि च रूढे
वत्सर परिहरदधिक वा ।
इत्युत्तरे त्रयस्त्रिशोऽध्याय ॥

रूढेऽपि भगन्दरव्रणे अश्वपृष्ठगमनादिक संवत्सर ततोऽप्यधिक वा परिहरेत् । चलरोध चलाना वेगाना रोधम् । विविधानि साहसा न्यतालौचितान्नलाभ्युत्पतनानीति ॥

इतीन्दुविरचितायामष्टाङ्गसङ्ग्रहव्याख्याया मुत्तरे त्रयस्त्रिशोऽध्याय ॥

# चतुस्त्रिशोऽध्यायः ।

## ग्रन्थ्यादिविज्ञानीयम् ॥

व्रणविचारप्रसङ्गेन ग्रन्थ्यादीना हृत्या दिक प्रदर्शयितुमध्याय आरभ्यते ॥

अथातो ग्रन्थ्यर्बुदश्लीपदापची नाडी विज्ञानीय नामाध्याय व्याख्यास्याम । इति ह स्माहुरात्रेयादयो महर्षयः ॥

कफप्रधाना कुर्वन्ति मेदो मासास्रगामलाः ।
वृत्तोन्नत य श्वयथु सग्रन्थिर्ग्रथनात् स्मृतः ॥

ग्रन्थिरिति किमुच्यत इत्याह कफप्रधा ना इत्यादि । कफप्रधाना मलास्त्रयो दोषा मेद । प्रभृतीन्गत्वा परिवर्तुलमुन्नत च य श्व यथु कुर्वन्ति स श्वयथुर्ग्रथनात्मकत्वात् ग्रन्थिरि ति स्मृत ॥

दोषास्रमासमेदोऽस्थि सिराव्रणभवा नव ।
ते—

त्रिभिर्दोषैरस्रादिभिश्च षड्भिरमी ग्रन्थयो नव भवन्ति ॥

तत्रानिलादायामतोदभेदान्वितोऽसितः ॥
स्थानात्स्थानान्तरगतिरकस्माद्धानिवृद्धि-
[मान् ।
मृदुर्बस्तिरिवानद्धो विभिन्नोऽच्छं स्रवत्यसृक् ॥

स्थितेऽपि मरुत्ग्रन्थौ कफबाधान्ते आया मादिक विभेदे चाऽच्छमसृक् स्रावान्त वातग्रन्थि लिङ्गम् । अकस्मात्कारणाद्धानिमान् वृद्धि मांश्च ॥

पित्तात्सदाह पीताभोऽरक्तो वा पच्यते द्रुतम् ।
भिन्नोऽस्रमुष्ण स्रवति—

सदाहादिभेद उष्णास्रस्रावान्त पित्तग्र- न्थौ । वा शब्द पीतरक्तयोर्विकल्पार्थ ॥

— श्लेष्मणानीरुजोघनः ॥
शीत सवर्ण कण्डूमान् पक्व पूय स्रवेद् घनम् ॥

नीरुजत्वादि घनपूयस्रावान्त कफग्रन्थौ सवर्णो देहसमानवर्ण ।

दोषैर्दुष्टेऽसृजि ग्रन्थिर्भवेन्मूर्च्छत्सु जन्तुषु ।
सिरामांसं च संश्रित्य सस्वापः पित्तलक्षणः ॥

दोषैर्वातादिभिरसृजि रक्ते दुष्टे जन्तुषु प्राणिषु मूर्च्छत्सु वृद्धिमाप्नुवत्सु सिरामांसं च तयोरन्यतरमुभयं वा संश्रित्य स्वापयुक्तो ग्रन्थिर्भवेत् । तस्य पित्तस्येव लक्षणम् । दोषैर्दुष्ट इति विशेषणं रक्तस्य स्वकोपताशङ्कानिरासाय ॥

मांसलैर्दूषितं मांसमाहारैर्ग्रन्थिमावहेत् ।
स्निग्धं महान्तं कठिनं सिरानद्धं कफाकृतिम् ॥

मांसलैराहारैर्मांसं दूषितं स्निग्धत्वादिगुणं कफग्रन्थिलिङ्गं ग्रन्थिमावहेत् । [मांसलैर्मांसवर्धनैराहारैः क्रव्यादमांसादिभिर्मांसगुणोपेतैरन्नैर्दूषितं कृतदूषणं मांसं स्निग्धं स्नेहदिग्धमिव महान्तं पीवरं कठिनं कठिनस्पर्शं सिरानद्धं सिराभिराचितं कफाकृतिं कफग्रन्थिलिङ्गं ग्रन्थिं कुर्यात् । मांसकफयोराधाराधेयत्वेनाक्रान्तसाम्ये सिद्धे पुनरपि तत्साम्यकथनमत्रानुक्तानां नीरुजत्वादीनां ग्रहणार्थम् । उभयत्रोक्तानां निबिडत्वादीनामतिशयग्रहणार्थं च ॥]

प्रवृद्धं मेदुरैर्मेदो नीतं मांसेऽथवा त्वचि ।
वायुना कुरुते ग्रन्थिं भृशं स्निग्धं मृदुं चलम् ॥
श्लेष्मतुल्याकृतिं देहक्षयवृद्धिक्षयोदयम् ।
स विभिन्नो घनं मेदस्ताम्रासितसितं स्रवेत् ॥

मेदुरैराहारविहारैः प्रवृद्धं मेदो वायुना मांसे त्वचि वा नीतं भृशं स्निग्धत्वादिगुणं श्लेष्मग्रन्थितुल्यलिङ्गं ग्रन्थिं कुरुते । पुनः किंभूतं ग्रन्थिमाह । देहक्षयवृद्धिक्षयोदयं यदा देहस्य केनचित् कारणेनापचयो भवति तदा तस्याप्यपचयः यदा तु देहस्य वृद्धिस्तदा तस्याप्युपचयः । स च मेदोग्रन्थिर्विभिन्नः सन् घनत्वादिगुणं मेदः स्रवेत् । [मेदुरैर्मेदोवृद्धिकरैराहारविहारैः प्रवृद्धमतिशयेन वृद्धिं गतं स नरकारकशतया कुपितेन वायुना मांसत्वचोरन्यतरं नीतं सत् भृशमतिशयेन स्निग्धमरूक्षं मृदु मार्दवयुक्तं चलमस्थिरं भृशशब्दश्चलान्ते सम्बध्यते । स चाभिन्नः पश्चाद्भिन्नः घनं निबिडं ताम्रासितसितानामन्यतमवर्णं मेदः स्रवेत् मेदःस्रवेण पूयस्यान्यादृशता सूचितम् । उक्तं च धन्वन्तरिणा । मेदःकृते प्रस्रवति प्रभिन्ने पिण्याकसर्पिःप्रतिमं तु पूयमिति ॥]

अस्थिभङ्गाभिघाताभ्यामुन्नतावनतं तु यत् ।
सोऽस्थिग्रन्थिः—

भङ्गेन वाभिघातेन वा यदस्थ्युन्नतं वावनतं वा सोऽस्थिग्रन्थिर्नाम्ना भवति । [यदस्थि तु भङ्गादभिघाताद्वा हेतोरुन्नतमवनतं वा भवति तुशब्देन भङ्गाभिघाताभ्यां विना सहजयोरप्युन्नतावनतयोरस्थ्नोर्ग्रन्थिरूपत्वं सूचितम् । भङ्गादुन्नतमभिघातादवनतमिति यथाक्रमं वेति केचित् । स एवंविधः सोऽस्थिग्रन्थिर्नाम्ना भवति । अवनतस्यापि ग्रन्थिसंज्ञाकथनादुन्नतावनतयोरस्थ्नो पुनर्ग्रन्थिरूपेण वृद्धिर्भवतीति सूचितम् ।]

—पदातेस्तु सहसाम्भोऽवगाहनात् ।
व्यायामाद्वा प्रतान्तस्य सिराजालं सशोणितम् ॥
वायुः संपीड्य संकोच्य वक्रीकृत्य विशोष्य च ।
निःस्फुरं नीरुजं ग्रन्थिं कुरुते स सिराह्वयः ॥

यस्तु ग्रन्थिर्महान् ग्रन्थितश्च सोऽर्बुदं भवेत् । [अर्बुदाख्यो रोगः तुशब्देन कारणसाम्येऽपि ग्रन्थ्यर्बुदयोरर्बुदस्य दोषाणामसमेदो ग्रन्थितेऽपि रुगादीनामल्पत्वं सूचितम् ॥ ]

तल्लक्षणं च मेदोन्तैः षोढादोषादिभिस्तु तत् ।
प्रायो मेदः कफाढ्यत्वात् स्थिरत्वाच्च न पच्यते॥

तस्यार्बुदस्य लक्षणं ग्रन्थि पठितैर्मेदोन्तैर्दोषादिभिः षोढा । अनेनास्थि सिरा व्रणजानां प्रतिषेधः । एतच्चार्बुदं मेदः कफाढ्यत्वात् स्थिरत्वाच्च हेतोः प्रायो न पच्यते ॥

शोणितार्बुदस्य विशेषलक्षणत्वात्तल्लक्षणमाह ॥

सिरास्थं शोणितं दोषः सङ्कोच्यानुप्रपीड्य च।
पाचयेच्च तदानद्धं सास्रावं मांसपिण्डितम् ॥
मांसांकुरैश्चितं याति वृद्धिं चाशु स्रवेत्ततः ।
अजस्रं दुष्टरुधिरं भूरि तच्छोणितार्बुदम् ॥

सिरास्थमित्यादि । दोषो वातादिः कुपितः सिरास्थं शोणितं सङ्कोच्यानुप्रपीड्य च तच्छोणितं पाचयेत्, तच्चानद्धत्वादियुक्तमाशुवृद्धिं याति । ततो वृद्धं अजस्रमविच्छेदेन भूरिप्रभूतं दुष्टरुधिरं स्रवेत् । एतच्छोणितार्बुदमुच्यते । [ दोषो वातादन्यतमः सिरा स्थितं रक्तं सङ्कोच्यैकत्र पुञ्जीकृत्यानन्तरं प्रपीड्य पीडयित्वा च शब्दः समुच्चये तत्स्वेनाग्निना मांसत्वापादनाय पाचयेच्च आनद्धमन्तः पूरितशोणितत्वादानाहयुक्तं सास्रावमास्रावयुक्तं मांसपिण्डितं मांसपिण्डाकारेण सञ्जातं तच्छोणितार्बुदं मांसाकुरैरङ्कुराकारैर्मांसैर्वृद्धिशीलैरित्यर्थः । चितं व्याप्तमाशु शीघ्रं वृद्धिं याति । ततोऽनन्तरं दुष्टरुधिरं दुष्टरक्तं अजस्रमनवरतं भूरिप्रभूतं स्रवेत् । तच्छोणितार्बुदमसाध्यं भवति ॥ ]

तेष्वसृङ्मांसजे वर्ज्ये चत्वार्यन्यानि साधयेत् ॥

तेषु षट्स्वर्बुदेष्वसृङ्मांसजे द्वे वर्ज्ये । अन्यानि चत्वारि दोषमेदोभवानि साधयेत् । इत्यर्बुदानि ॥

[ अर्बुदलक्षणमुक्त्वानन्तरं कफाधिक्यसाम्याच्छ्लीपदलिङ्गमाह ॥ ]

ग्रन्थितावङ्क्षणोर्वादिमधः कायं कफोल्बणाः ।
दोषमांसास्रगाः पादौ कालेनाश्रित्य कुर्वते ।
शनैः शनैर्घनं शोफं श्लीपदं तं प्रचक्षते ॥

कफोल्बणा दोषा वातादयो वङ्क्षणादिकमधः कायं प्रस्थिता मांसमसृक्चाश्रिता कालेन पादावाश्रित्य शनैः शनैर्घनं शोफं कुर्वते तं नाम्ना श्लीपदं प्रचक्षते । [ दोषा वातान्या कफोल्बणा उद्रिक्तकफाः कफोल्बणत्वं शास्त्रान्तरेऽप्युक्तं । त्रीण्यप्येतानि जानीयाच्छ्लीपदानि कफोच्छ्रयात् । गुरुत्वं च महत्त्वं च यस्मान्नास्ति कफं विना इति । मांसास्रगा मांसं रक्तं च प्राप्ता वङ्क्षणोर्वादीं अत्रादिशब्देन जङ्घागुल्फादिपरिग्रहः अधः कायं कायाधोभागं प्रस्थिताः प्राप्ता इत्यर्थः । प्रस्थिता इत्युक्तत्वाद्दोषाणां कफोल्बणतयोर्ध्वाङ्गादधः कायप्रति पुनः पुनः प्रस्थानस्याऽनिवृत्तिः सूचिता । कालेन कालान्तरेण पादौ प्रपदे आश्रित्य प्राप्य शनैः शनैर्मन्दं मन्दं घनं निबिडं शोफं कुर्वते । तं शोफं श्लीपदमिति वदन्त्याचार्या इति शेषः ॥ ]

मेदस्था इत्यादि । मेद आश्रित्य कण्ठादिषु गाता मला वातादयः सवर्णत्वादिगुणान् वार्ताकैरामलकैश्च सदृशान् अवगाढानन्तर्मूलांश्चिरपाकांश्च बहून् गण्डान् कुर्वते । त इति गण्डाः अन्ये केचिदल्परुजः पच्यन्ते । अन्ये अतिकण्डुराः स्रवन्ति । अन्ये नश्यन्ति अन्ये भवन्ति दीर्घकालानुबन्धिनः । अथ रोगो नाम्ना गण्डमाले अपचीति चोच्यते । इयं च गण्डमाला दूर्वाप्रतानवत् क्वचित् क्षयभाग्भवति क्वचिद्वृद्धिभाक् । ता च मज्जरादिना त्यजेत् । इत्युक्तापची । (मला वातादयो मेदस्था मेदसि स्थिताः कण्ठमन्याक्षकक्षावङ्क्षणगाः कण्ठादिकं प्राप्ताः सवर्णान् कायसमानवर्णान् कठिनान् काठिन्ययुक्तान् स्निग्धान् वार्ताकामलकाकृतीन् वार्ताकामलकप्रमाणान् अवगाढानन्तर्मूलान् चिरपाकान् चिरकालेन पाको येषां तान् चशब्दः समुच्चये बहून् बहुसंख्याकान् गण्डान् पिटकाविशेषान् कुर्वते । ते गण्डाः अन्ये केचित् अल्परुजः ईषद्रुजायुक्ताः पच्यन्ते पाकं यान्ति । कर्मकर्तरिरूपम् । अन्ये पक्का अतिकण्डुरा अत्यर्थं कण्डूयुक्ताः स्रवन्ति पूयमुद्गिरन्ति । अन्ये नश्यन्ति रोहन्ति । अन्ये भवन्त्युत्पद्यन्ते । एवं सति दीर्घकालानुबन्धिनः दीर्घं कालमनुबध्नन्ति न शमं यान्ति । दूर्वावत् क्षयवृद्धियुक्ता दूर्वाप्रतानवदत्यन्ताभावी न भवतीत्यर्थः । इयं गण्डमालेत्युच्यते अपचीति च । अपच्या निर्वचनं च शास्त्रान्तरेष्वधायि । या ग्रन्थिभिस्त्वामलकास्थिमात्रैर्मत्स्याण्डजालप्रतिमैस्तथान्यै । अनन्यवर्णैरुपचीयमानाचयप्रकर्षादपचीं वदन्तीति । मेदः कफाभ्यामेवापची जायत इति धन्वन्तरिः । तामिति उत्तरासन्निवितां तामपचीं त्यजेत् ॥ )

(नाडीव्रणस्य दीर्घकालानुबन्धितया अपचीसाम्यात्तदनन्तरं नाडीव्रणमाह ॥ )

अभेदात्पक्वशोफस्य व्रणे चापथ्यसेविनः ।
अनुप्रविश्य मांसादीन् दूरं पूयोऽभिधावति ॥
गतिः सा दूरगमनान्नाडी नाडीव सस्रुते ।
नाड्येकाऽनृजुरन्येषां सैवानेकगतिर्गतिः ॥

यत्र पक्वशोफो न भिद्यते व्रणे वा अपथ्यसेवा क्रियते तत्र पूयो मांसादीननुप्रविश्य दूरमभिधावति सा गतिरित्युच्यते दूरगमनाद्धेतोः । नाडीत्युच्यते नाडीवत्स्रुतः तत्र या एका अनृजुश्च सा नाडी अन्येषामाचार्याणां मते । सैव नाड्यनेकगतिर्गतिरित्युच्यते पक्वशोफस्य प्राप्तपाकतया भेदस्य शोफस्य भेदादविदारणात् व्रणे व्रणयुक्ते काले इत्यर्थात् गम्यते । अपथ्यसेविनः व्रणविरुद्धाहारविहारादिशीलस्य चशब्दः समुच्चये । पूयः मांसादीन् आदिशब्देन मेदोऽस्थ्यादिपरिग्रहः अनुप्रविश्य विदार्येत्यर्थः दूरं तत्तद्देहदेशप्रमाणावधि अभिधावति शीघ्रं गच्छति । सा पूयदीर्णा नाडी दूरगमनात् दूरगत्या गतिरित्युच्यते । नाडीवत्स्रुते यथा तोयगर्भया नाड्या तोयं स्रवति तथाऽविच्छिन्नधारया पूयं वहन्तीं नाडीति चोच्यते । अत्रैव मतविशेषं दर्शयति । नाड्येति । अन्येषां माचार्याणां मते अनृजु कुटिला एका अद्वितीया गतिर्नाडीत्युच्यते । सा अनृजुरेव गतिरनेकमार्गगा चेत् गतिरितिचोच्यते ॥

एवं नाड्याः स्वरूपमुक्त्वानन्तरं तस्याः संख्याविभागं दर्शयति ।° )

# पञ्चत्रिंशोऽध्यायः ।

## ग्रन्थ्यर्बुदश्लीपदाऽपचीनाळीप्रतिपेधम्॥

उक्तक्रमेणैव ग्रन्थ्यादीना साधनं प्रदर्शयितुमध्याय आरभ्यते ॥

अथातो ग्रन्थ्यादिप्रतिषेध नामाध्याय व्याख्यास्याम इति ह ॥

सर्वेष्ववपूर्व ग्रन्थिषु बृहतीद्वयपिप्पलीचित्रकसाधितेन पुराणसर्पिषा स्निग्ध वामयेत् । विरेचयेच्च । कृतससर्जनस्यचोत्तमाङ्गगतेषु ग्रन्थिषु लाक्षाद्विरजनी बिल्वशुण्ठी पूतीदारुभिः शिरोविरेचयेत् धूमकवलगण्डूषांश्च ससेवेत ॥

सर्वेषु ग्रन्थिषु पूर्व बृहतीद्वयादिसिद्धेन पुराणसर्पिषा स्नेह. । तत्स्निग्धस्य वमन विरेचनञ्च । पश्चात् ससर्जने पेयादिक्रमे कृत ऊर्ध्वाङ्गगतेषु ग्रन्थिषु लाक्षादिभि शिरोविरेचयेत्। धूमादींश्च यथागम सेवेत ॥

अङ्कोलमधुकमातुलुङ्गहिंस्रा पूतीदारु विल्वमूलसरलकुष्ठवचावरणत्वक्कालातिविषा जगन्धाभिर्लेप' । श्यामा सुरदारुसमङ्गाकोशातकी पुनर्नवसर्षपैर्वा ॥

अङ्कोलादिना सामान्यलेप । श्यामादिभिर्वा । अङ्कोल, प्रसिद्धो माळवादिषु वेतसाकारपत्रै रसकण्टक. । हिंस्रा, मासी, काला, नीलिनी ॥

सशोफरुक्स्तम्भे चोपनाहो यवसक्तु मधुककुष्ठशतपुष्पा देवदारुभिर्घृतयुक्तै । गोजाऽविखरोष्ट्राश्वहस्तिमूषिकमांसैर्वा वेशवारीकृतैर्वसा तैलवद्भि ॥

सशोफादिके च ग्रन्थौ यवसक्त्वादिभिर्वा गवादिमांसैर्वा वेशवारीकृतैर्वसा तैलवद्भिरुपनाहो बन्ध ॥

पलाशवृन्ताग्निमन्थत्वक्कल्केन मासपिण्डैर्वा । बहुश स्विन्नमङ्गुष्ठेन वेणुपर्वणा वा शनैश्शनै' पुन पुनार्वमर्दयेत् । यथायथ च शोफवत् क्रिया प्रयुञ्जीत ॥

पलाशवृन्तादिभिर्वा स्विन्ने यथोक्तेन विमर्दन यथायथमिति दोषाद्यनतिक्रमेण इति साधारणम । [अथेत्यादिना वातादिविशेषेणोच्यते ॥]

अथ वातजे ग्रन्थौ दशमूलसिद्ध महास्नेह पिवेत् । अमृतानिम्बबीजभार्ङ्गीस्योनाकबाणतालपत्रीकृष्णगन्धागरुभि' क्षीरपिष्टैस्सुखोष्णैर्लेप । विविधाश्च वातव्याधिविहिता स्नेह स्वेदोपनाहा । तथानुपशमे सिराव्यध ॥

महास्नेह स्नेहचतुष्टय । अमृतादिभि क्षीरपिष्टैस्सुखोष्णैर्लेप । बाणो, नीलसहचर.। तालपत्री, मौसली । कृष्णगन्धा, सौभञ्जनम् । सुबोधम ॥

पक्व तु विदार्यनिरस्त पूयकृत्वार्कादिवर्गाम्भसा प्रक्षाळ्य तिलकल्केन सचितक सैन्धवेना लेपयेत् । तैल च रोपण रास्नासरळोशीरविळङ्गमधुकक्षीरसस्कृत कुर्यात् ॥

पक्वमिति ग्रन्थि रास्नादिभिस्संस्कृत तैल रोपण कुर्यात् ॥

पित्तजे रक्तजे च जलौकसोन्यग्रोधादि प्रदेहपरिषेकयो पद्मकादि॰ पाने च द्राक्षेक्षु रसयुक्ता हरीतकी विरेक । पक्वे पाटिते च पित्तव्रणोक्तो विधि' ॥

पित्तजरक्तजयोस्सुबोधम । उभये भिन्न॰ विपक्वे पित्तव्रणोक्तो विधि ॥

कफजमन्तश्शुद्धस्य भृश स्वेदयित्वम्ला पयन्न काकादनीविकङ्कतकाकनन्दिकारग्वधे गुदमूलमदनफलभार्ङ्गीकरञ्जैर्लेपयेत् । नागर चित्रकलाङ्गलकचव्यपलाशवृन्दाचिलकैर्वा । भ ल्लातकसैन्धवाजगन्धा सर्षपैर्वा ॥

कफजेऽन्तश्शुद्धिवमनविरेचनाभ्याम । स्निग्धापन, विलायन, काकादन्यादिभिर्लेपयेत् । काकादनी, स्थूलकाकादनी । काकनन्दिका, गुञ्जा । [नागरादिभिर्वा लेपयेदितिसम्बन्ध ] पलाशवृन्त, पलाशपत्रम् ॥

एवमप्य पच्यमानममर्मस्थ विदार्यस्थि तरक्तं निश्शेषमग्निना दहेत । सशेषो हि पुनरापूर्यते । ततो निर्वापित क्षारक्षौद्रगु- डोत्तरैरालेपैस्संशुद्ध रोपयेत् ॥

एवमित्यनन्तरोक्तक्रियया पच्यमान म- र्मणोऽन्यत्र स्थित शस्त्रेण विदार्य स्थितरक्त नि श्शेषमग्निना दहेत् । सशेषस्य पुनरापूरणात । निर्वापित, शीतीकृतम् । रोपणैरालेपै क्षाराद्य धिकैस्संशुद्ध रोपयेत ॥

मांसव्रणग्रन्थीश्चैवमेव यापयेत् । मेदो जेऽप्ययमेव विधि' अपि च । मेदोग्रन्थि तिल कल्कदिग्ध द्विगुणपटान्तरित तप्तेन फालेन दर्व्या वा जतु लिप्तया बहुश' प्रमृज्यात् । श स्त्रेण वा विचार्यपूर्वव मेदो दहेत् । सुपक्व वा विपाट्य मूत्रप्रक्षालित क्षौद्रसैन्धवसुवर्चिका काञ्चनक्षीरी हरितालमिश्रै क्षीरवकमनोह्वै स्तिलैरालेपयेत् ॥

एवमेवेत्यनन्तरक्रियया यापयेत् । अपि चेति समुच्चये । सुबोधम् । फालो, लोहदण्ड । जतुलिप्तया दर्व्या तापयेत्यर्थात् । विचार्य शस्त्रेण पाटयित्वेत्यर्थ । क्षीरवक, श्वेतिका ॥

गुञ्जादिकरञ्जतापसवृक्षवशावलेखमू त्रसिद्ध तैलमभ्यङ्ग । सम्यक्शुद्ध चैन रो पयेत् ॥

गुञ्जादिसिद्धतैलमभ्यङ्ग तापसवृक्ष, इ ङ्गुद । वशावलेखो वशातनुवल्क । सम्य क्शुद्धमेन रोपयेत् ॥

सिराग्रन्थौत्वभिनवे तैल साहचरं पि- बेत् उपनाहश्च वातघ्नैर्बस्तिकर्म च कुर्यात् । सिराव्यधश्च ॥

अभिनवे सिराग्रन्थौ साहचर तैल पि बेत । उपनाहादींश्च कुर्यात ।

वातार्बुदमैरण्डप्रियालनालिकेरमज्जोर्वा रुकशेरुबीजोत्कारिकयोपनाहयेत् । आनू पामिषवेसवारैर्वा । नाडीस्वेदश्च कुर्यात् बहु-

शृङ्गावमृङ्गेण रुधिरमवसेचयेत् । वातहर वर्गकाथ पयोम्लसिद्ध त्रिवृत पिबेत् ।

वातार्बुदे एरण्डपत्रादिभिरुपनाह नाडी स्वेदश्च कुर्यात् । अत्र च वातार्बुदे बहुशश्शृङ्गेण रक्तमवसेचयेत । वातहरवर्गादिसिद्ध त्रिवृत स्नेह पिबेत् ॥

पित्तोत्थे मृदून् स्वेदोपनाहान् कायविरेचनश्च प्रयोजयेत् । शाकशाकोदुम्बरिकापत्रघृष्टे च प्रियङ्गुपत्तङ्गसर्जरसार्जुनलोध्रमधुमधुकैर्लेप. । श्यामा गिरिकर्णिकाञ्जनक्षीनकनकद्राक्षा सप्तलान्यतमरससमाधित सर्पि पीत पित्तार्बुदश्लीपदोदरघ्नम् ।

पित्तोत्थे मृदून स्वेदोपनाहान् कायविरेचनश्च शाकादिपत्रघृष्टे प्रियङ्ग्वादिभिर्लेप प्रियङ्ग्वादिभिरसाधित सर्पि पीत पित्तार्बुदा दिघ्नम् ॥

श्लेष्मजेतूर्ध्वमधश्च हृतदोपस्य सृतरक्तस्य च वमनविरेचनद्रव्यै प्रलेप. । काकादनी शुकनासाग्निजिह्वामूलदक्षकपोतगृध्रपुरीप. काशमूलैर्वा पलाशक्षारपिष्टै । पिण्याककुलत्थनिष्पावैर्मांसप्रगाढैर्दधिपिष्टैर्लेपयेत् । लेपास्वादलोभेन च निलीयमाना मक्षिका. । स मुपेक्षेत । तद्विमुक्तै, क्रिमिभिरितरैर्वा भक्ष्यमाणश्च । तत क्रिमिभक्षितावशेषं शाकादिपत्रैर्विलिख्याग्निनाप्रतिसारयेत् । अल्पमूल वाव्रपु ताम्राय सीसपट्टकर्वेष्टितम् । पुन. पुनश्चक्षारान् कालापेक्षया योजयेत् । जात्यास्फोतकरवीरपल्लवांश्च योजन. लकादौ । तैलश्चात्र पाठाविडङ्गभार्ङ्गीलाक्षायासिद्धमभ्यञ्जनम् ॥

श्लेष्मजे ऊर्ध्वमधश्च हृतदोषस्य सृतरक्तस्य वमनविरेचनद्रव्यैर्मदनादिभि प्रलेप का कादन्यादिभिर्वा शेष सुबोधम ॥

मेदोर्बुद स्विन्नभिन्न सुशोधितमेदस्कमुपशान्त रक्तस्राव सञ्स्सीव्येत् । ततो गृहधूमलोध्रमनश्शिला हरिद्रापत्तङ्गचूर्णमेधुमद्भिः प्रतिसारयेत् । करञ्जतैलश्चाभ्यञ्जनार्थे नियुञ्जीत । सर्वार्बुदानि च यदृच्छया पर्यागतानि सुपरिशोधितानि रोपयेत् । अपि च ॥

सशेपदोषाणि तु योर्बुदानि करोति तस्याशु पुनर्भवन्ति तस्मादशेषोद्धरण प्रशस्त क्षारेण शस्त्रेण तथाग्निना वा ॥

श्लीपदे तु वातात्मके स्नेहस्वेदोपनाहात् प्रयुज्यगुल्फस्योपरिष्टाच्चतुरङ्गुले सिरा विध्येत् । एरण्डतैलञ्च गोमूत्रेण मासं पिबेत् जीर्णे नागरकथितेन पयसा पुराणधान्यान्यश्नीयात् त्रिवृतश्च पाययेत् । वस्तिश्च प्रयुञ्जीत एवमप्यशाम्यत्यग्निना दहेत् ।

मेदार्बुदक्रिया च सुबोधा । वातात्मके श्लीपदे स्वेदादीन् प्रयुज्य सिरा विध्येत् । एरण्डतैल त्रिवृत्स्नेहश्च पाययेत् वस्तिश्च कुर्यात् । अनन्तरोक्तेनाशाम्यत्यग्निना दाहः ॥

पैत्तिके मृदुरुपनाहो गुल्फस्याध सिरा... पित्तार्बुदोक्ता. स्नेहविरेका पित्तप्रलेपा' ॥

पैत्तिके उपनाहादिक पित्तप्रलेपान्त०

श्लीपदे त्वङ्गुष्ठ सिरां मुञ्चेत्। स क्षौद्रांश्च कफघ्नान् कषायानभीक्ष्णं पाययेत्। यथाबलं वा हरीतकीं वर्द्धमानाम्॥

श्लेष्मात्मके अङ्गुष्ठे सिराव्यधं कफघ्नान्युक्तानि तेषां कषायान् सक्षौद्रानभीक्ष्णं पाययेत्। पिप्पली वर्द्धमानं रसायने वक्ष्यते॥

आदारीकाकजङ्घा पाराटनी शुकनासापदम्बपुष्पबृहतीद्वयमन्तर्धूमं दग्ध्वा गोमूत्रेण बहुशः परिस्रावयेत् ततस्तत् क्षारोदकं क्षारकल्पेन विपचेत्। दन्त्याद्यम् प्रतीवापं फल्गुशुकाख्या मदनफलरस एषक्षारो मधुराहारेणाभ्यस्तः श्लीपदापचीग्रहणीदोषारोचकान् सर्वविषाणि च नियच्छति॥

आदारीप्रभृतीनामन्तर्धूमदग्धानां क्षारपरिस्रुतं गोमूत्रं सूत्रोक्तक्षारविधानेन विपचेत्। क्षारोदकशान्तेन सामायेत क्षारान्तमुच्यते। आलेपयेन्नागरादिभिः॥

तैलं वा पिबेद्विडङ्गार्कमरिचचित्रकशुण्ठीदेवदारुएलावालुकलवणपञ्चकैःसिद्धम्। आलेपयेच्च नागरामृताविडङ्गस्तुक्भद्रदारुभिर्मूत्रपिष्टैरस्तु भोक्तैश्च भेषजैर्यवाश्च च शीलयेत्॥

विडङ्गादिभिःसिद्धं तैलं वा पिबेत्। रूक्षस्तम्भोक्तैश्च भेषजैर्मूत्रपिष्टैरालेपयेदितिसम्बन्धः। यवान्नञ्चभोजने शीलयेत्। इति श्लीपदम्॥

गण्डमालायां कुम्भनिकुम्भद्रवन्ती जीमूतककोशातकीफलविपक्वं घृतमुभयानुलोमन पिबेत्। शार्ङ्गेष्टामूलं वा तक्रपिष्टम्। वमनार्थं सुरादकेन वा जातीबर्हिष्ठ निर्गुण्डी जीमूतकोन्दुरुकीमूलत्वक्चूर्णम्। सिराश्चास्य विध्येत्॥

गण्डमालायां कुम्भादिविपक्वं घृतमुभयानुलोमकं वमनविरेचनं पिबेत्। शार्ङ्गेष्टामूलं वा तक्रपिष्टं पिबेत्। जात्यादिमूलत्वक्चूर्णं रोगोदकेन वमनार्थं पिबेत्। बर्हिष्ठ, हीबरं, अस्येति गण्डमालावतः।

सर्षपदोषन्तुक्ष्ठिकं नवकं पाययेत्। रसाञ्जनं गोमूत्रतण्डुलोदकान्यतरेण। तदेव चनाययेत्। मधूकसारं वा शिग्रुफलानि वा निम्बकरञ्जकरवीरसिद्धं वा तैलं वैरेचनिकञ्च धूमं पिबेत्॥

शोधनेन सर्वदोषं गण्डमालिनं कुष्ठाद्यं नवकं हरिद्रादिकं पाययेत्। गोमूत्रेण वा तण्डुलोदकेन वा रसाञ्जनं पाययेत्। तदपि गोमूत्रेण तण्डुलोदकेन वा युक्तं रसाञ्जनं नावयेत्। मधूकसाराद्यन्यतमं वा नावयेत्। वैरेचनिकश्च धूमः सुबोधम्।

अपक्वाश्च गण्डान्नाकुलीसैन्धवनागरैर्लेपयेत्। गुञ्जाकरवीरार्कश्यामा सिद्धार्थैरजामूत्रयुक्तैर्दशकृत्वो विपक्वं तैलं लवणपञ्चकपिप्पलीमरिचचूर्णोपेतमभ्यङ्गात्सर्वात्मस्थानपच्यर्बुदनाडीदुष्टव्रणवल्मीकानपोहति॥

अपक्वाश्चेत्यादि सुबोधम्। नाकुली, सर्पसुगन्धा। गुञ्जादिभिर्विपक्वं तैलं तैरेव पुनः पचेत्। एवमेव पुनर्दशवारान् एव पक्वेन लव

णानुपेतेनाभ्यङ्गः सर्वावस्थास्वपच्यादीनपोहति वल्मीकाख्यः, क्षुद्ररोगः ॥

सौवर्चलसैन्धवौद्भिददन्तीभल्लातकचित्रककल्केन सिद्धं तैलमभ्यङ्गोऽपच्याम् । तण्डुलीयकक्षाररसेन वा सनिर्गुण्डीरसं वा तैलं साधितमभ्यङ्गपाननावनैर्गण्डमाला नाडीव्रणकुष्ठानिलार्तिहरम् ॥

सौवर्चलादिसिद्धं तैलमपच्यामभ्यङ्गः । तण्डुलीयकनिर्गुण्डीस्वरसाभ्यां प्रत्येकं तैलं साधितमभ्यङ्गादिभिर्गण्डमालादिहरम् ॥

काकादनी नठिकाग्निजिद्वा वन्ध्या कर्कोटकी विशाला पाठा तुण्डकी जीमूतको धातकीबीजैरर्धपलांशैर्विपक्वपयुक्तैर्निर्गुण्डी स्वरसोपेतं करञ्जतैलमस्य विपचेत्तत्पूर्ववदेवप्रयुक्तं परमपचीघ्नम् ॥

काकादन्यादिभिः पलाशिकैर्विपक्वपेणयुक्तैर्निर्गुण्डी स्वरससमतैलमथ विपचेत् तत्पूर्ववदभ्यङ्गादि प्रयुक्तं परमातिशयेनापचीघ्नम् । वन्ध्या, कर्कोटकी निष्फला, वनजा कारवल्ली ॥

अमर्मजांश्च गण्डानपक्वानेवोद्धृत्याग्निना क्षारेण वा प्रसाधयेत् । सर्षपदशादनी क्वाथैर्व्रणक्षालनम् । तिलकुन्तलक्षारपिष्टास्तिलकल्कः सुखोष्णो लेपः । काककुलालसगोधाहिनिर्मोककर्माणामन्यतमस्यान्तर्धूमदग्धस्य मर्षीगुदतैलप्लुताभ्यङ्गः । मांसीसर्जरसकार्पासीफलानामन्यतमैस्तन्यपिष्टैस्तैलं विपक्वमभ्यङ्गो व्रणकाठिन्यघ्नः सर्पाजगरवसे तैलं च सममयमेतदपचीघ्नम् । श्लीपदोक्तानि लानि प्रयोजयेत् ॥

तत्र च मर्मजान् गण्डान् मर्मभ्योऽन्यत्र जातानुद्धृत्याग्निक्षारान्यतरेण साधयेत् । प्रक्षालनलेपौ सुबोधौ । काकादीनामन्यतमस्यान्तर्धूमदग्धस्य मषी इङ्गुदतैलाप्लुताभ्यङ्गः । मांस्यादिभिस्तैलं सुबोधम् । सर्पवसाऽजगरवसा तैलं चेत्येतत् त्रयमभ्यङ्गेनाऽपचीघ्नम् । सुबोधम् ॥

एवमनुपशमे वामपार्श्वजाया दक्षिणजङ्घा पृष्ठप यादिन्द्रवस्तेरधः ऊर्ध्वं वा शस्त्रेणाभिमानं व्रणं कृत्वा मत्स्याण्डजालाभं मेदोऽपनीयाऽग्निना दहेत् । अनेनेतरपार्श्वजा व्याख्याता । एवमुभयपार्श्वजायामुभयतः । यवमुद्गप्रायं च गण्डमालासु भोजनम् ॥

एवमित्यनन्तरोक्तप्रकारेण गण्डमालाया अनुपशमे वामपार्श्वजायां सत्यां दक्षिणजङ्घाया, यत् पृष्ठप्रभागः तस्य मध्ये वक्ष्याख्यस्य जङ्घामध्यभवमर्मण ऊर्ध्वं वाऽधो वाऽभिमानं व्रणं कृत्वा ततो मत्स्याण्डजालनिभमेदोऽपनीय शस्त्रेणाग्निना दहेत् । अनेन वामपार्श्वजापचीव्याख्यानेनेतरपार्श्वजा दक्षिणपार्श्वजाऽपची व्याख्याता । तेनैतदुक्तं भवति । दक्षिणपार्श्वजायां सत्यां वामजङ्घायां दक्षिणप्रकारेण कर्म कार्यमिति । उभयपार्श्वजायां गण्डमालायां दक्षिणपार्श्वमाश्रितायां वामपार्श्वजङ्घायामपि वामपार्श्वमाश्रितायां दक्षिणपार्श्वजङ्घायामपि । यवमुद्गप्रायं यवमुद्गभूयिष्ठ इत्यर्थः ॥

नाडीमनिलजां सुपनाह्य पूयगतिम-
स्यां निःशेषमेषिण्याऽवदारयेच्छस्त्रेण । ततस्ति

विभीतकत्वास्थिवटप्रवाळ
हरेणुकाशाल्मलिबीजयुक्ता ।
वराहविष्ठा च मषीसुदग्धा
तैलप्लुता सर्वगतीर्निहन्ति ॥

विभीतकादिमष्यास्तैलप्लुतायास्सर्वगति प्रयोगः ॥

धत्तूरकमदनकोद्रवजश्चबीज
कोशातकीशुकनसामृगभोजनी च ।
अङ्कोलजश्चकुसुम परिकल्प्य चूर्ण
लाक्षोदकापहृतदोषगतौ प्रयोज्यम् ॥

मिश्रित तेन तैलश्च परम गतिरोपणम् ।
सौवहेषु च कन्देषु कृत वज्राहयेषु च ॥

भल्लातकार्कमरिचैर्लवणोत्तमेन
सिद्ध विलङ्गरजनीद्वयचित्रकैश्च ।
तैल स्मार्कवरसैर्विनिहन्ति कृच्छ्रा
नाडीं कफानिलकृतामपचीव्रणाश्च ॥

॥ इति पञ्चत्रिंशोऽध्याय ॥

*शुकाद्रादिक चूर्ण परिकल्प्य मदनकोद्रवौ* शालिविशेषौ मृगभोजिनी मृगादिनी, तेन च धत्तूरादिचूर्णेन युक्त तैल परम गति रोपणम् । भल्लातकादिभिस्सभृङ्गरसैस्सिद्ध तैल सुकृच्छ्रामपि नाड्यादीन् विनिहन्ति ॥

इतीन्दुविरचितया अष्टाङ्गसग्रहव्याख्याया-
॥ मुत्तरे पञ्चत्रिं... ॥

# षट्त्रिंशोऽध्यायः ।

## क्षुद्ररोगविज्ञानीय र् ॥

शस्त्रकर्माहरोगप्रसङ्गेन क्षुद्ररोगाणा हेत्वादिक प्रदर्शयितुमध्याय आरभ्यते ॥

अथातः क्षुद्ररोगविज्ञानीयनामाध्याय व्याख्यास्याम । इति ह ॥

क्षुद्रारोगा क्षुद्ररोग । [क्षुद्रशब्द स्वल्पाधमक्रूरपर्यायवाची । क्षुद्र' स्वल्पेधमे क्रूर इति वैजयन्ती । उक्त धर्मयुक्ता रोगा क्षुद्ररोगा' उक्त च । मन्दवेगा महावेगा व्याधयोल्परुजोऽरुज । येमहान्तोल्पकाश्चैव क्षुद्ररोगास्तु ते स्मृता इति । अत्राऽपि स्वल्पामशव्यङ्गतिलकालकादय । अधमाकक्षगुदशर्करार्बुद कुनखादय । क्रूरा मसूरिकाविस्फोटाग्नि रोहिण्यादय । क्रौर्ये क्षुद्रशब्दप्रयोग पुराणादिष्वपि दृश्यते । अपि क्षुद्रमृगा यत्र शान्ताश्चेरु स मामृगैरिति । आयुर्वेदस्य तस्मादप्रादुरङ्गानि सद्विद । *सर्वेभ्य प्रत्यङ्गेभ्य क्षुद्ररोगा* समुच्छ्रिता इति श्रेष्ठत्वेपि ॥ ]

[क्षुद्ररोगाणामनेकविधत्वेन सामान्यलक्षणाभावात् प्रत्येक व्याधिगौरवानुरूपेण हेत्वादिक प्रदर्शयिष्यति ॥ ]

स्निग्धा सवर्णा ग्रथिता नीरुजा मुद्गसन्निभाः ।
पिटकाः कफवाताभ्या बालानामजगल्लिका ॥

ते ते पिटका पनसकण्टकसञ्ज्ञा ज्ञेया मुनिभिरिति शेष य एवंविधः स पनसकण्टाख्य क्षुद्ररोग ॥ ]

पित्तेनपिटकावृत्ता पक्वोदुम्बरसन्निभा ।
महादाहज्वरकरी विवृता विवृतानना ॥

पित्तेन हेतुना विवृतमुखी वृत्तत्वादिगुणा पिटका भवति सा नाम्ना विवृता । [पित्तेन हेतुना वृत्ता वर्तुळा पक्वोदुम्बरसन्निभा पक्वेनोदुम्बरफलेनसदृशी महादाहज्वरकरी महान्तमविदुसह दाह सर्वाङ्गीण तीव्रसन्ताप तथाविध ज्वर च करोतीति महादाहज्वरकरी विवृतानना असंवृतमुखी अनेनारम्भसमय एव पाकपूयस्रवणादिक चोच्यते । या एव विधा सा पिटका विवृताख्य क्षुद्ररोग ॥ ]

गात्रेष्वन्तश्चवक्त्रस्य दाहज्वररुजान्विता॰ ।
मसूरमात्रास्तद्वर्णास्तत्सञ्ज्ञाः पिटका घनाः ॥

गात्रेषु बहिरन्तर्मुख च या प्रकरणात् पित्तेन पिटका मसूरप्रमाणा तद्वर्णा इति मसूरवर्णा लोहिता घनाश्च भवन्ति तास्तत्सञ्ज्ञाः नाम्ना मसूरिकाः । [गात्रेषु पादपाण्याद्यवयवेषु अनेन पादतळ मस्तक च गृह्यते । वक्त्रस्यान्तरन्तर्मुख इत्यर्थ॰ । चशब्दान्नेत्रश्रोत्राद्यन्यस्रोतांसि च गृह्यन्ते । दाहज्वरान्वित । दाहज्वररुजान्विता दाहेन ज्वरेण रुजया चान्वितायुक्ता दाह सर्वाङ्गीणसन्तापः । अथवा दाहज्वरो दाहादिज्वरः मसूरमात्रा मसूरप्रमाणाः तद्वर्णा मसूरतुल्यवर्णाः लोहिता इत्यर्थ॰ । घना निरन्तरप्रसृता पिटकास्तत्सञ्ज्ञा मसूरिकाख्या । मसूरिकाया रक्तपित्तजत्वमाहभोज । उक्त च । पित्त शोणितसंसृष्ट त्वचं दूषयते यदा । करोति पिटका घोरा सर्वगात्रेषु देहिनाम् । तिलसर्षपमाषाणा निष्पावाना तथैव च । तुल्यप्रमाणसंस्थाना ज्वरदाहसमन्विताम् । विद्यान्मसूरिकामेता पिटका रक्तपित्तजामिति । करभस्तु नामानुगतरूपभेदेनास्या अष्टविधत्वमाह । उक्त च । मसूरिका सर्षपिका अजकाको द्रवस्तथा । कगुर्विस्फोटकोऽपाकी विसर्पीचाष्टमी स्मृता । सोषकण्डूज्वरा ताम्रा सुभामामाहुर्मसूरिकाम् । सर्षपाकृतितद्वर्णा दाहपाकरुजावतीम् । रक्ताभमूला दुस्साधा पित्तात् सर्षपिका जगुः । कलायसदृशा गाढा श्यावा पर्वास्थ शोफिनीम् । व्राहुल्लेखव्रणामूचु रजका श्लेष्मपित्तजाम् । कोद्रव कोद्रवाकार रक्तपित्तसमुद्भवम् । कङ्गोस्तण्डुलसङ्काशैर्निरन्तरविसर्पिभि । स्फोटै श्लेष्मसमुद्भूतैरापूर्ण कगुरिष्यते । अग्निदग्धैरिव स्फोटैराकीर्णः कफरक्तज । निर्विपाको विसर्पस्तु विस्फोटक इति स्मृत । अपाक विरळ शुष्क जायते मृत्युसन्निभम् । विसर्पवत्सर्पतिसर्वगात्रे शोफान्विता च ज्वरदाहयुक्ता । विसर्पिणी कायसमानवर्णो कालोपकल्पा कफरक्तजातु । विदाहकम्पातिरुजातिसारैस्तृष्णार्तिहिक्कारुचिकाममोहै युक्तानि हन्त्याशु मसूरिकान्तर्मुखा च वाद्यो किणसन्निभा च । ज्वरास्यशोपाङ्गविमर्दकास सन्धिश्लथत्वारुचिरोमहर्षा । शिरोर्तिनेत्रामय पीनसाश्च मसूरिकाणा प्रभवन्तिपार्श्वे । त्वगक्षिरोगापस्मार राजयक्ष्ममसूरिका । दर्शनात् स्पर्शनात् दानात् सङ्क्रामन्ति नरान्नरम् ।

के पाढ़े देहे सरुजत्वादिगुणाया पिटकास्ता-नाम्ना राजिकाह्वया राजिकासञ्ज्ञा । राजिका र क्तसर्षपास्ताभिस्तुल्य वर्णादियासां पिटकानां वास्तथोक्ता । [ मेद स्वेदविध्युक्ततापोपना द्यादिजनित । सत्यानेनैव प्रमाणसिद्धे पुनर पि प्रमाणकथन प्रमागाधिक्ये एतत् भ्रान्तिनि रासार्थम् । अनुक्त कारणत्वादत्राप्यानिलपित्त-ज्वरमूह्यम् ।]

दोषैः पित्तोल्बणैर्मन्दैर्विसर्पति विसर्पवत् ।
शोफो पाकस्तनुस्ताम्रो ज्वरकृज्जालगर्दभ ॥

पित्तोल्बणैस्त्रिभिर्दोषैर्मन्दैश्चिरकारिभि क्र-मेण विसर्पवत्तनुत्वादिगुण पाकरहितश्च य शो-फो विसर्पति व्याप्नोति स नाम्ना जालगर्दभ ।

मलै पित्तोल्बणैः स्फोटा ज्वरिणो मांसदारणा
कक्ष्याभागेषु जायन्ते येऽग्न्याभाः साग्निरोहिणी ।
पञ्चाहात् सप्तरात्राद्वा पक्षाद्वा हन्ति जीवितम् ।

पित्तोल्बणैस्त्रिभिर्दोषैर्ये ज्वरादियुता मा सदारणाः स्फोटा वर्णदाहव्याप्त्यादिकेनाग्निसदृ-शा. कक्ष्यासन्नेषु प्रदेशेषु जायन्ते साग्निरोहि-णीत्युच्यते । सा चाग्निरोहिणी दोषकोपवशात् पञ्चाहेन सप्तरात्रेण पक्षेण वा जीवित हन्ति । [ पित्तोल्बणैरुद्रिक्तपित्तैर्मलैर्वातादिभि ज्वरिण स ज्वरस्य पुरुषस्य । ज्वरिण इति स्फोटवि-शेषण वा आमरणान्त ज्वरकारिण इत्यर्थ । कक्ष्या भागेषु अत्र भागशब्दस्य बहुवचनोक्त्या न केवल कक्ष्यैव तत्समीपवर्तिनोऽन्येपि प्रदेशा गृह्यन्ते । इक्त च सौश्रुते । स्फोटा कक्षास-

पार्श्वेषु जायन्ते मांसदारणा । अन्तर्दाहज्वरा-कारा दीप्तपावकसन्निभा । सप्ताहाद्वाद्दशाहाद्वा पक्षाद्वाघ्नन्तिमानवम् । तामग्निरोहिणीं विद्यात्सा ध्या सन्निपातत इति । मांसदारिणः मांसदरण शीला । अनेनैषामन्तर्मूलत्व ध्वन्यते । अग्न्या-भा वर्णोष्ण्यादिभिरग्निसदृशा । य एवंविधा विस्फोटा जायन्ते सा नाम्ना अग्निरोहिणीति प्रसिद्धा । सा पञ्चाहात् पञ्चदिवसात् पूर्व मिति शेष । सप्तरात्रात् सप्तदिवसात् पक्षात् पञ्चदशदिवसाद्वा जीवित नाशयति । असा-ध्यप्रकरणात् पञ्चाहदे परमिति वा । सन्नि-पात जाया अप्यस्या असाध्यमर्यादायाश्चै वि ध्यकथनमेकैकदोषोद्रेकात् । तत्राशुकारिण पित्तस्योद्रेककथनात् पित्तवातकफजास्थितिक्र मोपि बोद्धव्य ॥]

त्रिलिङ्गा पिटका वृत्ताजत्रूर्ध्वमिरिगल्लिका ।

जत्रुण ऊर्ध्व त्रिलिङ्गात्रिदोषलक्षणा वृ त्ता या पिटका सा इरिगल्लिरित्युच्यते । [अ-स्या अपि सन्निपातजत्वाद्गुरुगज्वरादिसहितत्व द्योत्यते । उक्त च धन्वन्तरिणा । पिटकामु-त्तमाङ्गस्था वृत्तामुग्ररुजाज्वराम् । सर्वात्मिका सर्वलिङ्गा जानीयादिरिगल्लिकामिति ॥ ]

विदारीकन्दकठिनाविदारीकक्षवङ्क्षणे ।

कक्षे वङ्क्षणेवा या विदारीकन्दवत् क-ठिना पिटका सा विदारी नाम्ना । [अत्रापि त्रिलिङ्गत्वमूह्यम । उक्त च धन्वन्तरिणा । विदारीकन्दवद्वृत्ता कक्षवङ्क्षणसन्धिषु । वि-

दारिका सा विज्ञेया सरुजा सर्वलक्षणा इति ॥]

मेदोनिलकफैर्ग्रन्थिः स्नायुमांससिराश्रयैः ।
भिन्नोवसाज्यमध्वाभ स्रवेत्तत्रोद्धणोनिलः ॥
मांस विशोष्यग्रथितां शर्करामुपपादयेत् ।
दुर्गन्धिरुधिर क्लिन्न नानावर्णं ततोमला ॥
तास्त्रावयन्ति निचिता विद्यात्तच्छर्करार्बुदम् ।

स्नाय्वाद्याश्रयैर्मेद प्रभृतिभि प्रथम ग्रन्थिर्भवति । तत स एव स्वय भिन्नो वसादिसदृश स्रवेत् । तत्र स्रावयुक्ते प्र धावनिलो वायुरुद्धण प्राप्तबलो मांस विशोष्य ग्रथिता कठिना शर्करामुपपादयेत् । ततोनन्तर मला वातादयो निचिता वृद्धा, सन्त ता शर्करा दुर्गन्धत्वादियुक्तं रुधिर स्रावयन्ति तस्य रोगस्य शर्करार्बुदमिति सज्ञा । [स्नायुमांससिराश्रयै स्नायुर्मांस सिराश्च आश्रयो येषा तै मेदोनिलकफै कृतो यो ग्रन्थि स स्वय भिन्न वसाज्यमध्वाभ वसाघृतमधुनिभ यत् किञ्चित् स्रवेत् । तत्र तस्मिन् काले अनिल उद्धण आस्रावात्स्यावकाशतया वृद्धिगत मांस विशोष्यशोषयित्वा ग्रथिता ग्रथनात् काठिन्ययुक्ता शर्करा शर्करा तुल्यत्वाच्छर्करा (शर्करावत्त कल्ल ।) उपपादयेत् परिणामयेत ततोनन्तर मलावातादयो (निचितामिति पाठ ।) निचिता वृद्धा ता शर्करा दुर्गन्धि दुर्गन्धयुक्त क्लिन्न क्लेदयुक्त नानावर्णं सान्निपातजत्वात् सङ्कीर्णवर्णं रुधिर रक्त स्रावयन्ति शर्करात सिरामुखेन स्रावय तीत्यर्थं । उक्त च । दुर्गन्ध क्लिन्नमत्यर्थं नानावर्णं तत सिरा स्रवन्ति सहसा रक्तं विद्यात्तच्छर्करार्बुदमिति । यदेवविध तच्छर्करार्बुद विद्यात ॥]

पाणिपादतलेसन्धौ जत्रूर्ध्वेवोपचीयते ।
वल्मीकवच्छनैर्ग्रन्थि स्तद्वद्बह्वणुभिर्मुखै ॥
रुग्दाहकण्डूक्लेदाढ्यैर्वल्मीकोसौसमस्तजः ।

पाणिपादतलादिके ग्रन्थिरुपचय प्राप्नोति । तद्वदिति शर्करार्बुदमभ्युक्त हेतुना । वल्मीकवत पिपीलिकास्थाणुवत्क्रमवृध्या च बहुभिरणुभिश्च रुग्दाहाद्याढ्यैर्मुखैरुपलक्षित । अमौरोगो नाम्ना वल्मीक । अस्य पूर्वस्माद्विशेष समस्तजत्व सन्निपातजत्वम । [पाणितले पादतले सन्धौ कक्षादिके जत्रूर्ध्वं जत्रोरुपरिभागे वा वल्मीकवत् वल्मीकसदृश ग्रन्थिर्ग्रथितशोफ तद्वद्वल्मीकवत बह्वणुभि बहुभिरसख्यैरणुभि सूक्ष्मै रुग्दाहकण्डूक्लेदाढ्यै रुगादिपरिपूर्णैर्मुखै पूयोद्गमनद्वारै शनैर्मन्द मन्द उपचीयते उपचय प्राप्नोति उपचयोवृद्धिः समस्तज सन्निपातज असौवल्मीक वल्मीकाख्य क्षुद्ररोग ॥]

शर्करोन्मथिते पादेक्षते वा कण्टकादिभि ।
ग्रन्थिकी लवदुत्सन्नो जायते कदर तु तत् ॥

शर्करया शिला खण्डिकया पाद उन्मथिते अथवा कण्टकादिभि क्षते कीलवत् सोत्सेधो ग्रन्थिर्जायते तत्तुकदर नाम्ना भवति । [शर्कराभिरुन्मथिते कृतोन्मथने निरन्तरनिचितशर्करा प्रदेशाटनादित्यर्थ । कण्टकादिभि, आदिशब्देन निशितामग्राकशकलादिपरिग्रह ।

ग्रते प्रणिते वा शब्द उन्मथनक्षतयोर्विकल्पार्थः । पादे पादतले कीलवत् उत्सन्न उन्नत ग्रन्थिर्जायते । कीलसाम्येन निखातकीलवद् व्यतवेदनाकरत्व च द्योत्यते तत् तुर्विशेषेकदर कदराख्य क्षुद्ररोग ॥ ]

वेगसन्धारणाद्वायुरपानोपानसंश्रयम् ।
अणूकरोति बाह्यान्तर्मार्गमस्य तत शकृत् ॥
कृच्छ्रान्निर्गच्छति व्याधिरय रुद्धगुदोमत ।

अपानाख्यो वायुर्वेगरोधाद्धेतोरपानसश्रय गुदसश्रय मार्ग बाह्यान्तरणूकरोति सङ्कोचयति । तत अणूकरणाद्धेतोरस्य पुस श कृत् पुरीष कृच्छ्रान्निर्गच्छति । अय व्याधि नाम्ना रुद्धगुदोमत आचार्याणाम् । [वेगसन्धारणात् अधो वातपुरीषादिवेगधारणात् कुपित अपानोवायुर्गुदाश्रयः अस्य गुदस्य बाह्यान्तर्मार्गी वलीत्रितयमित्यर्थ । अपानसश्रय. इति च पाठ ॥ ]

कुर्यात् पित्तानिल पाक नखमासे सरुग्ज्वरम् ।
चिप्पमक्षतरोग च विद्यादुपनख चतम् ॥

पित्तानिल कर्तृ नखमासे सरुग्ज्वर पाक कुर्यात् । तस्य रोगस्य चिप्पमित्यक्षतरोगमित्युपनखमिति च नामत्रयम् । [ पित्त चानिल श्च पित्तानिल अत्र सर्वोपि द्वन्द्व समाहारार्थे एकवत् स्यादिति द्वन्द्वस्यैकवत् भाव स नपु सकमिति नपुसकत्व च । नखमासे नखसम्बन्धिन्यन्तर्बहिर्मासे सरुग्ज्वर रुग्ज्वरोपेत पाक कुर्यात् । त रोग चिप्पाख्यमक्षतरोगाख्यमुपनखाख्य च विद्यात् जानीयात् ॥ ]

कृष्णोभिघाताद्रूक्षश्च खरश्चकुनखोनखः ।

अभिघाताद्धेतोर्य कृष्णो रूक्ष खरश्च नखो भवति सरोगो नाम्ना कुनखो भवति । [ स्खलनशिलादार्वादिपतनजनितादभिघाताद्धेतोः ॥ ]

दुष्टकर्दमसस्पर्शात् कण्डूक्लेदान्विताऽन्तरा.
अगुल्योऽलसमित्याहुः

दुष्टकर्दमस्य सस्पर्शात् कण्ड्वादियुता अगुल्य अलसमित्याहु । [ दुष्टकर्दमसस्पर्शात् कुम्भादिदूषित मलनय स्पर्शशीलनात् अत्र कफपित्तकारणत्व शास्त्रान्तरादवगन्तव्यम् । उक्त च । दुष्टकर्दमसस्पर्शात् पादागुल्यन्तरे व्रणम् । कण्डूरा क्लेदकोथाढ्य स पित्त कुरुते कफ इति ॥ ]

तिलाभास्तिलकालकान् ।
कृष्णानवेदना स्त्वक्स्थान् मशास्तानेव चो-
न्नतान् ।
मशान्पस्तु ग्रततरान् च र्मकीलान् सितासितान्
तथाविधो जतुमणि सहजो लोहितस्तुस ।

कृष्णादिगुणान् त्वकस्थान् तिलाभान् तिलकालकानाहु । [तिलाभान् तिलप्रमाणान् । उक्त च शास्त्रान्तरे । कृष्णास्तिलप्रमाणाये नीरुजा पिटका समा । वातपित्तप्रकोपेन तान् विद्यात्तिलकालकानिति । ] उन्नतास्तानेवमशानाहु । [ उन्नतान् किञ्चिदुत्सन्नान् तास्तिलकालकान् एव शब्देनाकृतिमात्रस्य विशेष इति द्योत्यते । उक्त च । अवेदन स्थिर चैवयस्तु

गात्रे प्रजायते । माष्वत्कृष्णमुत्सन्न तद्भावान्मशमादिशेदिति ।] तेभ्योऽप्युन्नततरान् सितासितान् चर्मकीलानाहु । [सितासितान् काश्चित् सितान् काश्चिदसितान् । अर्शो निदानोक्तचर्मकीलात्तु सितासितत्व विशेष ।] तथाविध सहजो लोहितश्चय स नाम्ना जतुमणि । [तथाविध चर्मकीलतुल्य । सहजो लोहित इति च पाठ. । सजतुमणिरत्युर्विशेषे । सहज देहेन सहजातश्चेल्लोहितो रक्तवण ॥]

कृष्ण सित वा सहज मण्डल लाञ्छन समम्।

शरीरे यत्कृष्ण वा सित वा सहज सम मण्डल तल्लाञ्छनमित्युच्यते । [सहजात सहजम् । सम निम्नोन्नतत्वरहितम् ।]

शोकक्रोधादिकुपिताद्वातपित्तान्मुखे तनु ।
श्याममण्डल व्यङ्ग वक्त्रादन्यत्र नीलिका ॥

शोकादिकुपिताद्वातपित्तात्तनुत्वादिगुण यन्मुखे मण्डल तन्नाम्ना व्यङ्गम । तदेव वक्त्रादन्यत्र देशे स्थित नीलिकेतिनामलभते । सा च स्वरूपा विनिपात रोगान्तरम् । [न्यङ्गनीलिकयो सत्ता भेदस्य स्थानमात्रजनितत्वाद्वक्ष्यमाण षट्त्रिंशत्सख्यायामेकत्वेनैव सख्यान कार्यम् । न पृथक्त्वेन ॥]

परुष परुषस्पर्श व्यङ्ग श्याव च मारुतात् ।
पित्ताताम्रान्तमानील श्वेतान्त कण्डुमत्कफात् ।
रक्ताद्रक्तान्तमाताम्र सोष चिमिचिमायते ॥

तद्व्यङ्ग मारुतात् परुषादिरूपम् ताम्रपर्यन्तमानील च पित्तात् । श्वेतपर्यन्त कण्डुमत् कफात् । रक्तपर्यन्तादिरूप रक्ताद्व्यङ्ग भवति । सह ऊष्मणा स्वेदारतिमता प्रादेशिकेन दाहेन वर्तत इति सोषम् । [पित्तानिलजे व्यङ्गे कफरक्तयोरुद्रेककथनमयुक्तमिति चेन्न भ्रम । आश्रयिभावनतोपि ह्याश्रयदोषाश्रयाद्रुधिरम् । व्यङ्गे निलपित्तकृतेष्वाश्याधिक्येन दर्शये द्रूपम्। इत्यादि वचनात्तदपि युक्तमेव ॥]

वायुनो दीरित श्लेष्मात्वच प्राप्य विशुष्यति ।
ततस्त्वग्जायते पाण्डु क्रमेण च विचेतना ।
अल्पकण्डूरविक्लेदा सा प्रसुप्ति प्रसुप्तित ।

वायुना उदीरित स्थानात् क्षिप्त श्लेष्मात्वच प्राप्य वायुनैव शुष्यति । ततस्त्वक् पाण्डुत्वादिगुणा जायते सम्पद्यते । सा प्रसुप्तित अचैतन्याद्धेतो प्रसुप्तिरित्युच्यते । [स तत्तस्माद्धेतो. त्वक्पाण्डु पाण्डरवर्णा क्रमेण विचेतना च भवति । यदायदापवनोदीरितेन त्वग्गतेन शुष्केण श्लेष्मणात्वक्पूर्यते तदातदा निरवकाशतया तत्र रक्तादिवहनाभावाच्चेतना हानि स्यादिति क्रमार्थ । त्वचश्चेतना स्पर्शविज्ञान तेन हीनाविचेतना ॥]

असम्यग्वमनोदीर्णे पित्तश्लेष्मान्न निग्रहे ।
मण्डलान्यति कण्डूनि रागवन्ति बहूनि च ॥
उत्कोठ सोनुबन्धस्तु कोठ इत्यभिधीयते ।

असम्यग्वमनेनोदीर्णयो पित्तश्लेष्मणो रक्तस्य च निग्रहेण वेगधारणेन देहेऽति कण्डुत्वादियुक्तानि मण्डलानि भवन्ति । एष च रोग उत्कोठ इत्यभिधीयते । स एवानुबन्ध,

सन् कोठ सञ्ज्ञां लभते । [अल्पवीर्येणाल्पमात्रेण वा वमनद्रव्येण कृत वमनमसम्यग्वमनं तेनात स श्लेष्मनिर्हर्तुमसमर्थतया उन्मुखीकरणमुदीर्णता । पित्तश्लेष्मणोर्निग्रह पुनर्वमनविरेचनाभाव । अन्ननिग्रह उपवास । स एवोत्कोठो ज्वरानुबन्धयुक्तश्चेत कोठ । म ण्डलानामेवान्योन्यानुबन्ध इति केचित् ॥]

प्रोक्ता षट्त्रिंशदित्येते क्षुद्ररोगा विभागशः।
यान्विज्ञायनसम्मुह्येच्चिकित्सायां चिकित्सकः

॥ इत्युत्तरे षट्त्रिंशोऽध्यायः ॥

इत्यन्तरोक्तप्रकारेण एते अजगल्लिका, यवप्रख्याऽ, ऽन्त्री, कच्छपी, पनसिका, पाषाणगर्दभ, सुरसदूषिका, पद्मकण्टक, विवृता, मसूरिका, विस्फोट, विद्धा, गर्दभी, मण्डला, कक्ष्या, गन्धनामा, राजिका, जालगर्दभाऽ, इरिवेल्लिकाऽ, चिप्पलिका, विदारी, शर्करार्बुद, वल्मीक, कदर, कच्छपुट, चिप्प, कुनखाऽऽ, अलस, तिलकालक, मश, चर्मकील, जतुमणि, लाञ्छन, व्यङ्ग, प्रसुप्त्यु, उत्कोठाख्या षट्त्रिंशत्क्षुद्ररोगा विभागश उक्ता, । यान् विज्ञाय भिषक् चिकित्सायां न सम्मुह्येदिति ।

इतीन्दुविरचितायामष्टाङ्गसङ्ग्रहव्याख्याया-
मुत्तरे षट्त्रिंशोऽध्याय ।

---

# सप्तत्रिंशोऽध्यायः ॥

## क्षुद्ररोगप्रतिषेधम् ।

उक्तक्रमेणैव क्षुद्ररोगाणां चिकित्सां प्रदर्शयितुमध्याय आरभ्यते ॥

अथातः क्षुद्ररोगप्रतिषेधं नामाध्यायं व्याख्यास्याम । इति ह ॥

(क्षुद्ररोगाणामजगल्लिकादीनां प्रतिषेधश्चिकित्साभिधीयते इति क्षुद्ररोगप्रतिषेध । शेष पूर्ववत् ॥)

अजगल्लिकामपक्वां जलौकोभिर्ग्राहयेत्।
यवक्षारशुक्तिसौराष्ट्रीकल्कैश्चलेपयेत् ॥

अपक्वायामजगल्लिकायां जलौकसोऽथवा क्षारादिभिश्च लेप ॥

यवप्रख्यादीन् पाषाणगर्दभान्तान् स्वेदयित्वा सुरदारुकुष्ठमनःशिलालैर्लेपयेत् ॥

यवप्रख्यादीनां पञ्चानां प्रकरणादपक्वानां यथार्हं स्वेद, । सुरदार्वादिभिश्च लेप, । (यवप्रख्यादीनां भिन्नरूपत्वेऽपि कफवातजत्वसाम्येन कारणैक्यात् प्रथनसाम्येन विलायनीयत्वाच्च क्रियैकत्वकथनम् ॥)

पक्वास्तु सहाजगल्लिकया व्रणवदुपाचरेत् ॥

पक्वांस्तु यवप्रख्यादीन् सहाजगल्लिकये-

सगोधनसेवा । जालगर्दभे धात्रीफलान्यामलकान्युपयुञ्जीत विशदत्त इत्यर्थात् ॥

अग्निरोहिणीमपि प्रत्याख्याय पित्तविसर्पवदुपाचरेत् । पक्वा तु मधुरवर्गसिद्धेन सर्पिषा रोपयेत् ॥

अग्निरोहिणीमपीत्यसाध्यत्वाङ्गीकरणे । प्रत्याख्यायनसिध्यतीत्युक्त्वा । (प्रत्याख्याय निराकरण कृत्वा। साध्येत वा नवेत्युक्त्वेत्यर्थ ।) पक्वामित्यग्निरोहिणीम् ॥

विदारिका जलवासिनीभिर्ग्राहयित्वा बिल्वमूलनगवृत्तिकदर्भाजकर्णपलाशकल्केन प्रलिम्पेत् । अनुपशाम्यन्तीं स्वभ्यज्य स्वेदयित्वा विम्लापयेत् । पक्वां शस्त्रेण विदार्यनिम्बतिलपटोलकल्केन सन्धाय वध्नीयात । क्षीरिवृक्षकदरखदिरकषायो व्रणप्रक्षालनम् । शुद्धां मधुरकषायसस्कृतेन तैलेन रोपयेत् ॥

विदारिकाया पूर्वं जलौकस ततो बिल्वमूलादिपलाशान्तकल्केन प्रलेप । नगवृत्तिक सुनेध । पलाश पत्रम् । विम्लापन मर्दनेन विलायनम । पक्वामिति तामेव विदारिकाम । शुद्धामिति तामेव । (नगवृत्तिकदर्भाभूबिल्वमूलैरिति सुश्रुत पाठ । नगवृत्तिक जिंगाणम् । गुडगनिकेति लोक । वृश्चिकाळी त्यन्ये । अजकर्ण सर्ज । पलाश शठो । इति श्रीडह्लणकृते निबन्धसग्रहे ॥)

शर्करार्बुद मेदोर्बुदवदुपाचरेत् ॥

शर्करार्बुदे ग्रन्थ्यारुक्कोमेदोर्बुदवच्चिकित्सा ॥

(वल्मीकस्य देशभन्दरूपजातिममाप्य-त्व दर्शयति ॥)

वल्मीके हस्तस्य पादस्य चोपरिष्टान्ममणि वा जात महद्दमतिरहुच्छ्राइत स शोफ च वर्जयेत् ॥

इत्यसाध्यत्वासाध्य वल्मीकस्य लिङ्गम् ॥

अतोऽन्यथा तु प्राक् कृतशुद्धे शोणितमपहरेत् । सक्तुपललवणगुल्गुल्वारेवतश्यामादन्तीकुलत्थिकामूलैर्लेपयेत् ॥

अतो साध्यलक्षणादन्यथा वैपरीत्ये वल्मीकवत प्राक्पूर्वं कृतसशुद्धेर्विहितवमनविरेकस्य शोणित यथोपपत्त्यवसेचयेत् । तत सक्त्वादिभिरारेवतादिमूलयुक्तैर्लेपयेत् । आरेवत कर्णिकार । श्यामा त्रिवृत् । दन्ती नागदन्ती । कुलत्थिका द्वितीया त्रिवृत् ॥

पक्के तु सर्वा गतिं दुष्टमासानि च शस्त्रेण सम्यक्शोधयित्वाग्निना क्षारेण वा दहेत् ।

पक्केत्विति वल्मीक । सर्वाङ्गतिमशेषा नाडीम् । सुबोधम । (पक्के प्राप्तपाके तु विशेषे अन्तरोक्तादुपक्रमादस्य शस्त्रमुख्याध्यत्र विशेष । शस्त्रेण मण्डलाग्रादिना सर्वामशेषा गर्ती नाडीं दुष्टमासानि च सम्यक् शस्त्रकर्मोक्तविधानेनामूलत शोधयित्वा छित्वेत्यर्थ । अ-

ग्निना क्षारेण वा दहेत । वा शब्द अग्निक्षार योर्विकल्पार्थः । उन्नतमग्निना अवनत क्षारेण च दहेदिति भाव ।)

सुशुद्धे तु व्रणे भल्लातकमनःशिलाले लाकालानुसार्यगरुचन्दनैर्निम्बतैलं रोपणार्थं श्रपयेत् ॥

शुद्धे च वल्मीकव्रणे निम्बतैलं भल्लातकादिभी रोपणार्थं श्रपयेत् । कालानुसारीत गरम ॥

कदरं शस्त्रेणोत्कृत्य स्नेहेन दहेत् ॥

कदराख्ये सुबोधम् । स्नेहेन दाह्ययोग्येन । (कदराख्य क्षुद्ररोग शस्त्रेण वृद्धिपत्रादिना उत्कृत्य छित्वा स्नेहेन अग्निसन्तापाद्दाह्ययोग्येन पादतलमुत्थाप्य तस्य व्रणस्य परितो माष कल्केन दृढा पाळीं कृत्वा स्नेहेन ता पूरयित्वा दहेत् ॥)

रुद्धगुदे निरुद्धमणिवच्चिकित्सा ॥

निरुद्धमणिर्गुह्यरोगे वक्ष्यते वदुक्ता चिकित्सारुद्धगुदे । ( रुद्धगुदाख्ये क्षुद्ररोगे गुह्य रोगप्रतिषेधे वक्ष्यमाणनिरुद्धमणिक्रियावत् चिकित्सित कार्यम् । पुनः पुनः स्थूलतरस्नेहाक्तजातुषनाडीविन्यासानिलाघ्नस्नेहपरिषेकादिभिर्गुदस्रोत क्रमेण वर्धयेदित्यर्थ ।)

चिप्प शोणितावसेकसशोधनैरुपाचरेत् । व्यपगतोष्माणश्चैनमुष्णाम्बुना परिषिच्य यथायोग शस्त्रेण परिकर्त्योपनयेत् ॥

चिप्पे सुबोधम् । परिकर्त्योपकर्ष्य । (एन चिप्पाख्य रोग दुष्टरक्तमोक्षणेन कफपित्तादतेनास्तीत्युक्तत्वात्तन्निर्हरणपरमौषधेन विरेचनाख्येन सशोधनेन च व्यपगतोष्माण जितोष्माण कृत्वानन्तरमुष्णोदकेन परिषिच्य शस्त्रेण यथायोग परिकर्त्य परितो नखशस्त्राग्रेण मासाद्विश्लेष्य षडङ्गुलेन सन्दशेनामूलतो दृढ गृहीत्वा मध्याङ्गुलपाद्व्यापनयेत् । )

ततो रसाञ्जनरोचनानेपालीतेजोह्वाकल्कैरङ्गुलिवेष्टं शोधयित्वा कालेयकागरुहरिद्रारसाञ्जनसिद्धेन तैलेन रोपयेत् । मधुरकषायसिद्धेन वा । अल्पावशिष्टे च सर्जरस चूर्णेन पूरयेत् ॥

ततोन तर रसाञ्जनादिभि शोधनो लेप । नेपाली मनःशिला । कालेयकादिसिद्ध तैल रोपणम् । कालेयक पीतचन्दनम् । मधुरद्रव्यसिद्धेन वा तैलेन रोपयेदिति मध्य ल । अल्पावशिष्टं रूढप्रायम् । (तन्त्रान्तरे चोक्तम् । चिप्प शोणितसेकेन शोधनैश्चाप्युपाचरेत् । गतोष्माण तथा चैनमुष्णोदपरिषेचितम् । शस्त्रेण तु यथायोगमुत्कृत्य स्रावयद्व्रणम् । शिला तजोवती चैव रोचना च रसाञ्जनम् । कल्कैरेतैश्च सम्पिष्टैः शोधयित्वा व्रण सत । हरिद्रागुरुकालीयकल्कैश्च सरसाञ्जनै । सिद्धेन तिलतैलेन ततः कुर्वीतरोपणमिति । कालीयक कृष्णचन्दनम् ॥)

कुनखमपि मदुष्टमेवमेवोपक्रमेत् ॥

कुनखमपीति चिप्पचिकित्सितसमुच्चये ।

( मसूरमषिकादिना वर्तितविस्फोटोऽथ कठिनः शालत्वेनात् वृश्चिकमात्मनं नश्यत्येवमेव विस्फोटवत् नखोन्मादनादिकेन शस्त्रकर्मणोपक्रमेत् चिकित्सेत् ॥)

अलसे रक्तं काञ्जिकक्षारसिक्तौ चरणौ निम्बतिल्वपटोलीकासीसरोचनाकल्केन लेपयेत् । निदिग्धिकारससिद्धेन सर्षपतैलेनाभ्यज्य रोचनाकासीसमनःशिलाचूर्णं प्रतिसारयेत् ॥

अलस इत्यादि सुबोधम् । (अलसाख्ये क्षुद्ररोगे तु अम्लेन काञ्जिकेन धान्याम्लेनावसिक्तौ परिषिक्तौ चरणौ निम्बादिकल्केन लेपयेत् । कासीस तुत्थम् । प्रतिसारणं घर्षणम् ॥)

तिलकालकान् मशांश्च सूर्यकान्तेनाग्निना वा दहेत् क्षारेण वा । चर्मकीलं जतुमणिं च तद्वच्छस्त्रेणोत्कृत्य ॥

तिलकालकादिषु सूर्यकान्तव्यवहितैः सूर्यरश्मिभिर्दहेदग्निना वा क्षारेण वा । (तिलकालकाख्यान् मशाख्यांश्च रोगान् अर्करश्मितप्तेन सूर्यकान्तेनाग्निना वा तयोरन्यतमाभावे पश्चात् पत्रतनुना मृदुक्षारलेपेन वा दहेत् ।) चर्मकीलं जतुमणिं च तद्वदिति सूर्यकान्तादिना दहेदिति सम्बन्धः । न तु प्रथममेवापितु शस्त्रेणोत्कृत्य । (चर्मकीलाख्यं जतुमणिसंज्ञितं च । जतुमणिरिति प्राणिजातेर्वारुण्यादेरित्युक्तः । शस्त्रेण वृद्धिपत्रादिना उत्कृत्य मूलतश्छित्वा तद्व[illegible] दहेत् ॥)

लाञ्छनादित्रयाणामपि रक्तदोषजत्वसाम्याच्चिकित्सामेकीकृत्याह ॥

लाञ्छनव्यङ्गनीलिकासु यथासन्नां सिरां विध्येत् । क्षीरिवृक्षत्वक्कल्कैश्च क्षीरपिष्टैर्लेपयेत् । बलातिबलामधुकहरिद्राभिर्वा । मधुकागरुपद्मकालीयकैर्वा । तरुणकपित्थतिन्दुकजम्बूभिर्वा । अम्बिकामूलेन वा । शूकरदंष्ट्रया वा मधुघृतयुक्तया ॥

लाञ्छनादित्रये आसन्नाया अप्रतिषिद्धाया सिराया व्यधनम् । पञ्चलेपयोगाः सुबोधाः । पद्मका क्षीरिका । कालीयकं कृष्णचन्दनम् । तरुणकपित्थोऽजीर्णकपित्थकः । अम्बिका चुक्रिका तस्या मूलम् । इति लाञ्छनादित्रये साधारणम् । [पूर्वोक्त व्यङ्गनीलिकयोरपृथक्त्व तु समन्यायात् षट्त्रिंशत्संपादनार्थेव । अत्र नीलिकाग्रहणं स्थानभेदजनितसंज्ञान्तरतया चिकित्सा तत्भ्रान्तिपरिहारार्थम् । ]

(लाञ्छनादित्रयस्य सामान्यचिकित्सामुक्त्वा तेषु व्यङ्गस्य विशेषचिकित्सामाह ॥ )

विशेषेण व्यङ्गे प्रसृक्स्रावपूर्वमर्जुनपरिपोटैर्लेपः । क्षौद्रेण वा पिष्टा माञ्जिष्ठा । अजाक्षीरेणवार्द्रदाडिमत्वक् । तेनैव वा वालामलकं गोमूत्रेण सप्ताहं स्थितम् । दधिमण्डेन वा कालेयकलोध्रोत्पलाकिञ्जल्कम् । नवनीतेन वा श्वेताश्वखुरजमषी ॥

विशेषतस्तु व्यङ्गेषु रक्तस्रावं कृत्वा अर्जुनतरो परिपोटैः स्वय [illegible] । सु-

एनाश्च पित्तव्यङ्गान् रुधिरं स्रावयित्वा मधुकादिभिर्घृतयुक्तैरालेपयेत् । प्रपौण्डरीकादिभिर्वा घृतयुक्तैः । प्रवाळं विद्रुमम् । शीतं मधुराम्लपानादिकं च सेवेत ॥

कफजेषु दशमूलदेवदारुहरीतकीभद्रामलकीकाथे मुस्तकुष्ठहरिद्रामरतरुकल्कैस्तद्वत् साधितं सर्पिस्तद्वदेवोपयुञ्जीत ॥

कफजेषु व्यङ्गेषु दशमूलादिकाथे मुस्तादिकल्कैस्तद्वदिति सक्षीरं साधितं सर्पिस्तद्वदेवेत्यधोभक्तं पाने नावनाभ्यञ्जनयोः सायं च प्रयोजयेत् ॥

तुत्थरोचनालोध्रप्रियङ्गुकालेयकैः समधुघृतैर्लेपः । देवदारुसरळबलाशिग्रुमूलैर्वा । मनश्शिलातुत्थरसाञ्जनैर्वा । मृदुना वा क्षारेण दशमात्रः प्रलेपः ॥

तुत्थदेवदारुमनश्शिलादिभिर्लेपत्रयं सुबोधम् । अथवा मृदुना क्षारेण सूत्रोक्तेन दशमात्रः प्रलेपः । मात्रा कालविशेषः । तस्या लक्षणं यावत् पर्येति हस्ताग्रं दक्षिणं जानुमण्डलं निमेषोन्मेषकालेन समं मात्रा तु सा स्मृता इति ॥

रक्तजेषु क्षीरसर्पिः स्निग्धस्य सिरां विस्रावयेत् । वमनविरेचने च पित्तवत् कुर्यात् । आलेपश्चास्य चन्दनमधुककल्केन घृतवता । सर्जरसनीलोत्पलशङ्खवेतसकदळीमूलमूर्वामधुककल्केन वा ॥

रक्तजेषु व्यङ्गेषु क्षीरोद्भवेन सर्पिषा स्निग्धस्य सिरां विस्रावयेत् । सुबोधम् । चन्दनमधुकेन घृतवदित्यादि दिति पित्तव्यङ्गवदिक्षुरसेनेत्यर्थः । चन्दनसर्जरसादिभिरालेपद्वयं सुबोधम् । इति व्यङ्गानि ॥

प्रसुप्तौ वातकुष्ठोक्तक्रमोऽन्ते चाग्निना दाहः ॥

प्रसुप्त्याख्ये सुबोधम् । अन्ते च वातकुष्ठचिकित्सया शान्त्यभावादग्निना दाहः ॥

उत्कोठे पित्तश्लेष्महरो विधिः सक्षारलवणं च तैलमभ्यङ्गः । कोठं कुष्ठचिकित्सितमीक्षेत ॥

॥ इति सप्तत्रिंशोऽध्यायः ॥

उत्कोठाख्ये सर्वो विधिः पित्तश्लेष्मघ्नः । यवक्षारसैन्धवयुक्तं तैलमभ्यङ्गश्च । कोठे कुष्ठचिकित्सा । [शास्त्रान्तरेषु क्षुद्रत्वसाम्यात्तदनन्तरोक्ताः पादप्रभेदकण्टकवेधपाददाहपार्ष्णिव्यथा देहस्फुटनातिस्वेददेहदौर्गन्ध्यवैवर्ण्यतानलदाहादिक्रियाप्यत्र दिङ्मात्रावबोधनार्थं किञ्चिल्लिख्यते ॥

क्षयगते श्लेष्मणि पादलग्ने
सञ्चारिणा देहभृतामजस्रम् ।
वातः सपित्तोऽग्नितलेषु दुष्टो
भेदान् करोत्यप्रतिकारनिघ्नान् ॥

वटाङ्कुरारुष्करसिक्थचूत-
निर्यासमिश्रं धूपवमर्कदुग्धम् ।
एभिर्हि युक्तास्तु घृतं विपक्वं
पादप्रभेदं विनिहन्ति सद्यः ॥

अर्कोविस्नुहिदुग्धसिक्थपटुतैलसयुतं पिष्टम् ।
पादविलिप्तं सद्यः करोति कमलोपमं चरणम् ॥
अर्कदुग्धसैन्धवहयखुरचूर्णं सनवनीतम् ।

पश्चात् स्नानं प्रकुर्वीत देहक्लेदोपशान्तये ॥

॥ देहदौर्गन्ध्यस्य ॥

गोमूत्रेण समालोड्य माहिषं शकृदुत्तमम् ।
तेनैव लेपनं कुर्याद्देहदौर्गन्ध्यनाशनम् ॥
शिरीषलामज्जकहेमलोध्रै
स्त्वग्मेदसस्वेदहरः प्रघर्षः ।
पत्राम्बुलोहैः रथ चन्दनाभ्यां
शरीरदौर्गन्ध्यहरः प्रलेपः ॥
तिन्त्रिणीस्वरसे तैलप्रस्थं सम्यक्पचेद्भिषक् ।
अत्र कल्कार्थमेतानि चाश्मानि च योजयेत् ॥
शिग्रुसैन्धवदुर्गन्धा लशुनं च सचित्रिकम् ।
एतच्छरीरदौर्गन्ध्यकण्डूतिक्लेदनाशनम् ॥
तिन्त्रिणीफदलोद्भूतं स्वरसं लेपयेन्नरः ।
बहुशो देहदौर्गन्ध्यकण्डूकोठविनाशनम् ॥
क्षौद्रेण पौष्करं रेणुमेकविंशति वासरान् ।
लिह्यान्नेहदौर्गन्ध्यं नश्येन्निश्शेषमङ्गिनाम् ॥
द्विनिशातिलकुमाजीकल्कोद्वर्तितविग्रहः ।
यः स्नाति तस्य देहः स्यात् सुगन्धिर्भास्करच्छविः ॥

॥ वैद्युतानलदाहस्य ॥

वैद्युतानलदग्धस्य लेपसेकादियोजयेत् ।
सतैलमम्ललवणप्रायं तापं च वह्निना ॥
घृतदग्धवदाहारं मधुरस्निग्धशीतलम् ।
सेकं च सज्ञायुक्तस्य कुर्वीतेऽन्द्रियवेदिनः ॥
आम्रैरौषधैर्लेपं सेकमिक्षुतुषोदकैः ।
सर्पिस्निग्धैरम्लयुक्तैर्वसातैलघृतैरपि ॥
इत्यादिकं शास्त्रान्तरादवगन्तव्यम् ॥ ]

इतीन्दुविरचितायामष्टाङ्गसंग्रहव्याख्यायामुत्तरे सप्तत्रिंशोऽध्यायः ॥

# अष्टत्रिंशोऽध्यायः ॥

## गुह्यरोगविज्ञानीयम् ।

व्रणशल्यप्रसङ्गेन क्षतप्रायत्वात् गुह्यरोगाणां हेत्वादिकं प्रदर्शयितुमध्याय आरभ्यते ॥

अथातो गुह्यरोगविज्ञानीयं नामाध्यायं व्याख्यास्यामः । इति ह स्माहुरात्रेयादयो महर्षयः ॥

गुह्यशब्देनोपस्थो भण्यते ॥

स्त्रीव्यवायनिवृत्तस्येत्यादिना पुंगुह्यरोगाणां हेतुरुच्यते ॥

स्त्रीव्यवायनिवृत्तस्य सहसा भजतोऽथवा ।
दोषाध्युषितसङ्कीर्णमलिनाणुरजःपथाम् ॥
अन्ययोनिमनिच्छन्तीमगम्यां नवसूतिकाम् ।
दूषितं स्पृशतस्तोयं रतान्तेष्वपि नैव वा ॥
विवर्धयिषया तीक्ष्णान् प्रलेपादीन् प्रयच्छतः ।
मुष्टिदन्तनखोत्पीडाविषवच्छूकपातनैः ॥
वेगनिग्रहदीर्घातिखरशुष्कविघट्टनैः ।
दोषा दुष्टा गता गुह्यं त्रयोविंशतिमामयान् ॥
जनयन्त्युपदंशादीन्—

स्त्रीव्यवायनिवृत्तत्वादियुक्तस्य पुरुषस्य तत एव हेतोर्गुह्यं गता वातादयो दुष्टास्त्रयोविंशतिमुपदंशादीनामयान् व्याधीन् जनयन्ति । स्त्रीव्यवायो मैथुनम् अत्र सहसा यो निवृत्तः सर्वथैव स्त्रीयं तस्य । सहसा निवृत्तिः सहसा सेवनं च दोषकोपहेतुः । अथवा दो... त्वादिगुणरजःपथा मन्ययोन्यादिका ...

ष्यान्तरयथुरेवासविशेष्य । श्लेष्मकृते अप दशे काठिन्ययुक्तः स्नेहलेपप्रतीतिकर कण्डूस हित शीतस्पर्शश्च शोफो जायते ॥ ]

शोणितेनासितस्फोट सम्भवोऽस्रस्रुतिर्ज्वरः ।

ज्वरान्त रक्तेन । [ रक्तकृते अपदशे कृष्णवर्णाना स्फोटानामुत्पत्तिरस्रस्रावो ज्वरश्च स्यात् ॥ ]

सर्वजे सर्वलिङ्गत्व श्वयथुर्मुष्कयोरपि ।
तीव्रारुगाशुपचन दरण कृमिसम्भवः ॥

कृमिसम्भवान्त सन्निपातेन । [ सरक्तसन्निपातजे अपदशे सर्वलिङ्गत्व वाताद्यपद शाना प्रत्येकोक्तलक्षणनिचयसम्भव । तथा वृषणयोरपि शोफ अपिशब्देनान्यत्रापि । मेढ्र मात्रे शोफोद्भव सूचितम् । रक्तापदशेऽपि शोफ उक्त । तीव्रा अत्यर्थमसहनीयारुक्पीडाविशेष । आशुपचन द्वित्रिदिनैरेव पाक । आशु शब्दोऽन्यथा पूर्वेषा क्रमेण पाक सूचित । दरण भेदनम् । कृमिसम्भव अन्त स्वयमेव जन्तूनामुद्भव ॥ ]

[ एषामवान्तरभेदत्वादत्रैव साध्यासाध्यविभाग दर्शयति ॥ ]

याप्यो रक्तोद्भवस्तेषा मृत्यवे सान्निपातज ।

तेषा पञ्चानामपदशाना मध्ये रक्तापदशो याप्य । सन्निपातजस्तु मृत्यवे भवति ॥

जायन्ते कुपितैर्दोषैर्गुह्यासृक् पिशिताश्रयै ।
अन्तर्बहिर्वा मेढ्रस्य कण्डूला मासकीलकाः ॥
पिच्छिलास्रस्रवा योनौ तद्वच्च छत्रसन्निभाः ।
तेऽर्शांस्युपेक्षाघ्नन्ति मेढ्रपुस्त्वभगार्तवम् ॥

गुह्ये यदसृग्मक पिशित मास च तस्मात् कारणात् कुपितैर्दोषैर्मेढ्रस्यान्तर्वा बहिर्वा कण्डूला पिच्छिलास्रस्रवाश्च मासकीलका जायन्ते । अनेनैवप्रकारेण स्त्रिया अपि योनौ छत्राकृतयो मासकीलका जायन्ते ते नाम्ना अर्शांसि । ते च पुरुषे जाता उपेक्षिता सन्तो मेढ्र पुस्त्व च नाशयन्ति । स्त्रियास्तद्वद्भगमार्तव च लाघवार्थमत्र योनिरोग उक्त । [ कुपितैर्यथोक्तेन कारणजालेन क्रुद्धैर्गुह्यासृक्पिशिताश्रयै गुह्यगतमसृक्पिशितमाश्रयो येषा तै. मेढ्रस्यान्तर्भागे बहिर्भागे वा कण्डूला. कण्डूयुक्ताः पिच्छिलास्रस्रवा पैच्छिल्ययुक्त रक्त स्रवन्त मासकीलका कीलकाकारा मासाकरा जायन्ते योनौ च स्त्रीणा गुह्येऽपि तद्वत् योनिव्यापदुक्तकारणदुष्टैर्दोषैरन्तर्बहिर्वा कण्ड्वादियुक्ता मासकीलका जायन्ते । तत्र त्वय विशेष ते छत्रसन्निभा छत्रतुल्याकारा कृशमूला. स्थूलाग्राश्च भवन्ति । मेढ्रजा मासकीलका योनिजाश्चार्शांसीति कथ्यन्ते । उपेक्षया ते पुसि मेढ्रपुस्त्वभगार्तव मेढ्रचेन्मेढ्रम् । पुस्त्व स्त्रीगमनसामर्थ्य शुक्र वा । तथा भगे चेत् भगमृतुरक्तयोग्य आर्तव रक्त च घ्नन्ति । पुरोगाणा मध्ये स्त्रीरोगकथन कारणादिसाम्येन लाघवात् ॥ ]

गुह्यस्य बहिरन्तर्वा पिटकाः कफरक्तजा. ।

र्य हस्ताभ्यां मर्दितं यद्वा ऽस्तु मेढ्रास्य सद्घातको-
पत मर्दनस्यैवातियोगात् कारणान्तराद्वा कुपि
ताद्वातात् सरुजं इष्टमेव सदा वर्तते चेन्मृदि-
त मृदिताख्यो गुह्यरोगः ॥]

विषमा कठिना भुग्ना वायुनाष्ठीलिका स्मृता ।

या विषमत्वादिगुणा पिटका वायुना भवति सा नाम्नाष्ठीलिका स्मृता । [कुपितेन वायुना विषमा काचिन्निम्ना कचिदुन्नता कठिना प्रायेण काठिन्ययुक्ता भुग्ना कुटिलाकारा अष्ठीलिकासामर्थ्यात् पिटकेत्यूह्य इयमष्ठीलिकाख्यो गुह्यरोग ॥]

विमर्दनादिदुष्टेन वायुना चर्म मेढ्रजम् ।
निवर्तते सरुग्दाहं क्वचित् पाकं च गच्छति ॥
पिण्डितं कुथितं चर्म तत्प्रलम्बमधोमणे ।
निवृत्तसंज्ञं सकफं कण्डूकाठिन्यवत्तुतत् ॥

विमर्दनादिना दुष्टेन वायुना मेढ्रस्य चर्म सरुग्दाहं सन्निवर्तते परावृत्तं तिष्ठति । क्वचित्तु पाकमपि गच्छति । ततश्चर्मपिण्डितं संकुचितं कुथितं छिन्नं मणेर्मेढ्राग्रभागस्याधः प्रलम्बं भवति तस्य निवृत्तमिति संज्ञा । तच्च निवृत्तं कफसंयोगात् कण्डूकाठिन्यवच्च भवति न तु सर्वत्र । [विमर्दनाद्वि दुष्टेनेति पाठः । पिण्डितं ग्रथितमिति च । विमर्दनाद्विविधान्मर्दनात् दुष्टेन वायुना मेढ्रजं चर्ममेढ्रस्य त्वक् निवर्तते परावृत्तं तिष्ठति । हि प्रसिद्धौ । क्वचित् केषुचित् पुरुषेषु दोषभेदवशात् सरुग्दाहं रुजया ऊष्मातिशयेन च युक्तं गच्छति च । तत्तथाभूतं चर्मपिण्डितं ग्रथितं पिण्डाकारतया ग्रन्थिभावमापन्नं मणेर्मेढ्राग्रभागस्याधः प्रलम्बं लम्बमानं निवृत्तसंज्ञं निवृत्ताख्यो रोगः । स कफः कफसम्बद्धः तत्तु निवृत्तं कण्डूकाठिन्येन च युक्तं भवति । ]

दुरूढं स्फुटितं चर्मनिर्दिष्टमवपाटिका ।

मेढ्रमत्र चर्मदुष्टं कृत्वोढं मर्दितं स्फुटितं सदवपाटिकेति नाम्ना निर्दिष्टम् । [दुरूढं दुष्टं कृत्वोढं अयथावत् गृहीतं मर्दितमित्यर्थः । अत एव स्फुटितं भिन्नं यच्चर्मेतत् सदवपाटिका संज्ञो गुह्यरोगः ॥]

वातेन दूषितं चर्म मणौ सक्तं रुणद्धि चेत् ।
स्रोतो मूत्रं ततोऽभ्येति मन्दधारमवेदनम् ॥
मणेर्विकासरोधश्च स निरुद्धमणिर्गदः ।

वातेन दूषितं चर्ममेढ्रमणौ सक्तं श्लिष्टं यदि मेढ्रस्रोतोरुणद्धि ततो मूत्रं मन्दधारमवेदनं चाभ्येति मणेश्च हर्षणे विकासरोधो भवति स गदो नाम्ना निरुद्धमणिः । (वातेन कृतदूषणं चर्म मणौ लिङ्गाग्रे सक्तं संश्लिष्टं स्रोतो मूत्रमार्गं रुणद्धि यदि ततस्तस्माद्धेतो मूत्रं मन्दधारं स्रोतो रोधादन्तरान्तरा विच्छिन्नं अवेदनं वेदनारहितं अश्मर्यादौहि निरोधस्याभ्यन्तरत्वाद्वेदना सम्भवः इह तु बाह्यत्वात्तदभावः । अभ्येति निर्गच्छति । मणेः कर्णिकाया स्वरूपरेखनं शक्यतया विकासयितुमशक्यत्वं च स्यात् । य एवंविधः स गदो निरुद्धमणि संज्ञो गुह्यरोगः ॥)

द्वारे कफः क्रुद्धो वेदनारहितां शीतलादिगुणां च योनिं कुर्यात् तद्विधस्रुतिं शीतलादिगुणस्रुतिं सा व्यापन्नाम्ना श्लैष्मिकी । (योनिं अवेदनामीषद्वेदनायुक्तां शीतलां शीतस्पर्शां कण्डुलां कण्डूयुक्तां पाण्डुं पिच्छिलां पाण्डुवर्णां पैच्छिल्ययुक्तां च तद्विधस्रुतिं पाण्डुं पिच्छिलां स्रुतवणयुक्तां च करोति ॥ )

—वातपित्ताभ्यां क्षीयते रजः ।
स दाहकार्श्यवैवर्ण्यं यस्याः सा लोहितक्षया ।

यस्या व्यापदि वातपित्ताभ्यां रजः क्षीयते दाहादिकृच्च भवति सा व्यापन्नाम्ना लोहितक्षया । [यस्या योनिव्यापद्यनिलपित्ताभ्यां कारणाभ्यां रजोरक्तं दाहाद्यन्वितं क्षीयते क्षयं याति सा लोहितक्षयाख्या व्यापत् ।]

पित्तलाया नृसंवासे क्षवथूद्गारधारणात् ।
पित्तयुक्तेन मरुता योनिर्भवति दूषिता ॥
शूना स्पर्शासहा सार्तिर्नीलपीतास्रवाहिनी ।
वस्तिकुक्षिगुरुत्वातिसारारोचककारिणी ।
श्रोणिवङ्क्षणरुक्तोदज्वरकृत्सा परिप्लुता ॥

पित्तलाया पित्तप्रकृतेः स्त्रिया नृसंवासे मैथुने क्षवथोरुद्गारस्य च धारणात् पित्तयुक्तेन वायुना दूषिता योनिः शूनादिगुणा भवति सा व्यापन्नाम्ना परिप्लुता । [पित्तलाया प्रभूतपित्तायाः पित्तप्रकृतेरित्यर्थः । नृसंवासे पुमङ्गतौ क्षवथूद्गारयोर्धारणात् पित्तयुक्तेन मरुता दूषिता योनिः शूना शोफयुक्ता स्पर्शासहा स्पर्शं किञ्चिदप्यसहमानामार्तिं रुजायुक्ता नीलपीतास्रवाहिनी नीलवर्णं पीतवर्णं वा अस्रं रक्तं वहनमाना तथा वस्तौ कुक्षौ च गुरुत्वमतिसारमरोचकं च कुर्वाणा श्रोण्या वङ्क्षणयो रुक्तोदौ च ज्वरं च कुर्वती भवति सा व्यापत् परिप्लुताख्या ॥ ]

वातश्लेष्मामयव्याप्ता श्वेतपिच्छिलवाहिनी ।
उपप्लुतास्मृता योनिः —

वातश्लेष्मलैरामयैर्व्याप्ता योनिः श्वेतं पिच्छिलं च वहति सा नाम्नोऽपप्लुता स्मृता । [वातनिमित्तैः श्लेष्मनिमित्तैश्चामयैर्व्याप्ता परिवृता श्वेतपिच्छिलवाहिनी श्वेतवर्णं पैच्छिल्ययुक्तं चास्रं वहमाना योनिः योनिव्यापत् उपप्लुताख्या स्मृता । ]

—विप्लुताख्यात्वधावनात् ।
सञ्जातजन्तुः कण्डूला कण्ड्वा चातिरतिप्रिया ॥

या तु योनिरधावनादप्रक्षालनाद्धेतोः सञ्जातजन्तुः कण्डूला च भवति कण्ड्वा चातिरतिप्रिया अतिव्यवायप्रिया च भवति सा नाम्ना विप्लुता । [विप्लुताख्या तु योनिः तुशब्दः परिप्लुतातो विशेषद्योतकः । अधावनादक्षालनात् परिशोधनात् सञ्जातजन्तुः योन्यन्तर्गतरक्तजक्रिमियुक्तत्वादागन्तुः न तु क्रिमिसम्भवेरतिरतिप्रियेत्यस्यानुपपत्तेश्वान्तः प्रवृद्धनैसर्गिकक्रिमिरित्यर्थः । रतिरहस्येचैतत् स्पष्टमुक्तम् । रक्तजाः क्रिमयः सूक्ष्मा मृदुमध्योमशक्तयः । स्मरसद्मनि कण्डूतिं जनयन्ति यथा बलम् । ध्वजदण्डाभिघातेन कण्डूत्यपनयाद्दृत । रमणाच्च सुखमिति । कण्डूला असर्पणीय कण्डूयुक्ता कण्ड्वा कण्डूतिहेतोः चशब्दः समुच्चये जन्तुत्वात् कण्डूः कण्डूत्यास्तभिनिवेशश्चेतिहेतु

# एकोनचत्वारिंशोऽध्यायः ॥

## गुह्यरोगप्रतिषेधम् ॥

क्रमागतेनैव गुह्यरोगाणां प्रतिषेधं प्रदर्शयितुमध्याय आरभ्यते ॥

अथातो गुह्यरोगप्रतिषेधं नामाध्यायं व्याख्यास्यामः । इति ह ॥

(अथेत्यादि पूर्ववत् । गुह्यरोगाणां प्रतिषेधं चिकित्सितम् ।

तत्र पूर्वमुपदंशानां सामान्यचिकित्सामाह ॥)

अपदंशेषूत्पन्नमात्रेषु पाकपरिहारार्थं मेढ्रमध्ये सिरां विध्येत् । उभयतश्चास्यविधिवद्दोषानपहरेद्विशेषतो विरेचनेन । तदयोग्यस्य त्वप्रवृद्धिकृता नास्थापनेन ॥

अपदंशेष्विति बहुवचनं विशेषानपेक्षया साधारणचिकित्सा प्रदर्शनार्थम् । सुबोधम् । उभयतः ऊर्ध्वमधश्च । तदयोग्यस्यास्थापनादे । अप्रवृद्धिकृताविषयपदंशविशेषणम् । [उत्पन्नमात्रेष्वचिरकालजनितेष्वपदंशाख्येषु गुह्यरोगेषु पाकपरिहारार्थं मेढ्रमध्ये मेढ्रस्यमध्यभागे न तु मूलेऽग्रे वा उपर्यवेध्य सिरासद्भावेण वेध्य सिराया दुर्लक्ष्यत्वादधोभागे सीवनीं वर्जयित्वा तत्पार्श्वत इति च मन्तव्यम् । पूर्वं सिरावेधे निवृत्तापदंशशुक्रव्यापत्सु मेढ्र इत्यतावन्मात्रकथनेन स्थानविशेषस्यानिर्देशादत्र मध्य इत्युक्तम् । उत्पन्नमात्रेष्वित्युक्त्या चिरोत्थितेष्वतिप्रवृद्धेन शोफेन सिरान्तर्धानादवेध्यतया अनपायिभिर्जलौकोभिर्दुष्टास्रविस्रावणं कार्यमिति च द्योत्यते । मौश्रुतेऽप्युक्तम् । उपदंशेषु साध्येषु स्निग्धस्विन्नस्य देहिनः । मेढ्रमध्ये सिरां विध्येत् पातयेद्वा जलौकस इति ।. ]

यथादोषं चालेपसेकादीनविरतं विदध्यात् । एवं सद्य एव रुक्तोदशोफरागमकम्भा निवर्तन्ते ॥

यथादोषमित्युत्कृष्टदोषानतिक्रमेण ॥

[प्राप्तपाकस्य क्रियामाह ॥ ]

पक्वेषु तु शस्त्रमवचारयेत् । सघृतक्षौद्रशर्करेण तिलकल्केनालेपयेत् । अपि च ॥

शस्त्रमवचारयेद्यथायोग्यं पाटनादिकं कर्तुम् । अपिचेति समुच्चये । [पक्वेषु पाकं प्राप्तेषु सत्सु तुशब्देनाशु शस्त्रावचार्यतास्य दुष्करत्वं च द्योत्यते । उक्तं च शास्त्रान्तरे । शस्त्रेणोपाचरेच्चापि पाकमागतमाशुवै इति ॥ ]

[क्षालनार्थं तैलपचनार्थं च क्वाथमाह ॥ ]

जम्ब्वाम्रसुमनोनीपश्वेतकाम्बोजिकाङ्कुरान् ।
सल्लकीबदरीबिल्वपलाशतिनिशोद्भवाः ॥
त्वचः क्षीरिद्रुमाणां च त्रिफलां च पचेज्जले ।
स क्वाथः क्षालनं तेन पक्वं तैलं च रोपणम् ।
गोजीविडङ्गमधुकं सर्वगन्धैश्च पेषितैः ॥

जम्ब्वाद्यङ्कुरान् सल्लक्यादीनां क्षीरिद्रुमाणां च त्वचः त्रिफलां च जले पचेत् स क्वाथः क्षालनं तेनैव च क्वाथेन गोज्यादिमिश्रं पेषितैः पक्वं तैलं रोपणम् । नीपो भूमिकदम्बः । श्वेतकाम्बोजिकाख्य श्वेतपाकी शिरालिण्डिका च । सल्लक्याद्युद्भवास्त्वचः क्षीरिद्रुमाणां च वटादीनां त्वच एव । [चतुर्गुणे जले पचेत् द्वादशा-

तण्डुलाम्बुना पिबेत् । अथवा पाठादिचूर्णं समाक्षिकं दध्ना युक्तं पिबेत् । इति विषजातिसारे ॥

बस्तिरुगवर्तनाहेषु फलवर्तिं प्रयोजयेत् ।
आरग्वधं सत्रिवृतां सोपकुल्यां हरीतकीम् ।
पिबेद्घृतेन सक्षौद्रां बस्तिशूलादिनाशिनीम् ॥

बस्तिरुगादिषु उदावर्तचिकित्सोक्तां फलवर्तिं प्रयोजयेत् । वर्त उदावर्त । (विशोषितिकाठि यम् ।) नाह आनाह । आरग्वधादिश्रवणं पूर्वयुक्तां हरीतकीं सक्षौद्रां घृतेन पिबेद्बस्तिशूलादिनाशिनीम् ॥

गृहधूमनतश्यामा नीलिनी तण्डुलीयकैः ।
सिद्धं वाज्यं तथाऽसिद्धं वरा क्वाथत्रिवृद्युतम् ॥

गृहधूमादिभिः सिद्धमाज्यं पिबेत् । असिद्धमेव वा घृतं त्रिफलाक्वाथेन त्रिवृता च संयुक्तं पिबेत् । इति बस्तिरुगादिषु ॥

काकोळी क्षीरिवृक्षत्वग्द्राक्षायष्ट्याह्वशर्कराः ।
नस्यं विषशिरोरुघ्नं संयोज्य शीतवारिणा ॥

काकोळ्यादिनस्यं विषशिरोरुघ्नम् । सुबोधम् । इति मूर्धरुजि ॥

श्वयथौ शुद्धकोष्ठस्य पयः पाने हितं शृतम् ।
विश्वभेषजवैदेहीकटुकादेवदारुभिः ।
सुरसामूलकल्कैर्वा छागं वा पिप्पलीशृतम् ॥

विषजे श्वयथौ वमनविरेचनाभ्यां शुद्धकोष्ठस्य विश्वभेषजादिभिः शृतं पयः क्षीरं पाने हितम् । अथवा सुरसामूलकल्कैः शृतं पयः पाने हितम् । अथवा पिप्पलीशृतं छागं पयः ॥

त्रिफलायाः कषायेण त्रिवृता भावितात्र्यहम् ।
आलोड्य सर्पिषा पीता विषश्वयथुनाशिनी ॥

त्रिफलाक्वाथेन त्र्यहं भाविता या त्रिवृता सा घृतेनालोड्य पीता विषश्वयथुनाशिनी ॥

मधुवेल्लवराव्योष सुराह्वोशीरपद्मकैः ।
विषश्वयथुजिल्लेपस्तथा स्वादुकषायकैः ॥

मध्वादेभिः पद्मकान्तैर्लेपो विषश्वयथुजित् । तथा मधुरैः कषायैश्च द्रव्यैः ॥

शिरीषपुष्पाऽहिशिरोनतकुष्ठैर्घृतान्वितैः ।
धूपोऽगदः श्वयथुजित् समस्तविषनाशनः ॥

शिरीषपुष्पादिभिर्घृतान्वितो धूपः श्वयथुजिदगदः सर्वविषाणां नाशनः । अहिशिरः सर्पोत्तमाङ्गम् । इति श्वयथौ ॥

अल्पेनाप्यपचारेण दंशः पूतित्वमश्नुते ।
प्रायो न सहते तीक्ष्णमुष्णं वा भेषजं विषम् ॥
मधुरस्निग्धशीतानि युञ्ज्यात्तस्माद्विषव्रणे ।
सेकालेपांश्च सक्षीरैः कषायैः क्षीरिवृक्षजैः ॥

विषव्रणे मधुरादिप्रयोगाय अल्पेनेत्यादिहेतुः । क्षीरिवृक्षाणां कषायैर्द्रवैः क्षीरसंयुक्तैः सेकानालेपांश्च युञ्ज्यात् ॥

न्यग्रोधशृङ्गमधुकतिलसर्जरसैः कृतम् ।
साभया निम्बपत्राज्यं दंशपूतित्वनाशनम् ।
कर्णिकापातनं श्रेष्ठं विषव्रणविनाशनम् ॥

न्यग्रोधशृङ्गादिकं दंशपूतित्वनाशनादिगुणत्रययुक्तम् । इति पूतिदंशत्वे ॥

रक्ते स्रवत्यतिभृशं घृतं समरिचं पिबेत् ।
तण्डुलीयकमूलेन सितया वा समन्वितम् ॥

दंशादतिभृशं रक्तं स्रवति समरिचं घृतं पिबेत् । अथवा घृतं तण्डुलीयकस्य मूलेन समन्वितं पिबेत् । शर्करया वा ॥

दंशं प्रलेपयेच्चास्य दार्व्याः सुश्लक्ष्णपिष्टया ।
सितोपलाक्षौद्रकृतच्छागदुग्धानि नावनम् ॥

शमीकल्कं पिबेत्सूक्ष्मलक्ष्णमङ्गं लिम्पेद्विशालया।
नावने[१] हेमदुग्धा च तत शाम्यति शोणितम् ॥

अस्य चाऽस्रस्रुतौ सुश्लक्ष्णपिष्टया दार्व्या दंशनं लिम्पेत् । सितोपलेत्यादि सुबोधम् । विशाला गवाक्षी । हेमदुग्धा क्षीरविदारी । क्षीरकाकोली वा । इति रक्तस्रावे ॥

कृशस्यातिस्रुते रक्ते रूक्षैश्चात्यर्थसेवितैः ।
विषस्य च स्वभावेन मातरिश्वा प्रकुप्यति ॥
उन्मादाक्षेपकम्पनोऽपस्मारयस्ततः ।
तत्रेष्टं स्नेहनं बस्तिनस्यमधमनाञ्जनम् ॥

कृशस्य रक्तेऽतिस्रुते रूक्षसेवनाद्विषस्य भावाच्च वायुः प्रकुप्यति । ततो हेतोरुन्मादादयो भवन्ति । तत्र स्नेहनं बस्त्यादिकमिष्टम् ॥

नागदन्त्यभयाकुष्ठपिप्पलीद्विपञ्चफलम् ।
भल्लातकास्थिकटुका बिल्वप्रतिविषाग्निका ॥
सक्षीरैस्तैर्घृतं सिद्धं विषवातविकारजित् ।

नागदन्त्यादिभिः सक्षीरं सिद्धं घृतं विषहेतून् वातविकाराद्युन्मादादीन् जयति ॥

पिबेदेरण्डतैलं वा छागमांसरसान्वितम् ।
पैकध्य घृततैलं वा मेध्यमांसरसान्वितम् ॥

छागमांसरसेनान्वितमेरण्डतैलं वा अथवा मेध्यमांसरसान्वितं मिश्रीकृत्य घृततैलं वा पिबेत् ॥

कार्पासमूलं मरिचं हरिद्रे नलदं नलम् ।
पिप्पलीश्वर्जिरा कुष्ठं जलेनालोड्य पाययेत् ।
उन्मत्तं विषवातेन तथाऽपस्मारिणं नरम् ॥

कार्पासमूलादिकं सुबोधम् । विषवाते सति विषहेतुना वातेन उन्मत्तमुन्मादयुक्तम् ॥

वचाहिंस्रपञ्चकोपकुञ्चिकाहरिद्रापिप्पलीम् ।
देवदारुबलाबिल्वकृमिजित्तुण्डुकम् ।
लोध्रासुरूर्णतिविषा क्षीरं सर्पिश्च पाययेत् ।
निहन्ति पानाभ्यङ्गाभ्यामेतत् सर्वविषाणि तत् ॥

वचादिभिः सर्पिर्विपाचयेत् । तत्पानेनाभ्यङ्गेन च सर्वविषाणि निहन्ति । हंसपदी मधुस्रवा । दधित्थं कपित्थम् । तुण्डुकः श्योनाकः । आखुकर्णी द्रवन्ती । इति विषाविले ॥

प्रतिकुर्याद्यथास्वं च रोगेष्वेव परेषु च ।
दोषानुबन्धमालोच्य विषतन्त्राविरोधतः ॥

एवं परेषु चानुक्तेष्वपि विषहेतुषु रोगेषु यथास्वमात्मीयचिकित्सया प्रतिकुर्यात् । कथमित्याह । दोषाणां वातादीनामनुबन्धमालोच्य यथा च विषतन्त्रे तीक्ष्णादिरूपेण विरोधो न भवति ॥

दृश्यमन्दागदस्य विषशेषं निवर्तयेत् ।
अल्पमप्यवशिष्टं हि व्याधये मरणाय वा ॥

१ हेमकनक केसर वा ॥

अस्य चातुरस्य दृश्यशब्दागदैर्विषशेष शमयेत् । दृश्यागदा ये-दर्शनमात्रेण विषघ्ना. । शब्दागदा ये शब्देन । अल्पमित्यादि निरशे षनिवर्तनत्वे हेतु. ।.

धवाश्वकर्णतिनिशकरघ टकपीतनान् ।
पलाशाम्रातककुभपारिभद्रकतिलकान् ॥
कपित्थकुटजाङ्कोल मध्रहामलकी भुजान् ।
शमीश्लेष्मातकाश्मन्तगोजीयमठकण्टकान् ॥
चिरिबिल्वार्कखट्वङ्गसमहामधुशिग्रुकान् ।
गोपघोण्टाहिमारो च भस्मीकृत्याम्भसा गवाम्
क्षारकल्पेन विस्राव्य पचेत्क्षिप्त्वाऽवचूर्णितान्
पिप्पलीद्वयकाशाम्रसप्तपर्णैलवालुकान् ॥
वराङ्गचोचमाञ्जिष्ठाकुष्ठवञ्जुलकुण्डुकान् ।
बिल्वङ्गतिविषानन्तासर्षपातण्डुलीयकान् ॥
सुराह्वमरलक्षुक्षुगृहधूमकरञ्जकान् ।
नागदन्ती सुतश्रेणी निचुळ वरुण वचाम् ॥
वर्द्धमानमयो बिल्व क्षारवत्पाकमागतम् ।
तत् लोहकुम्भेनिहित कार्यं सन्निहित सदा ।
तेन दुन्दुभिमालिम्पेत् पताकास्तरणानि च ।
दर्शनश्रवणस्पर्शैर्निर्विष तानि कुर्वते ॥
पानात् क्षारागदश्चैष विष स्थावरजङ्गमम् ।
शूलगुल्मोदराजीर्णश्वासकासाश्मशर्करा ॥
शोफार्शोग्रहणीदोषानरुचिं च नियच्छति ।
अपि तक्षकतुल्याना सर्पाणा दर्पनाशन ॥

धवादिकमहिमारा त दग्ध्वा भस्मका- र्येम् । तत् गोमूत्रेण क्षारकल्पेन सूत्रोक्तविधा नेन परिस्राव्याच्छ पचेत् । स्वादिक चूर्णित क्षिपेत् । तत श्लक्ष्णैः पक पाकमागत लोहकुम्भे निहित कुर्यात् । तेनालिप्तानि दुन्दुभ्यादीनि शब्दादिभिर्निर्विष कुर्वते । दुन्दुभय आहळा, पताका वैजयन्त्य, करघाट मदन, कपीतन इक्षुसञ्ज, आम्रात कपिचूडम, पारिभद्रको निम्ब, तिल्वको लोध्र, कुटजो वत्सक, अङ्कोल तत्सञ्ज्ञ, मध्रहो न क- माल, भुजो भूर्ज, अश्मन्तको मालुकापर्ण, गोजी गोजिह्वा, यमठकण्टको युग्मकण्टक, चिरिबिल्व करञ्ज: खट्वङ्ग श्योनाक, गोप घोण्टा घोण्टा, अहिमार अरिमेद, एतानि स र्वाणि समूलशाखादीनि, कुशाम्र क्षुद्राम्र, व राङ्ग त्वक्, चोच नारिकेरम्, वञ्जुलो जल वेतस, कुण्डुक श्योनाक, अनन्ता यवासक, सुराह्व देवदारु, करञ्जको नक्तमाल, सुतश्रेणी द्रवन्ती, निचुळ वेतसम, वर्धमान एरण्ड, एव च ताम्रा क्षारागद पानात् स्थावर जङ्गम च विष गुल्मादींश्च नियच्छति नाशयति । एव तक्षकतुल्यानामपि सर्पाणा दर्प नाशयति ॥

श्रीवेष्टकमनोह्वाल सर्जरसराळकम् ।
कर्पाश नागपुष्पस्य पकुश्च शुद्धिविशकम् ॥
हरेणवश्चतुष्पाष्टि कुटन्नटचतुष्टयम् ।
शताह्वा षोडशैतानि पुष्ये सम्भृत्य पेषयेत् ॥
आश्लेषासु गवा मध्ये मन्त्रमन्त्राभिरक्षितम् ।
कुमार्या स्नातयातन्त्रमन्त्रोय विष्णुनिर्मितः ॥
माता मे विजयानाम जयो नाम पिता मम ।
अजग्यस्य च पुत्रोसौ जये च विजयामि च ॥
सुगन्धारुणोयमगदो नित्य देहविलेपनात् ।
अमङ्गकरणो युद्धे विवादे च ज.॥

अमुना लेपिताश्छत्रदुन्दुभिध्वजतोरणाः ।
दृष्टस्पृष्टश्रुता घ्नन्ति विषं स्थावरजङ्गमम् ।
भूतबालग्रहोन्मादान् गेहस्थोऽपि निवारयेत् ॥

श्रीवेष्टकादीनि पञ्च प्रत्येकं कर्षांशानि । नागपुष्पस्य प्रकुञ्च पलम् । त्रुटिर्विंशकं सूक्ष्मैलापलानि विंशतिः । हरेणुपलानि चतुःषष्टिः । कुटन्नटपलानि चत्वारि । शतपुष्पापलानि पञ्च । इत्येतत् पुष्ये सम्भृत्याश्लेषासु पेषयेत् । गवां मध्ये शक्तिभिः नैश्चाभिरक्षितं कृत्वा पेषयेत् स्नातया च कुमार्या कन्यया । तत्र च पेषणे मोऽनामेत्यादि विष्णुनिर्मितो मन्त्रः । अयमगदो नाम्ना सुगन्धः । एतेनागदेन नित्यं लिप्ताङ्गो युद्धाग्रे भज्यते अवाङ्मुखो न भवति । विवादे च जयं प्राप्नोति । अमुनागदेन छत्राद्यो लेपिता दर्शनादिभिः स्थावरजङ्गमं विषं घ्नन्ति । गेहस्थोऽप्ययमगदो भूतादीन् निवारयेत् । [जयो नाम पितामह इति च पाठः ॥]

सर्पौण्डरीकमरलं देवदारुकुटन्नटम् ।
जटाशताह्वातिविषा तिलपर्णी सुगन्धिका ॥
नीलीयवफलाभार्ङ्गीमधुयष्ट्येलवालुकम् ।
तोयतोयदकालीयतगरध्यामकत्वचः ॥
नखपद्मकपुन्नागपत्रकालानुसारिका ।
तालीसपत्रमरिचं जोङ्गकं चन्दनद्वयम् ॥
द्व्येलाद्विसेव्यद्विश्वेता द्विनिशा नलदद्वयम् ।
लाक्षाशीतशिवव्याघ्रफलिनीधान्यगैरिकम् ॥
शैलेयकशिलापुष्पग्रन्थिला चोरकाभया ।
अर्कस्थौणेयपृथ्वीका कटुका चन्द्रराजयः ॥
कलिङ्गकं सर्जरसः कुष्ठं लवणपञ्चकम् ।
श्रीपर्णिकाश्मरी शेलुः शिरसा सिन्दुवारजाः ॥
चम्पकाशोकसुरससुमनास्तिलकोद्भवाः ।
पाटलापास्तृणशूल्याश्च प्रसवाः कुमुदोत्पलम् ॥
तिनिशार्जुनशम्याकनवपुष्पं सपद्मकम् ।
पञ्चाशीतिरिदं चूर्णं समूत्रघृतमाक्षिकम् ॥
निधापयेत् गवां शृङ्गे मनुष्यः[१] पुनराहरेत् ।
भग्नस्कन्धं विवृत्ताक्षं मृत्योरभ्यन्तरं गतम् ॥
महासुगन्धो नाम्नायमतिवीर्योऽतितेजसा ।
नाशयत्यतिदुर्वारं विषाणि वासुकेरपि ।
तेनानुलिप्ताङ्गो भवेत् सर्वजनप्रियः ।
तेजस्विता च लभते राजकन्यापि मन्यगः ॥

सर्पौण्डरीकादिनिमौषधानां पञ्चाशीतेश्चूर्णं मूत्रादियुक्तं गवां शृङ्गे निधापयेत् । विषेण भग्नस्कन्धत्वादियुक्तं मनुष्यं पुनराहरेत् । अयं च नाम्ना महासुगन्धः । अतिवीर्यत्यादिनास्य प्रभावकीर्तनम् । सुबोधम् । कुटन्नटं परिपेलवम्, जटा मांसी, तिलपर्णी भद्रकं, सुगन्धिका गन्धनाकुली, यवफलो यश कुटजश्च, तोयं बालकम्, तोयदो मुस्तं, कालीयकं रक्तचन्दनम्, पत्रं गन्धपत्रम्, जोङ्गकमगरु, चन्दनद्वयं पीतं, सितं, च । एलाद्वयं सूक्ष्मैला, पत्रैला च । सेव्यद्वयमुशीरं, लामज्जकं च । श्वेताद्वयं वचा, गिरिकर्णिका च । नलदद्वयं मांसी, गन्धमांसी च । शीतशिवो मिश्रेयकं, शैलेयकं शिलापुष्पम्, ग्रन्थिलं ग्रन्थिपर्णम्, स्थौणेयकं शुकबर्हीयम्, पृथ्वीका हिङ्गुपत्री, चन्द्रराजी सोमराजी, का मरी काश्मर्यं, शेलु

१ [मनुष्यं येन जीवयेदिति पाठान्तरम् ॥]

श्लेष्मातक, प्रभवशब्दस्य श्रीपर्ण्यादिभि म-ध्यम । पुष्पशब्दस्य तिनिशादिभि । राज्ञा स-मूहो राजकम् ॥

शीतमेव च कुर्वीत विज्ञान विषरोगिणाम् ।
मुक्त्वा कीटविष तद्धि शीतेनातिप्रवर्द्धते ॥

एक कीटविष मुक्त्वा वर्जयित्वा सर्वेषु विषेषु विषरोगिणा सर्वमन्तर्बहि प्रयोज्य सा-धनमौषध शीतमेव कुर्यात् । हि यस्मात्तत् कीटविष शीतेनातिवर्द्धते ॥

शालय षष्टिका जीर्णा कोरदूषा प्रियङ्गव ।
मुद्गो हरेणुस्तुवरी पटोल वेत्रपल्लवा ॥
तण्डुलीयकजीवन्ती वार्ताक सुनिषण्डक ।
जाङ्गल दाडिम धात्री कपित्थ सैन्धवासिता ॥
अविदाह्यन्यच्च विज्ञायात्मस्वरूपत ।
तत्तद्दद्याद्विषार्तेभ्य. कार्या व्यञ्जनसस्कृति ।
कषायैर्विषहन्तॄणा घृतै कल्याणकादिभि ॥

विषार्तेभ्य शाल्यादिक दद्यात् । अ-न्यच्चाविदाहियदात्तत्स्वरूपाभ्यायाद्विज्ञाय द-द्यात् । तत्र व्यञ्जनाना सस्कृतिर्विषहराणामौ-षधाना कषायै कार्या । तथा घृतैश्च कल्या-णकादिभि । आदिग्रहणेन तत्स्वरूपाणामन्येषा ग्रहणम् ॥

दिव्यसारसकूपोत्थमन्यद्वा शृतशीतलम् ।
मध्वामलकयुक्त वा विषार्त्त सलिल पिबेत् ।
नदीतटाकज त्याज्य विशेषेण घनागमे ॥

विषार्तश्च तृषितो दिव्यादिक सलिल पिबेत । तेन च नदीतटाकज सलिल त्या-ज्यम । घनागमे वर्षासु विशेषेण त्याज्यम् ॥

शुक्लवक्षोदरायातै सुकृता सक्तवो यवै ।
तक्रेण सघृता पीता परम विषनाशना ॥

शुक्लवक्षाया श्वेतकम्बलाया उदरादाया तैर्यवै: सुकृता सक्त, सघृताश्तक्रेण पीता पर विषनाशना । गोवेश्म गजचर्म ॥

तिलमत्स्यकुलत्थक्षुत्कुद्रयायाममैथुनम् ।
वर्जयेद्विषमुक्तोपि दिवास्वप्न विशेषत ॥

तिलादिक सविषो वर्जयेत् । अचिर काल विषमुक्तोपि । दिवास्वप्न तु विशेषतो वर्जयेत् ॥

प्रशान्तदोष प्रकृतिस्थधातु
माहारकाम सममूत्रविट्कम् ।
प्रसन्नवर्णेन्द्रियचित्तचेष्ट
वैद्योऽवगच्छेदविष मनुष्यम् ॥

॥ इति सप्तचत्वारिंशोऽध्यायः ॥

प्रशान्तदोषत्वादियुक्त मनुष्यमविष इति वैद्योवगच्छेत् ॥

इतीन्दुविरचितायामष्टाङ्गसग्रहव्याख्याया-मुत्तरे सप्तचत्वारिंशोऽध्याय ॥

— o —

# अष्टचत्वारिंशोऽध्यायः ॥

## विषोपयोगीयम् ।

सर्वक्रियाभिरभिधितो जङ्गमविषस्य प्र-सङ्गेनान्येषामपि रोगविशेषाणामभिधानता स्था-वरविषैकसाध्यत्वात् स्थावरविषस्य जङ्गमाविषैक-साध्यत्वाच्च तदुपयोगमधिकृत्याध्यायआरभ्यते ॥

अथातो विषोपयोगीय नामाध्याय व्याख्यास्याम इति ह ॥

विषे प्रतिविषयोऽन्य मन्त्रतन्त्रैरसिध्यति ।
अतीते पञ्चमे वेगे सप्तमस्यानतिक्रमे ।
प्रभोर्निर्वेदमयतो नैववाख्यायकस्यचित् ॥

मन्त्रैर्विषहरैस्तन्त्रैरौषधादिभिरसिध्यति विषे प्रतिविष विजातीय योऽयम । स्थावरस्य जङ्गम जङ्गमस्य स्थावरमित्यर्थ । कस्यात् । पञ्चम वेगेऽतीते अतिक्रान्त सप्तमे अनतिक्रान्ते च सति । प्रभो राज्ञो निर्वेद उक्त्वा । यथा । अहमस्य विषेण मुमूर्षोस्तृणीकृतमूरिमन्त्रतन्त्रस्य जीवितनिराशबन्धुवर्गस्य अतिशोकमप्यनाशङ्क्यमानप्राणप्रत्यागमनस्य विषेण जीवित प्रार्थयिष्य इति । एवमयमस्यायुःक्षयेपि च राज्ञोऽयशसा न युज्यते । सिद्धे तु सुमहद्यश आसादयति । अथवा नैवकस्यचिदेवमाख्याय यथायमस्मै विष योक्ष्यति तद्यौषधमात्रव्याजे नापि सिद्धौ यश एव असिद्धौ त्वयशस पूर्वस्मादिव विषात् प्रसङ्गो नेति ॥

सिद्धमन्त्रधरः कृत्वा धरणीतन्त्रमादित ।
नहि मन्त्रसहायस्य विष यात्यविधेयताम् ॥

सिद्धमन्त्रधर- सत्रादितो धरणीतन्त्र प्रदेशरक्षा कृत्वा विष योजयेत् । धरणीयन्थहे तुर्नहि मन्त्रसहायस्य भिषजो विषमविधेयता यातीति ॥

श्लेष्मतुल्यगुण प्राय स्थिरमूर्ध्वगम विषम् ।
प्राय पित्तगुणैर्युक्तमधोगामि च जङ्गमम् ॥

स्थिर स्थावर विष गुणै श्लेष्मणस्तुल्यमूर्ध्वगम च । जङ्गम विष पित्तेन गुणैस्तुल्यमधोगामि च । प्रायोग्रहण विषयव्यभिचारसूचनार्थम् ॥

गुणैरितिविपर्यस्तैर्निहतस्ते परस्परम् ।
युञ्ज्यान्मूलविषतस्मादष्टानां पानलेपयो ॥

इत्यनेन प्रकारेण स्थावरजङ्गमे विषे यतो गुणैर्विपर्यस्तै परस्पर विपरीते अतस्ते विष परस्पर निहत स्थावरेण जङ्गम हन्यते जङ्गमेन च स्थावरमिति । तस्माद्दंष्ट्रानां पाने लेपे च मूलविष युञ्ज्यात् ॥

विषपीत च कुशलो दशयेत् पवनाशिभि ।
न विषप्रतिमकिञ्चिन्निर्विषीकरण विषे ॥

कुशलश्च वैद्य पवनाशिभि सर्पैर्विषपीत दशयेत् । विषेऽन्यतरे देहस्थिते तद्विपरीत विषप्रतिम न किञ्चिदन्यन्निर्विषीकरण विद्यते ॥

चतुर्भि षड्भिरष्टाभिर्हीनमध्योत्तमां यवै ।
मात्रा विषस्य मौलस्य प्रयुञ्जीत यथायथम् ॥

यदा च जङ्गमे विषे मौल विष प्रयुज्यते तदा यथायथ जङ्गमापेक्षया हीनमध्याधिका त्रिविधा मात्रा प्रयुञ्जीत चतुर्भिर्यवैर्हीनामात्रा षड्भिर्मध्यमा अष्टाभिरुत्तमा इति सर्पदष्टे

दष्टस्य द्वौ यवौ कीटैस्तिलमात्र तु वृश्चिकै ।
नैवत्वसृकस्थे—

कीटैर्दष्टे तु द्वौ यवौ मूलविषस्य युञ्ज्यात् । वृश्चिकैर्दष्टे तिलमात्रम् । असृक्स्थिते विषे नैव विषान्तर युञ्ज्यात् ॥

—पानेतु लूतादष्टस्य नेष्यते ॥
प्रच्छायलेपयेद्दश तस्य ज्ञात्वा सुनिश्चितम् ।
सविषे युक्तममृत विषमेवाऽविषे विषम् ॥
अवलेचातिवलवन्नापन्न च प्रयोगत' ।

लूतादष्टस्य पान एव विष नेष्यते अपि तु सुनिश्चित लूतादश ज्ञात्वा प्रच्छाय लेपयेत्। सुनिश्चितत्वज्ञानाय हेतु सविषे युक्त विषममृत भवति निर्विषे तु विष विषमेवेति । तस्मा- यदि लूतादश' सविषस्ततो विषलेप, । अन्य हेतुकाश्चेत् स्फोटादयो न विषलेपः कार्य । य थायथ मात्रामिति यदुक्त तदेवोपवृह्यते । अ वले च विषे अतिनल विष विषमेव न त्वौषधम् । प्रयोगव्यत्यस्तुव्यापन्न विष विषमेव नत्वमृतम् ॥

सविषा विषशङ्कायामगदानुपयोजयेत् ।
अविरुद्धान् प्रयुक्तो हि निर्विषस्यागदोगद, ॥
तद्वचसविषस्यापि क्रियाकालातिपातत ।
जानीयाद्विषसद्भाव भिषक्तस्मात् प्रयत्नत ॥

यत्र तु सविषोवास्मात्विषो वेत्याशङ्का त- त्राविरुद्धानगदानुपयोजयेत न तु विषम् । य- तो *निश्चित निर्विषस्य ऽगदो गदो व्याधि । त* द्वत् सविषस्यापिक्रियाकालातिपाते प्रयुक्त अ गदो व्याधि । तस्मात् भावाभावाभ्या मा- त्रादिभिश्च यत्नतो विषसद्भाव जानीयात् ॥

साक्तुकमुस्तकश्शृङ्गी वालक सर्पपाह्वयम् ।
वत्सनाभ च कर्मण्य विष स्निग्ध घन गुरु ।
नजात्वन्यत् प्रयोक्तव्य कालकूट विशेषत ॥

साक्तुकादिक विष कर्मण्य कर्मणि सा धु स्निग्धादिगुण च एभ्योन्यन्न जातुप्रयोक्तव्यम्। कालकूट विशेषतो न प्रयोक्तव्यम ॥

विषेऽत्यन्वाग्निनेतीक्ष्णे पेय घृतमनन्तरम् ।
समार्ङ्गीदधिधूमोत्थशारिवातण्डुलीयकम् ॥
अगारधूममञ्जिष्ठायष्ट्याह्वैर्वासमन्वितम् ।
लिह्याद्वा मधुसर्पिभ्या चूर्णितामर्जुनत्वचम् ॥

तीक्ष्णेविषेऽत्यचारित अनन्तरमन्यथवा- नेन घृत पेयम् । किम्भूत घृतमित्याह । स भार्ङ्यादिकमथवाऽगारधूमादिभि समन्वितम- *थवा अर्जुनत्वच चूर्णिता मधुसर्पिभ्या लिह्यात ॥*

क्षीरक्षौद्रघृतैर्युक्त पीत हन्ति विषविषम् ।
ससिन्दुवारतगर मृतसञ्जीवन विषम् ॥

शिरीषकुसुमरक्त विषमाशुविषापहम् ॥
देवदारुनतमांसी द्राक्षिळीवाकुचीविषम् ।
कुष्ठ च पानलेपाभ्या समस्तविषनाशनम् ॥
मनश्शिलाञ्जनालैला सिन्दुवारामराह्वयम् ।
सरक्ताकुकुमविष ध्यान निरस्तसयोधनम् ॥

क्षीरेत्यादिना विषप्रयोग । विषस्य- भावा तूक्ता । विष क्षीरादिभिर्युक्त पीत विष हन्ति । सिन्दुवारतगराभ्या युक्त पीत विष मृतसञ्जीवन । । शिरीषपुष्पतगराभ्या युक्त पीत विषमाशुविषापह भवति । देवदार्व्या- दिभिर्युक्त पीत विष समस्तविषाणा नाशनम् । मनश्शिलादिक नासाध्मान निरस्तसज्ञाना बोध- नम् । अल हरितालम् । अमराह्वय देवदारु । रक्ता माञ्जिष्ठा ॥

दाहे विषोद्भवे लेपः सक्तुक्षीरघृतैर्हितः ॥

विषोद्भवे दाहे सर्वाङ्गसन्तापे सक्त्वा- दिभिर्लेपो हितः । सक्तवो यवानाम् ।

यस्तु सर्पोपितो भोगी धूमरक्षाद्विमुञ्चति ।
दण्डाग्रेणाहितः रुष्टो नरं तेन दंशयेत् ॥
अशक्यमगदैरन्यैर्विषपीतं चिकित्सकः ।
पाययेन्मांसचूर्णं तं ज्ञात्वा विषबलाबलम् ॥

शोधयित्वा सर्पमुल्मुकस्पर्शधूमं च कृत्वा तेन दण्डहतं मांसं ग्राहयेत् । तस्य मांसस्य चूर्णं पाययेत् विषपीतमन्यैरगदैरशक्यम् ॥

अन्येष्वपि च रोगेषु शेषोपायपरिक्षये ।
विषं युञ्जीत नित्यं च रसायनगवेषिणः ।

न केवलं विषे एव विषं योज्यं यावच्चिकित्सा- च्छेषाणामुपायानां परिक्षये असिद्धावन्येष्वपि रोगेषु विषं योज्यम् । यस्तु रसायनगवेषी रसायनमभिलषति तस्य नित्यं विषं योज्यम् ॥

घृतोपस्कृतदेहस्य विशुद्धस्याहिताशिनः ।
सात्त्विकस्योदिते भानौ योज्यं शीतवसन्तयोः
ग्रीष्मेऽप्यात्ययिके व्याधौ—

घृतोपस्कृतादिदेहस्य शीतवसन्तयोर्भानावुदिते सूर्योदये प्रातर्विषं योज्यम् । आत्ययिके तु व्याधौ ग्रीष्मेऽपि योज्यम् ॥

—न च वर्षासु दुर्दिने ॥
न क्रोधनेन पित्तार्ते न क्लीबे राजनि द्विजे ।
क्षुत्तृष्णाश्रमघर्मार्ते व्याध्यन्तरनिपीडिते ।
गर्भिणीबालवृद्धेषु न रूक्षेषु न मर्मसु ॥

वर्षासु दुर्दिने च विषं न योज्यम् । क्रोधनादिके च पुरुषे न योज्यम् । तथा क्षुधादिभिर्निपीडिते । व्याध्यन्तरं विषविषयाद् यो व्याधिः । सुबोधम् ॥

अभ्यस्तेऽपि विषे यत्नादजीर्णे पानं विवर्जयेत् ।
कटुरूक्षानिलरणदिवास्वप्नातपानलान् ॥
रूक्षमन्नं विशेषेण भयं नाऽजीर्णिनः सदा ।

विषे अभ्यस्ते अपि सात्म्यं भूतेऽपि सर्वं पीयाम यत्नाद्विवर्जयेत् । विशेषेण तु रूक्षमन्नम् । किं तदित्याह । कटुरूक्षेत्यादि । अजीर्णतो विशेषेण भयं गृहीतव्यम् ॥

हरिभ्रमं वर्णनाशं पार्श्वानिलजानगदान् ।
विषं रूक्षाशिनः कुर्यान्मृत्युमेव त्वजीर्णिनः ॥

रूक्षाशिनो नरस्य विषं हरिविभ्रमादीन् कुर्यात् अजीर्णात्तु मृत्युमेव ॥

अलं गोमूत्रसंयुक्तमातपे शोषयेत् त्र्यहम् ।
विषं बृंहणमेतद्धि विषस्यादौ प्रशस्यते ॥
तत् पिबेन्मस्तुना वातज्वरे क्षीरेण पैत्तिके ।
युक्तमूत्रेण कफजे सर्वजे त्रिफलाम्भसा ॥

हरितालस्य भावनाप्रयोगश्च सुबोधः । तदिति भावितं हरितालम् । सर्वजे सन्निपातजे ॥

लोध्रचन्दनपद्मकशर्कराघृतमाक्षिकैः ।
क्षीरेण च विषयुक्तं जीर्णज्वरहरं परम् ॥
निकुम्भकुम्भत्रिफला सर्पिर्मधुविषैः कृतः ।
निहन्ति मोदको जीर्णज्वरमेहोदरामयान् ।
शिखिकर्किरसोपेतं विषमज्वराजिद्विषम् ॥

लोध्रादिभिर्युक्तं विषं परं जीर्णज्वरहरम्। निकुम्भादिभिः कृतो मोदको गुडको जीर्णज्वरादिकं हन्ति । शिखिककर्किसंयुक्तं विषं विषमज्वरं जयति । शिखी चित्रकः । कर्की कर्कटशृङ्गी ॥

विषं यष्ट्याह्वयं रास्ना सेव्यमुत्पलकन्दकम् ।
तण्डुलोदकपीतानि रक्तपित्तस्य भेषजम् ॥

विषादिकं तण्डुलोदकेन पीतं रक्तपित्तस्य भेषजं भवति ।

विषं रमाञ्जनभार्ङ्गी शुण्ठिकाळी महासहा ।
सवेदने सपाके च व्रणे दुष्टे प्रलेपनम् ॥

विषादिकं वेदनादियुक्ते दुष्टव्रणे लेपनं योग्यम् ॥

सिताविषक्षीरतरुमवाळामधुनाद्रुता ।
श्वासहिध्मापहा लीढाऽच्छर्दिघ्नयस्तुविषान्विता ।
क्षौद्रोशीरमधुक्षाररजनीकुष्ठचत्वचः ॥

सितादिकं मधुना लीढं श्वासहिध्माहरम्। विषान्वितं क्षौद्रादिभिः लीढं छर्दिघ्नम् । मधु यष्टीमधु ॥

विजयापिप्पलीमूलपिप्पलीद्वयचित्रकैः ।
पुष्कराह्वपटीद्राक्षायवानीक्षारदीप्यकैः ॥
सितायष्टीद्विबृहतीसैन्धवैः पालिकैः पचेत् ।
सविषार्द्धपले प्रस्थं घृतात्तज्जीर्णभुक्पिबेत् ॥
दुर्नामहृद्गुल्मार्मतिमिराक्रिमिपाण्डुताः ।
गळग्रहग्रहोन्मादकुष्ठानि च नियच्छति ॥

विजयादिभिः पालिकैर्विषार्द्धपलयुक्तैर्घृतप्रस्थं पचेत् । तद्घृतं जीर्णभुक्पिबेत् । (जीर्णे जीर्णेऽशनम् ।) तद्दुर्नामादीनि नियच्छति नाशयति ॥

कृच्छ्रघ्नाविषपञ्चाग्नि दन्ती द्राक्षा निशा विषाः
शिलाजतुविषमूत्रमुदावर्ताश्मरीहरम् ॥

विषादीन्यतिविषान्तानि मूत्रकृच्छ्रघ्नानि। मूत्रशिलाजतुभ्यां युक्तं विषमुदावर्ताश्मरीहरम् ॥

गोमूत्रक्षारसिन्धूत्थं विषं पाषाणभेदकम् ।
वज्रवद्दारयत्येतदेकत्र पीतमश्मरीम् ॥

गोमूत्रादिकमेकत्र पीतं वज्रवदश्मरीं दारयति । [गोमूत्रक्षीरसिन्धूत्थमिति च पाठः ।]

समूलापिप्पलीमूत्रं विषं शूलहरं तथा ।
विषद्रवन्तीमधुकं द्राक्षारास्नापटी कणाः ।

समूला मूलयुक्ता पिप्पली । पिप्पलीमूलं मूत्रं विषं चेति शूलहरम् । तथैव विषद्रवन्त्यादिकम् ॥

एरण्डतैलत्रिफला गोमूत्रं चित्रको विषम् ।
सर्पिषासहितं पीतं वाताण्डत्वमपोहति ॥

एरण्डतैलादिकं सर्पिषासहितं पीतं वाताण्डत्वं वातवृद्धिमपोहति नाशयति ॥

त्रिफलास्वर्जिकाक्षारो विषं गुल्मप्रभेदनम् ।
विषवेल्लमिसिक्षीरं गुल्मप्लीहानिबर्हणम् ॥

त्रिफलादिकं गुल्मस्य प्रभेदनं विदारणं भवति । विषादिकं गुल्मप्लीहोर्निबर्हणं नाशनम्। प्लीहा प्लीहोदरम् ॥

प्लीहोदरघ्नं पयसा शताह्वा क्रिमिजिद्विषम् ॥

पयसा क्षीरेणयुक्तं शताह्वादिकं प्लीहोदरघ्नं भवति । क्रिमिजिद्विडङ्गम् ॥

वायसीमूलनिष्काथं पीतं

लाक्षादिभिर्मरिचान्तैस्तैले कटुतैले वा भिन्नस्याभ्यञ्जन पचेत् । एतच्छेद्रम् सवर्णीकरणम् । सुबोधम् ॥

वीराद्याद्दलिकी दन्ती विषपाषाणभेदकैः ।
प्रयोज्यो मूढगर्भाणा प्रलेपो गर्भमोचनः ॥

वीरादिभि प्रलेपो मूढगर्भाणा गर्भपातन प्रयोज्य ॥

स्वरस वीजपूरस्य वचा ब्राह्मीरस घृतम् ।
वन्ध्या पिबन्ती सविष सुपुत्रे परिवार्यते ॥

वीजपूरस्वरसादिक सविष विषसहित पिबन्ती वन्ध्या स्त्री सुपुत्रे परिवार्यते ॥

नष्टशुक्रः पयोद्राक्षा कपिकच्छु वचा विषम् ॥

यस्तु नष्टशुक्र सद्राक्षादियुक्त पय उपयुञ्जीतेत्यर्थ ॥

विषमर्दि सिताक्षौद्र तिमिरापहमञ्जनम् ।
विषचैकमजाक्षीरफलिकतं घृतधूपितम् ॥

विषादिक तिमिरापहमञ्जनम् । एक केवल विषमजाक्षीरफलिकत घृतधूपित चशब्दादञ्जनम् ॥

विष धात्रीफलरसैरसकृत् परिभावितम् ।
अञ्जन शङ्खसहित प्रगाढतिमिरमणुत् ।

आमलकरसेनासकृदनेकवार भावित विष शङ्खेनयुक्तमञ्जन प्रगाढ घन तिमिर प्रणुदति ॥

विषमिन्द्रायुधस्तन्ये घृष्ट काचजिदञ्जनम् ।
वीजपूरकरसे घृष्ट विष तद्वत्सितायुतम् ।
विष मागधिकाद्यै च निशेकाचघ्नमञ्जनम् ॥

इन्द्रायुधनामक विष स्तन्ये घृष्टमञ्जन काचजित् भवति । वीजपूररसे घृष्ट विष मशर्कर तद्वदिति काचजिदञ्जनम् । तथैव मागधिकादिभिर्युक्त विषमञ्जनम् ॥

शुक्रार्मजिद्विषकृष्णायुक्त गोमूत्रभावितम् ॥

पिप्पलीयुक्त विष गोमूत्रभावित शुक्रार्जर्मजिदञ्जनम् ॥

समुद्रफेनस्फटिककुरुविन्दसुधाञ्जनम् ।
कूर्मपृष्ठ च तुल्यानि तेभ्योऽर्धांशा मनःशिला ॥
अर्द्धहीनानि मरिचसैन्धवायोरजांसि च ।
अतो यथोत्तर दद्यादयसा च सम विषम् ।
रसक्रियेय मधुना शुक्रपिल्लार्मकाचहृत् ॥

समुद्रफेनादीनि कूर्मपृष्ठान्तानि परस्परतुल्यानि । तेभ्य एकीकृतेभ्योऽर्धांशा मनःशिला । मरिचादीनि यथोत्तरमर्द्धहीनानि । तेन मनःशिलाया अर्द्धेन हीन मरिचम् । तस्यार्द्धेन हीन सैन्धवम् । तस्यार्द्धेनायोरज । अयोरजसा सम विषम् । मधुना माक्षिकेण कृतय रसक्रिया शुक्रादिहृत् । कुरुविन्दो मुस्त ॥

अभीक्ष्णशीततोयेन सिञ्चेन्नेत्रे विषाञ्जिते ॥

विषप्रयोगादञ्जिते नेत्रे शीततोयेनाभीक्ष्ण सिञ्चेत् ॥

रसोनकन्दमरिच त्रिपसर्षपसैन्धवैः ।
पिल्लोक्षिलिखित पूर्व सुरसारसपेषितैः ॥
पूरयेत् सर्पिषाचानु सर्पिरेव च पाययेत् ।

पिल्लाक्षि लिखित्वा लशुनकन्दादिभि सुरसारसपेषितैः पूर्वं पूरयेत् । पश्चात् सर्पिषा पूरयेत् । सर्पिरेव पाययेत् । सुरसा मूर्वा ॥

मधूकसारमधुकत्रिफलाक्षीरजैर्घृतम् ।
पक्वं सन्तर्पणं श्रेष्ठं शाखान्यत्वे चिरोत्थिते ॥

मधूकसारादिभिर्घृतं पक्वं चिरोत्थिते शाखान्यत्वे श्रेष्ठं सन्तर्पणम् ॥

नस्यं शिरोरुक्शमनं प्रत्यक्पुष्पी सिता विषम् ।
अथवा घृतषड्भागा शर्करा विषसंयुता ॥

प्रत्यक्पुष्प्यादिकं नस्यं शिरोरुजाशमनम् । अथवा घृतादिकं विषसंयुतं नस्यं शिरोरुक्शमनम् । प्रत्यक्पुष्पी अपामार्गः ॥

शुण्ठी पथ्या विषं पाठा द्रवन्ती पूतिनासजित् ॥

शुण्ठ्यादिकं नस्यं पूतिनासजित् ॥

कटुतैलं विषं नस्यं पलितारुंषिकापहम् ॥

कटुतैलादि सुबोधम् ॥

स्वर्जिकाक्षारसिन्धूत्थशुक्तयुक्तं विषं परम् ।
कर्णयोः पूरणं तीव्रकर्णशूलनिबर्हणम् ॥

स्वर्जिकाक्षारादिकं कर्णपूरणं परं तीव्रकर्णशूलनिबर्हणम् ॥

प्रपौण्डरीकमञ्जिष्ठाविषसिन्धुमधुद्रवैः ।
निहन्ति साधितं तैलं गण्डूषेण मुखामयान् ॥

प्रपौण्डरीकादिभिः साधितं तैलं गण्डूषेण मुखामयान् निहन्ति । सिन्धुमधुद्रवः सैन्धवम् ॥

देवदारुविषसर्पिर्गोमूत्रं कण्टकारिका ।
वाचः स्खलनतां हन्ति पीतमित्याह काश्यपः ॥

देवदार्वादिकं पीतं वाचः स्खलनतां स्खलनं हन्तीति काश्यप आह ॥

विषप्रयोगस्य प्रयोजनमुच्यते ॥

शत्रुप्रयुक्ताद्विषतो गराद्वा
लूताभुजङ्गाखुगणाज्जगया ।
अकालमृत्योर्ग्रहपाप्मनो वा
विषाशिनो नास्ति भयं नरस्य ॥

॥ इत्युत्तरे अष्टचत्वारिंशोऽध्यायः ॥

विषाशिनो नरस्य शत्रुणा प्रयुक्ताद्विषात् गराच्च लूतादिभ्यश्च भयं नास्तीति ॥

इतीन्दुविरचितायामष्टाङ्गसङ्ग्रहव्याख्यायाम्-
उत्तरे अष्टचत्वारिंशोऽध्यायः ॥

॥ इति विषतन्त्राख्यं षष्ठमङ्गं सम्पूर्णम् ॥



# एकोनपञ्चाशोऽध्यायः ॥

## रसायनविधिः ॥

इति निजागन्तूनां रोगाणां निराकाङ्क्षं चिकित्सितमुक्त्वा स्वरूपातिशयप्राप्त्यर्थं रसायनानामवसरो तत्प्रतिपादनार्थमध्याय आरभ्यते ॥

अथातो रसायनविधिं नामाध्यायं व्याख्यास्यामः । इति ह ॥

दीर्घमायुः स्मृतिं मेधामारोग्यं तरुणं वयः ।
प्रभावर्णस्वरौदार्यं देहेन्द्रियबलोदयम् ॥
वाक्सिद्धिं वृषतां कान्तिमवाप्नोति रसायनात् ।
लाभोपायो हि शस्तानां रसादीनां रसायनम् ॥

दीर्घमायुरित्यादिना रसायनानां प्रभाव नमुच्यते । यस्मात्तुम्नाना प्रशस्ताना रसादी नामात्मनो यो लाभोपायस्तद्रसायनमिति नि र्वचनम् ॥

पूर्वे वयसि मध्ये वा तत्प्रयोज्य जितात्मन ।
स्निग्धस्य सुतरक्तस्य विशुद्धस्य च सर्वशः ॥

एतच रसायनं भिषजा जितात्मन. जि तेन्द्रियस्य पुन पूर्वे वयसि मध्ये वा स्निग्धस्य सुतरक्तस्य सर्वेण च प्रकारेण विशुद्धस्य निर्हृत दोषस्य प्रयोज्यम् ॥

अविशुद्धे शरीरे हि युक्तो रासायनो विधि. ।
न भाति मलसंसृष्टे वस्त्रे राग इवार्पित ॥

अविशुद्ध इति । यस्मादविशुद्धे शरीरे युक्त प्रयोजितो रासायनो विधिर्मलसंसृष्टे वस्त्रे अर्पितो राग इव न भाति ॥

युक्त संस्कारहीनस्य सम्यगप्यप्रमादिन. ।
यथैव पौरुष तद्वन्नसिध्यति रसायनम् ॥

स्नेहादिसंस्कारहीनस्य सम्यगपिप्रयुक्तम प्रमादिनोपि प्रयुक्त रसायन न सिध्यति । यथा संस्कारहीनस्य प्रयुक्तमप्रमादिनोपि पौरुष शौर्यं न सिध्यति ॥

सर्वे च दोषा भवन्ति ग्राम्यादाहारा दम्ललवणकटुकक्षारविरुद्धासात्म्यरूक्षाभि – ष्यन्दिक्लिन्नगुरुपूतिपर्युषितनवधान्यशुष्कशा – काऽमभासतिलकुलत्थदधिशुक्तकाञ्जिकपिष्टा – न्नविरूढकनिषेविणा दिवास्वप्नस्त्रीमद्यनित्याना विषमातिमात्रव्यायामायाम सङ्क्षोभि क्रोधलोभभयशोकाद्या सहतुल्याना पापकर्म– णामसमञ्जसादाराहारानिद्रानिरतानाम्

न केवल चैतदेव यावत् ग्राम्यादाहाराद् आहारात् । सर्वे च दोषा भवन्ति । के षामित्याह । अम्ललवणप्रभृतिनिषेविणामित्या दीनाम् । विरुद्धमात्म्य सूत्रस्थान उक्ते । वि रूढकमङ्कुरित धान्य । विषमेणानेकरूपेण व्यायामेन सङ्क्षोभित वपुर्येषा न तु कालो पाम् । असमञ्जसमनुचितरूप यदाहारादिक तस्मिन रत ये तेषाम् ॥

अतो निमित्त हाविशुद्ध नजायते र सो विम्लाते रक्त शिथिलीभवन्ति मांसनि विष्यन्दते मेदो दूष्यन्ते दोषा विमुच्यन्ते स न्धयो न सन्धीयन्तेऽस्थिषु मज्जानो नाप्यायते शुक्र नौजो न बल न वीर्यम् ।

अतो निमित्तमस्मात् कारणादविशुद्धो रस सञ्जायते । विम्लात इत्यादि व्याख्या सम्म ॥

तत. स एवंभूतो ग्लायति सीदति निद्रा तन्द्रालस्यसमन्वित म्रियते निर्विद्यते निरु त्साहोऽसमर्थ शारीरमानसाना विशिष्टाना चेष्टाना भ्रष्टच्छायो नष्टस्मृतिरल्पबुद्धिरसम्मा धमानोऽभिलषितार्थोऽसमर्थमानिशयानिश नि श्वसन्नाशयस्थानभूतो रोगाणां नोपायमपि सर्व मायुरवाप्नोति ॥

ततोनन्तर सदुष्टाहारादिकएवम्भूत इति दुष्टरसादिधातु ग्लायति हर्षक्षयमान सीदति गात्राणि विनामयति । ०४।९ ।

तथाविध उपालमप्य-यत्र सम्भितमप्यायुर्नवा प्नोति । किमुतार्धिक प्राप्स्यति ॥

तस्मात् बुद्धिमानपास्य यथोक्तानाहारादिदोषान निर्वाप्य च पूर्वोपचितान रसायन विधिविहितमुपसेवेत ॥

तस्मादिति । यत एव तस्मात् बुद्धिमान नरो यथोक्तान ग्राम्याहारादिदोषानपास्य त्यक्त्वा पूर्वोपचितान पूर्वसम्भितान् दोषान स्नहादिना निर्वाप्य निस्सार्य च विधिविहित रसायन मुपसेवेत ।

तत्तु द्विविध कुटीप्रावेशिक वातातपिक च । तत्र वीर्यप्रभावप्रयोगपरिहारगुरुत्वात् कुटीप्रावेशिक महाफलतरम् ॥

तदिति रसायननिषेवण द्विविध द्विप्रकारम् । कथम् । कुटीप्रावेशिक वातातपिकचेति । तत्र तयोर्मध्ये कुटीप्रावेशिक वीर्यादिगुरुत्वान्म हाफलतर भवति ॥

तस्य विधि क्षेमसुभिक्षधार्मिकश्रद्धानजननृपवैद्यरहिते सुलभमहौषधिघृतक्षीरपथ्यभोजनोपकरणे ग्रामे नगरे वा पूर्वोत्तरस्या दिशि प्रागुदक्प्रवणे सुविभक्तविहारोद्देशे देशे दृढघनसुमृष्टभित्तिमुत्सेधविस्तारसम्पन्नामूक्ष्मलोचना त्रिगर्भामृतुसुखां निर्वातां प्रवातैकदेशा प्राग्द्वारामुदग्द्वारा वा धर्मीविलक्षीग्निद्विपरिगृहीता मनिष्टेन्द्रियार्थवातातपरजोधूमस्वेदक्लेदशमशकसरीसृपव्यालबालस्त्र्यादीसान्तावसायिनामगम्या सन्निहितसद्वैद्यपरिचारकोपकरणां कुटीं कारयेत् ॥

तस्येति कुटीप्रवेशस्य विधिर्भवति । प्रथममेव क्षेमसुभिक्षादिगुणे ग्रामे नगरे वा दृढमित्यादिगुणा कुटीं कारयेत् । धार्मिका, श्रद्धाना जना नृपादयश्च यस्मिन । तथा सुलभा महौषध्यादयो यत्र । प्राच्या मुदीच्यां वा दिशि । प्रागुदक्प्रवणे अभिमुखे (प्रवण क्रमनिम्न ) सुविभक्तो विहारोद्देश परिसर्या प्रदेशो यत्र देशे उत्सेध औन्नत्यम । सूक्ष्माणि लोचनानि गवाक्षाणि यस्याम । धर्म्यादिद्विश्च परिगृहीता आश्रिताम । अनिष्टेन्द्रियार्थादीनामगम्याम् । अनिष्टा इन्द्रियार्थो द्विष्टा शब्दादयो विषया । सरीसृपाः सर्पादय । व्याला सिंहव्याघ्रादय । अन्तावसायिनश्चण्डालादय । तथा सन्निहित सद्वैद्यादिक यस्याम ॥

तस्यां रसायनार्थी शरदिमन्ते वा शुक्लपक्षे प्रशस्तेऽहनि पूजयित्वा यथार्ह देवगुरुविप्रान् प्रणम्य ब्रह्मदक्षाश्विप्रभृतीन् परिसृज्य सुवर्णघृतमधुसिद्धार्थकाग्नियज्ञगुरोचना प्रदक्षिणीकृत्य गोब्राह्मणाननुप्रविशेत् ॥

तस्यामिति कुट्या रसायनार्थी पुरुष प्रशस्तेहनि नक्षत्रे यथार्ह देवपूजादिक कृत्वानुप्रविशेत ॥

तत्र सशोधनै शुद्ध सुखीजातबल पुन' ।
ब्रह्मचारीधृतियुत श्रद्दधानो जितेन्द्रिय ॥
दानशीलदयासत्यव्रतधर्मपरायण ।
देवतानुस्मृतीयुक्तोयुक्तस्वप्नप्रजागर ।
प्रियौषध पेशलवागारभेत रसायनम् ॥

तत्र शुद्ध्या संशोधनैर्वमनादिभि शुद्ध सुविरेकादियुक्तश्च रसायनमारभेत । पुनरिति शोधने कृते । धृतिर्धैर्यम् । श्रद्दधान श्रद्धावान् । दानादिपरायणो दानादिप्रवण । युक्त प्राप्त स्वप्नादि च यस्य प्रियौषध नरौषधे द्वेष्य स्वभाव । पेशलवाक प्रियवद ॥

हरीतकीमामलकं सैन्धवनागर वचाम् ।
हरिद्रां पिप्पलीं वेल्लं गुड चोष्णाम्बुना पिबेत् ।
स्निग्धस्विन्नोनर पूर्वं तेन साधुविरिच्यते ॥

पूर्वं स्निग्ध पश्चात् स्विन्नश्च नरो हरीतक्यादिनोष्णाम्बुपीतेन साधुविरिच्यते ॥

ततः शुद्धशरीराय कृतसंसर्जनायच ।
त्रिरात्र पञ्चरात्र वा सप्ताह वा घृतान्वितम् ।
दद्यात्यावकमाशुद्धे पुराणशकृतोथवा ॥

ततोनन्तर शुद्धशरीराय विहितपेयादिक्रमाय च त्रिरात्र वा पञ्चरात्र वा सप्ताह वा यावक यवान्न घृतान्वित दद्यात् । अथवा पुराणशकृत शुद्धिर्यावत्तावन्नान्न दद्यात् ॥

इत्थ संस्कृतकोष्ठस्य रसायनमुपाहरेत् ।
यस्ययद्यौगिकंपश्येत्सर्वमालोच्यसात्म्यवित् ॥

इत्थमनेनप्रकारेण संस्कृतकोष्ठस्य रसायनमुपाहरेत् ढौकयेत् । किमित्याह । सात्म्यविद्वैद्य सर्व दोषान्किमालोच्य यस्य पुंसो यद्रसायन यौगिक पश्येत ॥

हरणात् सर्वरोगाणा यासावुक्ता हरीतकी ।
पथ्यत्वात् सर्वधातूनां पथ्या शिवतया शिवा ॥

यस्माद्विजयतेव्याधीन् समग्रानविजया ततः ।
अभय सर्वरोगेभ्यो भवत्यायुश्चशाश्वतम् ।
यत शीलयतामेना तेनेयमभयास्मृता ॥

तत्र रसायनेषु प्राधान्याद्धरीतकीना स्वरूपप्रदर्शनार्थं नामपञ्चकस्य निर्वचन क्रियते । तत्रव्याख्यातसमम् शिवतया श्रेयस्त्वेन शिवा सर्वरोगेभ्य इत्यपादाने पञ्चमी । एनामिमभया शीलयता पुसा यत सर्वरोगेभ्य अभयामायुश्च शाश्वत स्थिर भवत्यत, साभयेति स्मृता । (पथ्यत्वात् सर्वभूताना पथ्येति च पाठ ॥

नरा वृत्ता घना स्निग्धा गुर्वीमज्जतिचाम्बुपा ।
बालस्य सा प्रयोक्तव्या नवनीतसमन्विता ॥
वाते ससर्पिर्लवणा पित्ते सगुडशर्करा ।
कफे सपिप्पली क्षौद्रा सर्वदा सा प्रशस्यते ॥

या नवत्वादिगुणा सा श्रेष्ठपथ्याहार्यम् । सा च बालस्य यदा प्रयोक्तव्या तदा नवनीतयुक्ता । वातादिषु व्याख्यातसमम् । सा च सर्वदा पातु प्रस्यते ॥

अथ हरीतकीना हिमवच्छैलसम्भवाना कालजातानामा पूर्णरसवीर्याणा मनामयाना द्विशस्त्रिशो वा शकलिताना मनस्थनामाढक चतुर्गुणेन पयसा संस्वेद्य मृदूभूतमवतार्य शीतं सर्पिर्मध्वाढकाभ्या सम्रज्य सुगुप्त स्थापयेत् । ततस्त्रिरात्रादूर्ध्वमाहारानुपरोधिनीं मात्रां मत्यह मुपयोजयेत् जीर्णे शालि षष्टिक पयसा भुञ्जीत । प्रयोगान्ते च ताव-
[illegible]

निर्वली खलति पलितापेत श्रुतिस्मृतिसम्प-
न्न समिद्धानलश्च पुरुषो भवति ॥

अश्नीयादित्यादिना महारसायनानि । व्याख्यासमम् । आपूर्णं सम्पूर्णम् । द्विशस्त्रिशो वा शर्करान्विता द्विधा त्रिधा वा पादिकानाम् । चतुर्गुणं पयः परिमाणेन चतुर्गुणमानेन । अत्र चोक्ता युक्तिः । मात्रान्तरं या जा प्रकृतमाहार नोपरुणद्धि । जीर्णे च पयसा शालिं षष्टिकं भुञ्जीत । प्रयोगो सह सुपयुक्तोऽस्मिन् प्रयोगे तदा यन्तर्हि वेदुपयोगममेयवालम् । अस्य रसायनस्य प्रयोगाद जरत्वादियुक्तः पुरुषः स्वशत जीवति ॥

बृहच्छरीरगिरिसारसारः
स्वरो घनौघस्तनितानुकारी ।
भवत्यपत्यं विपुलं स्थिरं च
समश्नतोयोगमिमं प्रयत्नात् ।

इमं योगं प्रयत्नात् समश्नत पुंसः शरीरं बृहत् गिरिसारसारं च भवति । गिरिवत् साराणि दृढानि पूर्वाक्तान्यष्टौ साराणि यस्य तत्तथोक्तम् । स्वरश्च घनगर्जितानुकारी भवति । सुगमम् ॥

पथ्या सहस्रं त्रिगुणं धात्रीफलसमन्वितम् ।
पञ्चानां पञ्चमूलानां सार्द्धं पलशतद्वयम् ॥
जले दशगुणे पक्त्वा दशभागावशेषिते रसे ।
आपोथ्यकरराण्यस्मीनिरिजयामलकान्यथ ॥
विनीय तस्मिन् निर्यूहे योजयेत् कुडवांशकम् ।
त्वगेलामुस्तरजनीपिप्पल्यगरुचन्दनम् ॥
मण्डूकपर्णीकनकशङ्खपुष्पीवचाप्लवम् ।
यष्ट्याह्वयं विलङ्गं च चूर्णितं तुलयाधिकम् ॥

सितोपलार्द्धभारं च पात्राणि त्रीणि सर्पिषः ।
द्वे च तैलात् पचेत् सर्वं तच्चौलेह्यतां गतम् ॥
अवतीर्णं हिमे युञ्ज्याद्विंशैः क्षौद्रशतैस्त्रिभिः ।
ततः खजकमथितं निदध्याद् घृतभाजने ॥
एतद्रसायनं प्राश्य यथा पूर्वेण सर्वथा ।
वैखानसा वालखिल्या प्राश्य प्राप्ता नवं वयः ।
आरोग्यमतिचायुर्यौतन्द्राश्रमक्लमाः ॥

पथ्या सहस्रमित्यादिना प्रकृष्टं रसायनं व्याख्यासमम् । त्रिगुणान्यामलकानि पथ्या सहस्रात् । पञ्च पञ्चमूलानि प्रथमादीनि । सर्वतश्चैकस्यार्द्धगुणं पलमानेनैव न तु कुडवादिमानेनेतिमर्तव्यम् । आपोथ्य जर्जरीकृत्य । निर्जराणामामलकानां च भित्त्वानामस्थीनि च तत्त्वानि तस्मिन् कषाये विनीय निक्षिप्य । मण्डूकपर्णी ब्राह्मी सुवर्चला । कनकं नागकेसरं सुवर्णं च । शङ्खपुष्पी चित्रिण्टी । प्लवं परिलवम् । तुलयाधिकं सार्द्धभारं एकादशपलशतानि सितोपलानाम् । द्रवस्य पात्रोऽष्टाविंशत्यधिकं पलशतम् । द्वे चेति पात्रे । घृतभाजनं यत्र पूर्वं घृतमासीत् । सर्वेति सर्वेण प्रकारेण । एतच्च ब्रह्मविहितं रसायनं प्राश्य वैखानसानाम महर्षयो वालखिल्याश्च मिनातीत नवं वयः प्रापुः तथा आरोग्यादि च ॥

अभयामलकविभीतकपञ्चाख्यपञ्चमूलनिर्यूहे ।
वल्लीफलाशकरसैद्विगुणे क्षीरेष्टगुणेचविपचेत् ॥

घृतस्यकुम्भं मधुकं मधूकं
काकोलियुग्मं च ... स्वगुप्ताम् ।
सक्षीरशुक्लामृतभमजीवं
सुखाम्बुपस्तचपिबेत् गुणाढ्यम् ॥

अभयादीना क्वाथे अर्थात् स्नेहाद्विगुणे। वह्नीपलाशकस्य क्षीरविदार्योरसे द्विगुण एव। क्षीरे च स्नेहादष्टगुणे घृतस्य कुम्भ द्वादशाधिकपञ्चपलशतानि। मधुकादिकं च कल्कपरिभाषया दत्वा विपचेत्। तत्र घृत गुणाढ्य बहु गुणमुष्णाबुप मन् पिबेत् ॥

आमलकसहस्रपिष्टस्वेदनविधानेन क्षीरोष्मणासुस्विन्नमनातपशुष्कमनास्थि चूर्णयेत्। तदामलकमहस्रस्वरसपरिपीत स्थिराजीवन्तीपुनर्नवनागबलामण्डूकपर्णी ब्रह्मसुवर्चलाभीरुशङ्खपुष्पीवचापिप्पली विडङ्गस्वगुप्तामृतागरुचन्दनमधुकमधूकपुष्पपद्मोत्पलनवमालिकायुवतियूथिकाचूर्णाष्टभागसम्पृक्त पुनर्नागबलापलसहस्रस्वरसपरिपीत छायोपशोषित द्विगुणितसर्पिषा क्षौद्रेण क्षुद्रगुडाकृति कृत्वा घृतभोजनस्थ भस्मराशेरध, स्थापयेदन्तर्भूमे पक्षमथर्ववेदविदकृतरक्ष पक्षात्यये चोद्धृत्य कनकरजतताम्रप्रवाल कालायश्चूर्णाष्टभागसयुक्त मर्द्धकर्षाभिरद्धया यथाग्निमात मात्र प्रयोजयेदिति समान पूर्वेण ॥

सहस्रमामलकानामधोज्वलनक्षीरपूर्णोत्तमुखयोजितच्छिद्रकुम्भाश्रितं स्वेदयेत्। तत इछायाशुष्क चूर्णयेत्। तच्चूर्णमामलकसहस्ररसेन भावयेत्। परिपीत च तत्स्थिरादिचूर्णस्याष्टभागेन योजयेत्। ततो नागबलापलसहस्रस्वरसेन भावयेत्। ततश्छायायामुपशोष्य द्विगुणीकृतघृतेन क्षौद्रेण क्षुद्रगुडाकृति तनुलेहप्राय कृत्वा घृतभोजनस्थितमन्तर्भूमेर्भस्मराशेरध स्थापयेत् पक्षम। सुगमम्। प्रतिदिनमुपयोज्यस्यौषधस्य कनकादिपञ्चकचूर्णाष्टमभागो योज्यः। कालाय शस्त्र।

आमलकसहस्रमार्द्रपलाशद्रोण्या सापिधानायां बाष्पमनुद्वमन्त्यामारण्यगोमयाग्निभिरुपस्वेदयेत्। तानि सुस्विन्नशीतान्युद्धृत्यनिष्कुलीकृतान्यापोथ्य पिप्पलीविडङ्गतण्डुलानां पृथगाढकेनाध्यर्द्धेन शर्कराया षड्भिर्मधुघृततैलाना सयोज्य घृतकुम्भे स्थापयेद्विंशतिरात्र पर चोपयोजयेदिति समान पूर्वेण ॥

आमलकसहस्रमित्यादि सुबोधम्। आर्द्रपलाशद्रोण्येति पिधरोदितान्यामलकानि आपोथ्य जर्जरीकृत्य निष्कुलीकृतानि त्याजितास्थीनि। पृथगिति पिप्पलीतण्डुलानामाढकेन विडङ्गतण्डुलाना चाढकेन सयोज्य शर्कराया अध्यर्द्धेनाढकेन घृतादीना प्रत्येकमाढकद्वयेन च। शुष्कात् द्विगुणरूपमित्यस्य स्मर्तव्यम् ॥

अभयामलकसहस्र पिप्पलीसहस्रयुक्त तरुणपलाशक्षारोदकेनाप्लाव्य शुचौ भाण्डे स्थापयेत्। ततोऽनुगतक्षारमनातपशुष्कमास्थिरहित चूर्णयित्वा सितोपलापादेन चतुर्गुणाभ्या च मधुघृताभ्या सयोज्य घृतभाजने षण्मासानन्तर्भूमे स्थापयित्वापरतो यथाग्निबलमुपयुञ्जीतेति समान पूर्वेण ॥

तरुणपलाशक्षारोदकेनाप्लाव्यस्थापितपिप्पलीसहस्रयुक्ताभयामलकसहस्रमये

अनुगतक्षार परिगतक्षारोऽक्रम् । सितोपला अभयामलकादिचूर्णात् पादेन वोद्धव्या । तथा चतुर्गुण मधुघृते ॥

आमलकचूर्णाढकमेकविंशतिरात्रमाप लकस्वरसभावित मधुघृताढकाभ्या पिप्पली चूर्णाष्टभागेन शर्कराचतुर्भागेन च सहष्ट घृतभाजनस्थ प्रावृषि भस्मराशौ निदध्यात् । तज्जरादि चोपयोजयेदिति समान पूर्वेण ॥

आमलकस्वरसभावितानामामलकचूर्णाना प्रयोगो व्याख्यातम् । अष्टभागचतुर्भागौ भावितादामलकचूर्णात् ॥

विडङ्गतण्डुलानामाढकमाढक पिप्पली तण्डुलानामध्यर्द्ध सितोपलाना मधुघृततैलाढकै षड्भिरेकीकृत घृतभाजनस्थ प्रावृषि भस्मराशाविति समान पूर्वेण ॥

विडङ्गतण्डुलाना प्रयोग सुबोध । सितोपलानामध्यर्द्धमाढकम । म बादीना प्रत्येक माढकद्वयम । भस्मराशौ निदध्यादिति शेष ॥

अभयामलकबिभीतकाना द्विशत्रिशो ना सजोशिलाना पलाशत्वगवनद्धाना मृदाव लिप्ताना कुकूलस्विन्नाना निरस्थीकृताना पलमहस्रमुलूखले सदृशुष्कदीर्घमधुघृततैलपल लशर्करामसृक्त भक्षयेदनभ्युपयथोक्तेन विधिना प्रयोगान्ते ततो द्विगुण काल यवागूयूषक्षीरघृतपाष्टिकान्नमाहारोभजन सर्पिरुद्वर्तन यच्चूर्णमिति समान पूर्वेणाभयत्रिफल वा ॥

अनर्गलत्रिफलाप्रयोग सुबोध । द्विशद्वयमभयामलकानि वाऽभयात्रिभीतकानि वाऽमलकत्रिभीतकानि वा । त्रिश इति सम स्तानि वर्तन्ते । केचित्तु त्रिफलाना सयोजन लिप्सयेत्यहन्ति । मह्शुष्क जर्जरीकृत्य । प्रयोगान्त इति नियत उपयोग । तत इत्युपयोगकालात् द्विगुण काल यवागूवाद्याहारोऽभ्यञ्जनादिना ॥

दशमूलबलामुस्त जीवकर्षभकोत्पलम् ।
पर्णिन्यौपिप्पलीशृङ्गी मेदातामलकी त्रुटि ॥
जीवन्ती जोङ्गक द्राक्षा पौष्कर चन्दन शटी ।
पुनर्नवद्विकाकोली काकनासामृताद्वयम् ॥
विदारी वृषमूल च तदेकस्य पलोन्मितम् ।
जलद्रोणे पचेत् पञ्चधात्रीफलशतानि च ॥
पादशेष रस तस्मादस्थीन्यामलकानि च ।
गृहीत्वा भर्जयेत्तैलघृताद्वा दशभि पलै ॥
मत्स्यण्डिकातुलार्द्धेन युक्त तल्लेहवत् पचेत् ।
स्नेहार्द्ध मधुन शीते तुकाक्षीर्याश्चतुष्पलम् ॥
पिप्पल्याद्विपले दद्याचतुर्जात कणाद्विकम् ।
अतोऽवलेहये मात्रा कुर्यात्स्य पथ्यभोजनम् ॥
इत्येषच्यवनप्राशो य प्राश्य च्यवनोमुनि ।
जराजर्जरितोप्यासीन्नारीनयननन्दन ॥
कास श्वास ज्वर शोष हृद्रोग वातशोणितम् ।
मूत्रशुक्राश्रयान्दोषान् वैस्वर्य च व्यपोहति ।
बालवृद्धक्षतक्षीणकृशानामङ्गवर्द्धन ॥

मेधां स्मृतिं कान्तिमनामयत्व-
मायुःप्रकर्षं पवनानुलोम्यम् ।
स्त्रीषु प्रहर्षं बलमिन्द्रियाणां
प्रमेश्च कुर्याद्विधिनोपयुक्तः ॥

दशमूलेत्यादिना च्यवनप्राशाख्य । प र्णिन्यौ मुद्गपर्णी माषपर्णी च । तामलकी ता-ली वितुन्निका च । त्रुटिः सूक्ष्मैला, जीवक॰ मगरु, काकनासा प्रसिद्धा (काकतुण्डफला) अमृताद्वयं गुडूची, हरीतकी च । एतत् सर्व पलोन्मितं प्रत्येकश्च क्रियते । एवं षट्त्रिंशत् पलान्यौषधानाम् । धात्रीफलानां पञ्चशतानि एतत् जलद्रोणे पचेत् । तस्मात् पच्यमानात् पादशेषो रस । विगतास्थीनि चामलकानि तै-लघृतार्धेनीभूतान्द्वादशभि पलैर्भर्जयेत् । भर्जि तानामामलकानां रसेन सह पचनं सामर्थ्यल भ्यम् । मत्स्यण्डिकाऽधिकेन गुडपाकेन कृता शर्करा । स्नेहार्द्धं मधुनः षट्पलम् शेषं व्या-ख्यातसमम् । अतो लेहात् । मात्रा सोऽपि कु र्वीत पथ्यभोजिनं च पुरुषमवलेहयेत् । च्यवनप्राशम् । स्त्रीष्विति स्त्रीविषये ॥

मधुकेनतवक्षीर्या पिप्पल्या सिन्धुजन्मना ।
पृथग्लोहैः सुवर्णेन वचया मधुसर्पिषा ॥
सितया वासमायुक्ता समायुक्ता रसायनम् ।
त्रिफला सर्वरोगघ्नी मेधायुःस्मृतिबुद्धिदा ॥

त्रिफलामधुकादिना लोहादिना वा पृथक् समायुक्ता सयुक्ता समा संवत्सरं युक्ता प्रयुक्ता रसायनं सर्वरोगघ्नी मेधादिदा च भवति । म धुसर्पिर्भ्यामेकीभूताभ्यां त्रिफला युज्यते ॥

त्रैफलेनायसीं पात्रीं कल्केनालेपयेन्नवाम् ।
तमहोरात्रिकं लेपं पिबेत् क्षौद्रोदकाप्लुतम् ॥
प्रभूतस्नेहमशनं जीर्णे तत्र प्रशस्यते ।
जीवत्यरुग्जरस्तस्यसमाभ्यासात्समाःशतम् ॥

त्रैफलेन त्रिफलाकल्केन प्रातर्नवां लोह-पात्रीं लिप्त्वा द्वितीयं दिनं तं लेपं प्रातर्माक्षि-कोदकेन पिबेत् । तस्मिंश्च जीर्णे प्रभूतस्नेहम-शनं प्रशस्यते । एवं संवत्सराभ्यासात् संवत्स रशतं रुजया जरसा च रहितः पुरुषो जी-वति ॥

वर्षं खादेत् प्राणदां प्रातरेका-
मश्नन्नात् पूर्वमक्षद्वयं च ।
साज्यक्षौद्रं भोजनान्ते चतुष्कं
धात्रीकानां तद्वयस्थापनं स्यात् ।

वर्षमित्यादिना कालविभागे । फलस्य प्रयोगः सुबोधः ॥

अथायसानि चतुरङ्गुलदीर्घविस्तृता नि तिलोत्सेधानि पत्राणि कारयेत् । तान्य-ग्निवर्णानि कृत्वाऽमलकस्वरसे निर्वापयेदेकं विंशतिकृत्वः । तेषां तादृशानां पलशतमाय-स्यां स्थाल्यां प्रक्षिप्याम्लकस्वरसोत्तरं कृत्वा सुपिहितं भस्मराशौ निखनेत् । मासिमासि चोद्धृत्यायसेन दण्डेन घट्टयेत् । शुष्यत्याम लकस्वरसं पूर्ववदावपेत् । एवं तानि लोहप त्राणि संवत्सरात् द्रवीभवन्ति । ततश्चोत्तर कालं कृत्वा वमनविरेचनशिरोविरेचनैः केवल समन्ततोऽङ्गुष्ठपर्वमात्रमुखेनायसेन स्रुवेणाय-सपत्रभाजने तस्मात् कल्कीकृतात्

गृहीत्वा मधुघृताभ्यां पृथक् सुवेण संयोज्य प्राश्नीयात् । जीर्णे क्षीरसयूषाणामन्यतमेन सर्पिर्मिश्रं नवं षष्टिकौदनमश्नीयात् । अनेन विधिना वर्षमुपयुज्य वर्षमेव चान्यदप्युद्दिष्टाहारो यन्त्रितात्मा कुटीं समधिवसेत् । ततः सर्वोपतापान् जित्वा व्याधिजरामरणशस्त्राग्नितोयविषाणामगम्यः सर्वभावेष्वतीन्द्रियो वर्षसहस्रद्वयं जीवति ।

वाजिवेगो गजप्राणोऽमरेन्द्रस्मृतिबुद्धिमान् ।
वाग्मीश्वरः श्रुतधरो महाभागो महाधनः ॥

अथेत्यादि । निरघनानि चतुरङ्गुलायतविस्तृतानि शङ्खपत्राणि एकविंशतिवारमभिज्वर्ण्य स्वान्यामलकरसे निर्वापयेत् । तस्माद्दशानां निर्वापणेन तनुभूतानां तेषां शङ्खपत्राणां पलं समायस्या स्थाल्यां प्रक्षिप्य तेनैवामलकरसेनोत्तरमधिक्षिप्य कृत्वा सुविहितं च भस्मराशौ निदध्यात् । शेषं व्याख्यासमम् । समन्ततः सर्वतोदिक्मायामविस्तराभ्यामङ्गुष्ठपर्वमात्रः सुखनिम्नप्रदेशो यस्य तत्तस्य । अनेनौषधविधिनैव । सर्वभावेषु बाह्यात्मकेषु । अप्रयुक्तानिन्द्रियेणातिक्रान्तोऽतीन्द्रियः ॥

ताम्ररूप्यसुवर्णानामयमेव पृथग्विधिः ।
द्विगुणं तद्गुणोत्कर्षं जानीयादुत्तरोत्तरम् ॥

शङ्खवत्ताम्रादीनामप्ययं विधिः पृथग्द्विगुणं कृत्वा द्रव्यमासनिर्वापणादिभिर्यथोत्तरं जानीयात् । तेन ताम्रस्य शङ्खात् द्विगुणो विधिर्द्विगुण एव च गुणोत्कर्षः । ताम्रात् द्विगुणो रूप्यस्य । ततोऽपि द्विगुणः सुवर्णस्येति ।

हेमधात्रीफलक्षौद्रं गायत्रीपरिमन्त्रितम् ।
लिहन्ननुपिबन् क्षीरं दृष्टरिष्टोऽपि जीवति ॥

हेमादिकं गायत्र्या परिमन्त्रितं लिहन् पुरुषोऽनुपश्चाच्च क्षीरं पिबन् दृष्टरिष्टोऽपि जीवति ।

सुवर्णं पद्मबीजानि मधु लाजाः प्रियङ्गवः ।
क्षीरेण पीतं परममलक्ष्मीविनिवारणम् ॥

सुवर्णादिकं क्षीरेण पीतं परममलक्ष्मीविनिवारणं भवति ।

सपद्मबीजामलकाभयाक्षं
सर्पिर्मधुभ्यां कनकं लिहन्तः ।
दीर्घायुषो मन्दजरोपतापाः
सरीसृपाणां च भवन्त्यगम्याः ॥

पद्मबीजादियुक्तं सुवर्णं लिहन् पुरुषो दीर्घायुष्ट्वादियुक्तो भवति ॥

मधुपाणविकाविलङ्गसारं
त्रिफलां हेमघृतं सितां च खादन् ।
जरसा नवलीढदेहकान्तिः
समधातुश्च समाः शतं च जीवेत् ॥

मध्वादिकं खादन् पुरुषो जरया नवलीढा अनशिता देहस्यकान्तिर्यस्य स तथाविधः समसर्वधातुश्च सम्भवति शतं समा जीवेच्च ॥

हेमबिल्ववचासर्पिरैकध्यमुपयोजितम् ।
मेध्यमायुष्यमारोग्यकान्तिसौभाग्यपुष्टिदम् ॥

हेमादिकमैकध्यमुपयोजितं मेध्यं मेधायै हितमायुष्यमारोग्यादिप्रदं च ॥

शतावरीघृत लीढ मसुवर्ण समाक्षिकम् ।
करोति चिरजीविनं राजान च वशानुगम् ॥

शतावरीघृत गुह्यरोगप्रतिषेधोक्त सुवर्ण माक्षिकाभ्या युक्त लीढ पुरुषस्य चिरजीवित्वादिक करोति ॥

आयुष्काम शङ्खपुष्प्यामवेत
मेधाकाम काञ्चन सोग्रगन्धम् ।
लक्ष्मीकाम पद्मकिञ्जल्कयुक्त
युक्त खादेत् कामकामो विदार्या ॥

आयुष्काम इत्यादिना चत्वार सुवर्णप्रयोगा व्याख्याता ॥

मण्डूकपर्ण्या स्वरसयथाग्नि
क्षीरेणयष्टीमधुकस्यचूर्णम् ।
रसगुडूच्या सहमूलपुष्प्या
कल्क प्रयुञ्जीत च शङ्खपुष्प्या ॥

आयु प्रदान्यामयनाशनानि
बलाग्निवर्णस्वरवर्द्धनानि ।
मेध्यानिचैतानि रसायनानि
मेध्याविशेषेण तु शङ्खपुष्पी ॥

मण्डूकपर्णी स्वरसादिक पृथग्यथामग्निबलमनुवृत्यामात्रया प्रयुञ्जीत । एतानि चत्वारि रसायनान्यायुःप्रदत्वादिगुणयुक्तानि । मण्डूकपर्णी ब्राह्मसुवर्चला । मधुयष्टीचूर्णमेव क्षीरेण । सहमूलपुष्प्या गुडूच्या रसमेव । शङ्खपुष्प्या सुपुष्प्या कल्कम् । सर्वेभ्यश्च रसायनेभ्य शङ्खपुष्पी तु विशेषेण मेध्या मेधायै हिता ॥

नळदकटुरोहणी पयस्या
मधुकचन्दनशारिवोग्रगन्धाः ।
त्रिफलाकटुकत्रय हरिद्रे
सपटोल लवण च ते सुपिष्टे ॥
त्रिगुणेन रसेन शङ्खपुष्प्या
सपयस्क घृतनल्वण त्रिपक्वम् ।
उपयुज्य भवेज्जडोऽपि वाग्मी
श्रुतधारी प्रतिभानवानरोग ॥

नळदादिभि सुपिष्टै स्नेहा त्रिगुणेन शङ्खपुष्पीरसेन सक्षीर विपक्व घृतस्य नल्वण द्रोणमुपयुज्य जडोऽपि वाग्मी-यादिगुणो भवेत् । उग्रगन्धा वचा । लवण सैन्धवम् ॥

पेष्यैर्मृणालबिसकेसरपत्रबीजै
सिद्धसहेमशकल पयसा च सर्पि ।
पञ्चारविन्दमितिनस्तथित पृथिव्या
प्रभ्रष्टपौरुषबलप्रतिभाविपन्नम् ॥

मृणालादिभि पेष्यै क्षीरेण च ससुवर्ण शकल सिद्ध सर्पिर्नाम्ना पञ्चारविन्दमिति पृथिव्या प्रथितम् । तच्च प्रभ्रष्टपौरुषबलादिभिर्निषेव्यम् । मृणाल बिसाङ्कुरम् । बिस बिसमूलम् । केसरतत्पुष्पस्य । पत्र तस्यैव बीज च ॥

यत्नालकुन्ददलकेसरवद्विपक्व
नीलोत्पलस्यतदपिप्रथित पृथिव्याम् ।
सर्पिश्चतुष्कुवलयसहिरण्यपत्र
मेध्यगवामपिभवेत् किमु मानुषाणाम् ॥

यत्सर्पिर्नीलोत्पलस्यनालादिचतुष्टयेन सहिरण्यपत्र विपक्व तदपि [illegible] प्रभ्रष्टपौरुषा-

दिभिर्निषेव्यम । नाम्ना चतुरङ्कुरलशमिति प्रथितम् । एषा यथाविधि सेव्य भवेत् । किमु तमानुषाणां स्वभावसेधावत्ता न भवेत् ॥

ब्राह्मीरसचासनरसशङ्खपुष्पी
मत्स्याक्षकब्रह्मसुवर्चलं श्च ।
वशैहिका च त्रियवा पृथक्स्यु
र्येषां सुवर्णस्य तिलोऽविषस्य ॥

सर्पिषश्च पलमेकमेत
द्योजयेत परिणते च घृताढ्यम् ।
भोजनसमधुवत्सरमेव
शीलयन्निरुजीस्मृतिमेधाः ॥

अतिक्रान्तजराव्याधि तद्वालस्यश्रमस्य ।
जीवत्यब्दशतं पूर्णं श्रीतेजःकान्तिदीप्तिमान् ॥

विशेषतः कुष्ठकिलाससगुल्म
विषज्वरोन्मादगरोदराणि ।
अथर्वमन्त्रादिकृताश्च कृत्या
शाम्यन्त्यनेनातिबलाश्च वाताः ॥

नाभ्यादिकं यथोक्तमानमेकीकृत्य प्रतिदिनं योजयेत् । तस्मिंश्च परिणते घृताढ्यं समाक्षिकं भोजनं योजयेत् । एवं संवत्सरं शीलयन्नधिकाभिर्धीप्रभृतिभिर्युक्तोऽतिक्रान्तजरादिमांश्च पूर्णमब्दशतं जीवति । अथाभियुक्तः सन् । अनेन शीलितेन कुष्ठादयो विशेषेण शाम्यन्ति । ब्रह्मसुवर्चला मण्डूकपर्णी ॥

यथोक्तगुणायां भूमौ जातायत्रालाभजीर्णा शीर्णपुराणपर्णामसञ्जातान्यपर्णां तपे तपस्ये वा मासे यथोक्तेन विधिना पुष्ययुक्ते चन्द्रमसि सुमुहूर्ते नागबलां समूलां मुद्धरेत् । तस्या मूलानां त्वक्पिण्डमाम्रमात्रमक्षमात्रं वा श्लक्ष्णपिष्टं चूर्णितं वा पयसा पिबेन्मधुघृताभ्यां वा लिह्यात् । जीर्णे क्षीरवृत्तिरेव स्यात् । क्षीरेणैव वा सर्पिष्कं शालिषष्टिकमश्नीयात् । एवं संवत्सरप्रयोगाद्वर्षशतमजरं इत्यादि समानं पूर्वेण ॥

यथोक्तगुणायामित्यादिना नागबलाप्रयोगो व्याख्यायते । यथोक्तगुणायां भेषजकल्पोक्तगुणायां भूमौ जाताम् । तपो माघ, तपस्य फाल्गुन, शोभने मुहूर्ते ॥

एतेनातिबला चन्दनागरुधवतिनिशखदिरकदरशाकशिंशपासनपुनर्नवानन्ताश्च रसायनोक्ता दर्शयन्, सरिद्वारीश्च दग्धाश्वगन्धा वाराहीशतावर्यो नागबलया व्याख्याता ।

अनेन च नागबलाविधानेन बलादयः प्रयोगा व्याख्याता । बलादिष्वपि प्रत्येकं प्रयोगादेव गुणमित्यर्थः । रसायना दशौषधयो महाकषायसङ्ग्रहोक्ताः ॥

ननु सारवृक्षाणां स्वरसग्रहणे को विधिरित्याह ॥

तत्र सारवृक्षाणां सर्वेषां स्वरसार्थी कुष्ठचिकित्सिते खदिरकल्पमीक्षेत । आर्द्रवृक्षासम्भवे तु सारशकलान्यङ्गुलत्रयाङ्गुलानि तनूनि चतुर्गुणेऽम्भस्याप्लाव्यातपे त्रिरात्रं स्थापयेत् । ततस्तान्युद्धृत्यान्यानि तत्र क्षिपेत् ।

त्रिरात्राच्च पुनरन्यान्येव नवरात्रेण त्रिःप्रक्षेपणोद्धारेण च स्वरस परिकल्पितो भवति ॥

तक्षेत्यादि कुष्ठचिकित्सिते य एव खदिरकल्पउक्त स एव सर्वेषा सारवृक्षाणा बोद्धव्य । यदा तु स्वरसेन प्रयोजन तथाऽर्द्रवृक्षलाभस्तदा नवरात्रेण स्वरसविधान सुबोधम् । इति सारवृक्षाणा स्वरसालाभे प्रतिनिधि ॥

फलाना पुनर्वीरुदोषधीना च यन्त्रणोलूखलेन वा सङ्क्षुद्य निष्पीड्य स्वरस गृह्णीयात् ॥

फलाना वीरुदोषधीना च स्वरसस्यालाभे यन्त्रेणेत्यादिना स्वरसविधि सुबोध ॥

परिशुष्काणा तु चूर्णीकृतानामादकमाढकमुदकस्याहोरात्रस्थित विमृदितपूत स्वरसवत् प्रयोज्यम् । तुवरकभल्लातकादीना पुन पृथगेवोपदेश ॥

परिशुष्काणा तु स्वरसायोग्याना फलाना चूर्णीकृतानामित्यादिना प्रतिनिधि । उदकस्याढक शुष्कात् द्विगुण भवति । तुवरकभल्लातकादीना स्वरसे तु पृथगेवोपदेश क्रियते ॥

वृक्षास्तुवरकानाम पश्चिमार्णवतीरजा ।
वीचीतरङ्गविक्षोभमारुतोद्धूतपल्लवा ॥
तेभ्य फलान्याददीत सुपक्वान्यम्बुदागमे ।
मज्ज फलेभ्यश्चादाय शोषयित्वावचूर्ण्य च ॥
तिलवत्पीडयेद्द्रोण्या क्वाथयेद्वा कुसुम्भवत् ।
तत्तैलसम्भृत भूय पचेदासलिलक्षयात् ॥

अवतार्य करीषे च पक्षमात्र निधापयेत् ।
स्निग्धस्विन्नोद्धृतमल पश्चादुद्धृत्य यत्नवान् ॥
चतुर्थभक्तान्तरित प्रात पाणितल पिबेत् ।
मन्त्रेणानेन पूतस्य तैलस्याद्दिवसे शुभे ॥
मज्जसारमहावीर्य सर्वान् धातून् विशोधय ।
शङ्खचक्रगदापाणिस्त्वामाज्ञापयतेऽच्युत ॥
तेनास्योर्ध्वमधस्ताच्च दोषा यान्त्यसकृत्तत ।
सायमस्नेहलवणा यवागू शीतला पिबेत् ॥
पञ्चाहानि पिबेत्तैलमित्थ वर्ज्यानि वर्जयेत् ।
पक्षमुद्गरसान्नाशी सर्वदुष्टैर्विमुच्यते ॥

वृक्षा इत्यादिना तुवरककल्पो व्याख्यास्यते । तेभ्य इति तुवरकवृक्षेभ्य । अम्बुदागम प्रावृट् । आसलिलक्षयात् सलिलस्य क्षयो यावत् । कुसुम्भवत् क्वथितेन तैलसङ्ग्रहात् यदुदक तस्य क्षयपर्यन्तमित्यर्थ । करीष शुष्कगोमयम् । चतुर्थभक्तान्तरित इति । चतुर्थेन भक्तेनान्तरितोयो मनुष्य स पिबेत् । तैलमेवम् । यस्मिन्नहनि प्रातस्तैलमुपयुञ्जीत तस्मिन् साय भुक्त्वा द्वितीयेऽह्न्युभयकालमेव त्रयो भक्तास्तृतीयेऽह्नि पुन प्रातस्तैलमेव चतुर्थो भक्त अन्तरित । पुन साय भोजन पुनर्द्वितीयेऽह्न्युभयकाल भोजनमनेनप्रकारेण पञ्चाहानि तैल पिबेत् । वर्ज्यानि च वर्जयेत् । मज्जसारेत्यादिस्तैलस्य पानाय मन्त्र । तैलपानदिवसे तु साय स्नेहलवणविमुक्ता यवागू पिबत ॥

तदेव खदिरक्वाथे त्रिगुणसाधुसाधितम् ।
निहित पूर्ववत् पक्ष पिबेन्मासमुयन्त्रित ॥
तेनाभ्यक्तशरीरश्च कुर्वन्नाहारमीरितम् ।

भल्लातकतैलपात्रं सपयस्कं मधुकाक्षमात्रेण शतपाकमुपयुञ्जीत । त्रिगुणश्चकाल इत्यादि समानं पूर्वेण ॥

भल्लातकतैलस्यपात्रं क्षीरेण सह शतं वा रान् पक्त्वा मधुयष्टीकर्षमात्रेण सयोज्योपयुञ्जीत पूर्वतुल्यगुणम् ।

भल्लातकतैलं कृष्णतिलतैलं सर्पिरामलकरसोऽसनादिसारकषाय इत्येषां द्रोणंद्रोणं त्रिफलात्रिकटुकनिम्बसारचित्रकहरिद्राद्वयत्रिदन्तीन्द्रयवयष्टीमधुकविषानिविषा रसाञ्जनप्रियगूना पालिकाभागास्तदैकध्य स्नेहपाकविधिना विपाच्यावतार्य परिपूय चानुगुप्तं निदध्यात् । तत उपस्कृतशरीरः प्रातःप्रातः पाणिं शुक्तिमात्रं क्षौद्रेण प्रतिसंसृज्योपयुञ्जीत । जीर्णे मुद्गामलकयूषेणालवणेन सर्पिष्मता खदिरोदकसिद्धं मृदुमोदनमश्नीयात् । खदिरोदकेनोदककार्याणीत्येवमतो द्रोणमुपयुज्य विगतकुष्ठदुर्नामेत्यादि समानं पूर्वेण ॥

भल्लातकतैलादीनां द्रोणं द्रोणमिति प्रत्येकं द्रोणं । पचात्ता च । त्रिफलादीनां पालिकाभागा इत्यादि व्याख्यासमम् । परिपूय परिस्राव्य । उपस्कृतदेहो यथोक्तेन शीतस्निग्धादिना कृतसंस्कारः । पाणिशुक्तिर्हस्तपुटं न तु मानसंख्योक्ता शुक्तिः । उदककार्याणि स्नानपानादीनि । अतो रसायनात् द्रोणमवश्यमुपयोक्तव्यम् ॥

पुष्टानि पाकेनपरिच्युतानि
भल्लातकान्याढकसम्मितानि ।
घृष्टेष्टिका चूर्णकणैर्जलेन
प्रक्षाल्य संशोष्य च मारुतेन ॥

जर्जराणि विपचेज्जलकुम्भे
पादशेषघृतगालितशीतम् ।
तद्रसं पुनरपि श्रपयेत
क्षीरकुम्भसहितं चरणस्थे ॥

सर्पिः पक्कं तेन तुल्यप्रमाणं
युञ्ज्यात् स्वेच्छं शर्करायारजोभिः ।
एकीभूतं तत्खजक्षोभणेन
स्थाप्यं धान्ये सप्तरात्रं सुगुप्तम् ॥

तममृतरसपाकं यः प्रगे प्राशमश्नन्
ननुपिबति यथेष्टं वारिदुग्धं रसं वा ।
स्मृतिमतिबलमेधा सत्त्वसारैरुपेतः
कनकनिकषगौरः सोऽश्नुते दीर्घमायुः ॥

पुष्टानीत्यादिना भल्लातकघृतप्राशो व्याख्यासमः । संशोष्य च मारुतेनेत्यातपपरिहाराय । तेनेति क्षीरेण तुल्यं सर्पिः शर्करायारजोभिश्चूर्णेन यथेच्छं प्रकृत्यनुसारेण । प्राशो लेहः । (भल्लातकानां द्विधाभिन्नानां इष्टिकाचूर्णकणैर्घर्षणं कार्यमित्यपरे ।)

द्रोणेऽम्भसो व्रणकृतां त्रिशतादिपक्वात्
क्वाथाढके पलसमैस्तिलतैलपात्रम् ।
तिक्ताविषाद्वयवरागिरिजन्मताक्ष्यैः
सिद्धं परं निखिलकुष्ठनिषूदनाय ॥

द्रोणेऽम्भस इत्यादि सुबोधम् । व्रणकृतो भल्लातकानि । तिलतैलयोर्मिश्रितयोः पात्रं

उष्णाविपाकेकटुश्च कषायमधुरारसे ।
अत्यन्तदीपनीमेध्या जातश्लेष्महराचसा ॥
वर्षोपयोगात् कुरुते नर वर्षशतायुषम् ।
दृढेन्द्रियानलबल निर्वली पलितामयम् ॥

अम्बुसाया स्वरसभाविताया घृतादिभि सप्त वेगा । सा वालम्बुसोष्णादिगुणा। वर्षमुपयुक्ता वर्षशतायुष नर कुरुते । दृढेन्द्रिय दृढानल दृढबल वल्यादिजराहित च । इत्यलम्बुसाकल्प ॥

॥ इति सोमराजी ॥

श्वेतावदुगुजफलान्यातपशुष्काणि चूर्णयित्वा तत्तुल्यगुडेन सह गुप्त घृतकुम्भे धान्यराशौ सप्तरात्र निदध्यात् । ततोऽनुदिते भास्वति यथाबल मात्रा सुखोदकानुपाना मुपयोजयेत् । जीर्णे सुखाम्बुपरिषिक्त शालिपष्टिकौदन सशर्करेण पयसाश्नीयात् । तस्य मासप्रयोगाद्विशेषण त्रितकुष्ठोग्रदग रारणनान् वर्षशतमजरइत्यादि समान पूर्वेण । प्रयोगतश्चोर्ध्वं द्विगुण परिहार ॥

श्वेतावदुगुजफलानीत्यादि सुबोधम् । सह्गुडेति गुडेनालोड्य । अनुदिते भास्वति अप्राते । वाकुचिका सोमराजयवल्गुज इति पर्याया ॥

वाकुचिका कर्षचूर्णं सुखाम्बुना पिबेत् । पीत्वा चातपे निर्वातोष्णे वा गर्भगृहे तिष्ठेदपराह्णे तद्वदेव स्नानमशन च । युषरसाभ्यां वा । तस्य त्रिसप्तरात्रप्रयोगाद्विगत कुष्ठइत्यादि समान पूर्वेण ॥

त्वग्रोमकेशदशनान्
नखांश्चमुक्त्वा पुनर्नवान् लभते ।
स्वरवर्णबलोत्साह
नव वयो नष्टपलित च ॥

वाकुचीचूर्ण प्रात पीत्वा साय तथैव स्नानमशन च । युषरसाभ्या वाशनमुपयुञ्जीत। एव त्रिसप्तरात्रमस्या प्रयोग । अनेन च पूर्वस्थिता त्वगादीं त्यक्त्वा नवान् लभते स्वरादिक च नष्टपलित नव वयश्च लभते ॥

पलानिदशवाकुच्या दशैवचफलत्रयात् ।
सप्तक्रिमिघ्नादयसश्चोणिद्वे गिरिसम्भवात् ॥
पुरपुष्करमूलाभ्यामाहरेत पलपलम् ।
सूक्ष्मैलार्द्धपल व्योषघनकेसरकुङ्कुमम् ॥
लोध्रत्वक्पत्रपद्माह चित्रकार्षिकपृथक् ।
शतभल्लातकाना च सर्वं खण्डसमांशकम् ॥
चूर्णयेद्य तन्मात्रा भक्षयेत् पालिकीं पराम् ।
यथेष्टवन्हो लभते वर्षाद्रासायनान् गुणान् ॥
सर्वरोगान् जयते त्वग्विकारान् विशेषत. ।
अर्शोभगन्दरश्वासकासपाण्ड्वामयाक्रिमीन् ॥
गुल्मप्लीहोदरीवर्ध्ममेहारुचिपीनसान् ।
मन्दानलत्वकृशता शोफग्रन्थ्यर्बुदानपि ॥

पलानीत्यादिना खण्डलम सुबोध । अथ मात्रा पालिकीपरा उत्कृष्टा । पलादूर्ध्वं नैवोपयोज्या । अथवा त्रिदोषाद्यपेक्षम् । यथेष्टचेष्टो नियन्त्रण । रसायनगुणा दीर्घायुस्मृत्यादय इहैवोक्ता । स त्वर्बुदान्तान् जिजयत इति सम्बन्ध ॥

वाकुचिकाफलानि गोमूत्रे सप्तरात्र वासयेत् । ततोनिस्तुषीकृत्य छायाया विशोषयित्वा सुसूक्ष्म च सचूर्ण्य त्र्यहत्र्यह क्रमशोभावयेत्रिफला काथेन कारवल्ली ब्राह्मी गुडूची भृङ्गराजस्वरसे पृथक्पृथक् खदिरासनराजवृक्षपिचुमन्दकाथे. ॥

तस्यपीत मतिदिनं धात्रीफलरसाप्लुत. ।
कर्षं सर्वामयानहन्ति त्वग्विकारान्विशेषत' ॥

वाकुच्या गोमूत्राभ्युषितायाश्चूर्णं त्र्यह त्रिफलाकाथेन भावयेत् । तत कारवेल्लादीना पञ्चाना स्वरसे क्रमेण त्र्यह त्र्यहम् । तत खदिरादीना चतुर्णां पृथक्काथैस्त्र्यहम् । तस्यैव भावितस्य वाकुचीचूर्णस्य कर्षो धात्रीरसेनाप्लुत सन् पीत सर्वामयान् हन्ति विशेषत स्त्वग्विकारान् ॥

असनखदिरयूषैर्भावितांसोमराजीं
मधुघृतशिखिपथ्या लोहचूर्णैरुपेताम् ।
शरदमवलिहान. पारिणामान् विकारां
स्त्यजति मितहिताशी तद्वदाहारजातान् ॥

असनेत्यादि । यूषशब्दो निर्यूहवाचकोऽसनखदिराभ्या सम्बध्यते । तैर्भाविताम नन्तर च मध्वादिभिरुपेता सोमराजीं शरद मवत्सर लिहान. परिणामे वार्द्धक भवान् विकारास्त्यजति तथैव चाहारजातान् । तेन परिणामानाहारजातानुभयानपि त्यजतीत्यर्थ । शिखी चित्रक ॥

तीव्रेण कुष्ठेन परीतमूर्ति-
र्य सोमराजीं नियमेन खादेत् ।
सवत्सर कृष्णतिलद्वितीया
ससोमराजीं वपुषातिशेते '

तीव्रेणेत्यादिना कृष्णतिलै सह सोमराज्या प्रयोग सुगम । य पत्र सोमराजीं खादेत ससोमराजीं चन्द्रलेखा वपुषा कान्त्याऽतिशेते ॥

ये सोमराज्या नितुषीकृताया-
श्चूर्णंतपनात् पयस सुजातात् ।
उद्धृत्यसार मधुना लिहन्ति
तक्र तदेवानु पिबन्ति चान्ते ॥

ते कुष्ठिन पक्ष्मशिरिद्ध्रनेत्रा
विशीर्णकर्णाङ्गुलिनासिका वा ।
विहायवैरूप्यमनान्यरूप
पुन प्ररूढा इव भाति वृक्षा ॥

ये सोमराज्या इत्यादिना सोमराजीचूर्णेयुक्त सुजातक्षीरोद्धृतस्य नवनीतस्य ततक्रानुपानस्य प्रयोग सुबोध ॥

खदिरामसापिबेद्वारविसेवी
ता तया यवागू वा ।
गायत्रीजलसिद्धां
कुष्ठी तत्तोयकार्यकर' ॥

अथ वाता सोमराजीं खदिरोदकेन कुष्ठी पिबेत् । रविसेवी सूर्यतापसेवी । अथवा गायत्री जलसिद्धा खदिरकाथसिद्धा यवागू त-

येति सोमराज्या सह पिबेत् कुष्ठी तत्तोयकार्यं कर॰ खदिरोदकस्नानान्वित इत्यर्थः ॥

गजलिण्डक्षारयुता
तत्क्षारपायिनो विलेपि भुजः ।
श्वित्राणि सोमराजी
प्रसह्य हन्यात् प्रलेपाच्च ॥

गजपुरीषक्षारेणयुता सोमराजी तत्क्षारपायिनो हस्तिपुरीषक्षारोदकपानशीलस्य पुंसो विलेपिका भुजः श्वित्राणि प्रसह्याक्रम्य हन्यात् । न केवलमेव मुखेन प्रयोगात्तावत् प्रलेपाच्च ॥

गोमूत्रे सप्तरात्रं शशिशकलफलं
वासितं लोळयित्वा
कुर्याच्छायाविशुष्कं पृथगिति च फलं
प्रापुनाटं च [१] शुष्कम् ।
अशस्ताभ्यां तथांशं क्रिमिरिपुदहन-
स्फोटकृद्धयं सचूर्णो
गोमूत्रेणोपयुक्तः प्रमितहितभुजः
श्वित्रमाश्वेव हन्ति ॥

शशिशकलस्य सोमराज्याः फलं सप्तरात्रं गोमूत्रे भावितं लोळयित्वा निष्कुलीकृत्य छायाशुष्कं कुर्यात् । अनेनैव च विधानेन गोमूत्रे सप्तरात्रं वासितं प्रपुन्नाटफलं कुर्यात् तदुभयसममेकोंऽश एष चूर्णो गोमूत्रेणोपयुक्तो य प्रमितं हितं च भुङ्क्ते तस्याश्वेव श्वित्रं हन्ति । प्रपुन्नाटः एडगजः । क्रिमिरिपुर्विडङ्गम् । दहनश्चित्रकः । स्फोटहेतुर्भल्लातकः ॥

१ [प्रापुनाटं सुपिष्टमिति च पाठः ॥]

इक्षुरगोक्षुरसिंही
व्याघ्रीपञ्चांगुलाम्बुना पीता ।
उपलमघनं घनं वा
रसाशिना हन्ति वाकुचिका ॥

इक्षुरादम्बुना सामराजी पीता उपलमश्मरीरूपं घनं कठिनमघनं वा शर्करारूपं मा सरसाशिनो हन्ति । इक्षुरः काण्डेक्षुरकः । सिंही बृहती । व्याघ्री कण्टकारिका ॥

उष्णोदकेनपिष्टा
पीता च घृतान्विता जयेत् गुल्मम् ।
लघुपञ्चमूलसिद्धां
पेयामुपयोजयेज्जीर्णे ॥

उष्णोदकेन पिष्टा वाकुची घृतान्विता सती पीता गुल्मं जयेत् । अस्मिंश्च प्रयोगे जीर्णे लघुपञ्चमूलसिद्धां पेयामुपयोजयेत् ॥

कट्वङ्गकुटजयूषै
रर्शांसि भगन्दरं च नाशयति ।
मेहान् मधैर्निगदै-
र्निषेविता वाकुची प्रबलान् ।

अर्शोभगन्दरयोः कट्वङ्गकुटजकषायैः सेविता वाकुचीतो नाशयति । कट्वङ्गः स्योनाकः, कुटजो वृक्षकः, मधैर्निगदैर्निर्दोषैर्निषेविता वाकुची प्रबलान् मेहान् जयेत् ॥

विष्किररसेनपीता
दशमूलरसेन वा गुडूच्या वा ।
अपतन्त्रकं निहन्या-
दायामं वा रसान्नभुजः ॥

चिदिकरम्मादीना प्रयाणाम-यतमेन पीता वा कुचीरमाकसुज पुसोऽपतन्त्रकमायाम च नि हन्यात् ॥

जठरेषुपिवेन्मूत्रै
र्जलोदरे लशुनेन यूपण ।
शोफे पाण्डुव्याधा
ववल्गुज शीध्वरिष्टाभ्याम् ॥

मूत्रैरुदरे त्रिवृता क्वाथेन जलोदरे यथौ पाण्डुरोगे च शीध्वरिष्टाभ्यां युक्तमवल्गुज पिबेत् ॥

इक्षुरकादि क्वाथै
र्वर्त्मनि मूत्रेण वा गवा शस्त ।
धारोष्णेन तु पयसा
युक्त शोफज्वरौ हन्ति ॥

उष्णाम्बुना मयोज्यो
लूताकीटाखुसर्पदष्टेषु ।
कृमिहर चतुरङ्गुलयो
क्वाथ कोष्ण, क्रिमिणकोष्ठेषु ॥

अन्तरोक्तैरिक्षुरकादिक्वाथेनामूत्रेण वाऽवल्गुजो वर्त्मनि शस्त । व्याख्यातमन्यत् । कृमिण इति मत्वर्थीयो न ॥

लेखामिन्दो सघृतां
सुखाम्बुना पुत्रिणी भवति पीत्वा ।
पुष्पोदयस्वगन्धा
भृतेन पयसा च भुञ्जाना ॥

इन्दोर्लेखा सोमराजी पुष्पोदये ऋतुकाले सुखाम्बुना पीत्वा योषित सामर्थ्यात् पृषमपुत्रा पुत्रिणी भवत्यश्वगन्धाशृतक्षीरेण भोजन कुर्वाणा ॥

वन्ध्यापि सप्ताहमिमप्रयोग
करोति या हर्षवती सुगन्धि ।
प्रियवदा सद्व्रतशौचयुक्ता
सूते सुतान् सा नियमात् गुणाढ्यान् ॥

या स्त्री हर्षवत्यादियुक्ता सती प्रयोगमिम करोति सा वन्ध्यापि सती नियमादवश्य बहुगुणान् सुतान् सूते ॥

स्निग्धैरुष्णैर्मधुरै
र्हरतिगदान् वातजान् युता पैत्तान् ।
तिक्तकषायमधुरकषायै
कफजा त्रिफलारसमधुभ्या च ॥

स्निग्धादिभिर्युता सोमराजी वातजान् गदान् हरति । तिक्तादिभिर्युता पत्तान् गदान् त्रिफलारसमधुभ्या युक्ता कफजान् गदान् ॥

इति शमनीयमन्येय
विषगरभूतेपनर्गवाप्मत्री ।
गेहे स्थितापि रेखा
चान्द्रमसी किमुत कोष्ठस्था ॥

चान्द्रमसीरेखा सोमराजी गेहे भवने स्थितापि इति शमनीत्यादिगुणा किमुच्यते कोष्ठस्थानस्यादिस्थसृष्टि ॥

मनुष्यमभ्यागतमृत्युशासन
प्रणष्टबुद्धीन्द्रियमल्पचेतसम् ।
अवल्गुजो मोक्षयते महाभया-
च्छ्रिय च मेधां च ददाति पुष्कलाम् ॥

मनुष्यमपि शन्दादीपितमभ्यागतमृत्यु शासनत्वादिगुण महाभय दक्षगुणो मोक्षय । सुरोधम् । इति सोमराजीकल्प ॥

॥ इतो वचा ॥

हैमवत्या वचाया• पिण्डमामलकमात्र पयसालोड्य पिबेज्जीर्णे पयस्सर्पिरोदन इत्याहार• । एव सप्तरात्रेण मेधावी भवति । स भवि सप्तरात्रे श्रुतधरो वर्षशतमजरद्द्यादि समान पूर्वेण ॥

हैमवत्या इत्यादि । हैमवतीति श्वेतव चाया नाम । शेषं व्याख्यासमम् ॥

इतरस्या अपि वचाया द्विपलकाथ पिबेत् जीर्णे पय सर्पिरित्यादि समान पूर्वेण । तच्चूर्ण वा क्षौद्रसर्पिर्भ्या यथाबलमवलिह्यात् । जीर्णे पय सर्पिरित्यादि समान पूर्वेण ॥

इतरस्या इति कृष्णाया । पयस्सर्पिरित्यादिनानेन सप्तरात्रेत्यपि गृहीतम् ॥

वचा कल्कशतपाक घृतद्रोणमुपयुज्य विशेषात् ग्रहोन्मादापस्मारगलगण्डमालार्शी पद्स्वरभेदविमुक्त सर्वार्थेषु सिद्धिमान् वर्ष शतायुर्भवति ॥

घृतद्रोणपाके फलपरिभाषया वचा योज्या यावद्धृत पाकामाम् । इति वचाकल्प ॥

॥ इतो लशुनम् ॥

शीतवातहिमदग्धतनूना
स्तब्धभग्नकुटिलव्यथितास्थ्नाम् ।
भेषजस्यपवनोपहतानां
वक्ष्यते विधिरतो लशुनस्य ॥

शीतेत्यादि । अतोऽनन्तर शीतादिदग्धतनूना लव्धास्थ्यादीना च पुसा भवजस्य लशुनस्य विधिरुच्यते ॥

राहोरमृतचौर्येण लूनाद्यपतिता गलात् ।
अमृतस्यकणा भूमौ ते रसोनत्वमागता• ॥
द्विजानाश्नन्तिनमतो दैत्यदेहसमुद्भवम् ।
साक्षादमृतसम्भूतग्रामणी• सरसायनम् ॥
शीलयेल्लशुन शीते वसन्ते च कफोद्भवे ।
घनोदयेपि वात.चे सदा वा ग्रीष्मलीलया ॥
रक्तपित्तभवारोगा जायन्ते रक्तपित्तिन ।

राहोर्गलादमृतचौर्येण लूना लूनात् भ नन्तर विष्णुना छिन्नादमृतस्यकणा ये भूमौ पतितास्ते रसोनत्व प्राप्ता । अत एव हेतोस्त लशुन दैत्यदेहसमुद्भव द्विजानाश्नन्ति । स च लशुन साक्षादमृतसम्भवग्रामणी श्रेष्ठ रसायनम् । शेष व्याख्यासमम् । मतिमली-ला ऋतुचर्योक्त शीतापचार ॥

मास परोस्वरसकल्कनिषेवणाय
स्वच्छ दमप्युपदिशन्तिनिमर्दकैस्तु ।
षण्मासमन्यविधिना न तु श नमाहु
पक्षप्रयोगमपिहीनतर रसोने ॥

अस्य लशुनस्यरसस्य वा कल्कस्य वा निषेवणाय परउत्कर्षोमास इति वदन्ति । मासादूर्ध्व रसो वा कल्को वा न योज्य इत्यर्थ । अपरे तु दोषाद्यपेक्ष स्वच्छन्द यथेच्छ निमर्दकैः सह षण्मासमप्युपदिशन्ति । अन्येन वि-

सम' पिष्टं सार्षपासयुतं वा
निर्यासेन म्वेनयुक्तं च कामम् ।
युञ्जीतैनं पूर्वकैरेवपानैं
कोष्णाम्भाभिर्वेषकल्पोऽतिवीर्यं ॥

अथवैनं लशुनं सम्यक् पिष्टं सार्षपैः स्वेन रसेन वा मधुन पूर्वोक्तैव मद्यादिभिः पानैर्युक्तं कोष्णाभिर्वाद्भिर्वेच्छया युञ्जीत । एष लशुन कल्पोऽतिवीर्यो भवति ॥

रसोनकल्कं सदृशाजसर्पि
षण्मासमुर्व्यामुषितो निहन्ति ।
अभ्यङ्गपानाञ्जननस्ययुक्तो
मनोविकारान् विषमज्वरं च ॥

रसोनकल्कः सदृशेनाजेनसर्पिषा सह ष ण्मासमुर्व्यां भूमौ निखातस्ततोऽभ्यङ्गादिषु यो जितो मनोविकारान् विषमज्वरं च निहन्ति ॥
समतैलं सशुक्तं वा यवराशौसमास्थितम् ।
वातरोगान् जयेत् खादन् घृतमासोत्तराशन ॥

अथवा समतैलं सशुक्तं शुक्तेनयुतं वा लशुनं सवत्सरं यवराशौ स्थितं खादन् पुरुषो घृतमांसोत्तराशन सन् वातरोगान् जयेत् ॥

तैलसर्पिर्गुडसिता पृथक्कुर्यात्तुलोन्मिता ।
द्वेतुलेलशुनाच्छुद्धात् म्यूषणात् कुडवत्रयम् ।
पलत्वचश्च तच्श्लक्ष्णं निहितं घृतभाजने ।
द्वेसमेयवमध्यस्थं पूर्वस्मादधिकं गुणैः ॥

तैलादिकं घृतभाजने निहितं द्वे समे स वत्सरौ यवमध्ये स्थितं गुणैः पूर्वस्माद्रसायना- दधिकम् ॥

क्षुण्णां क्षिपेत् कन्दतुलां तक्रस्यपलविंशतौ ।
गते च सप्तरात्रे तु तुलार्द्धमभितात्त्रिजात् ॥
धौतक्षुण्णात् पृथक्क्षौद्रघृतशुण्ठी चतुष्पलम् ।
अजाजीचव्यधान्याग्निद्विकृष्णाग्रन्थिदीप्यकान्
पलोन्मिताश्चतुर्जातात् पलमेकंसुचूर्णितम् ।
पृथक्पलाष्टकं तैलाद्घृतात्शुण्ठाञ्चसर्षपात् ॥
पट्टनिपश्च क्षाराद्दौ दद्यात्तत्राक्षमानतः ।
एकादशाह तद्धान्ये स्थितमश्नन् प्रगेप्रगे ।
गुणानरासायनान्सर्वानयमाप्नोतिनिरामयः ॥

क्षुण्णामित्यादि सुबोधम् । कन्दो ल- शुनकन्दस्तस्यतुलापलशतं तां । धौतक्षुण्डा- दिति तिलविशेषणम् । प्रगेप्रगे प्रातःप्रातः । रासायना गुणा शिर्षायुष्यादय ॥

द्विपश्चमूलनिष्काथे नलवणं लशुनाढकम् ।
पिष्टपर्युषितवर्षं हन्ति वातकफामयान् ॥

द्विपञ्चमूलेत्यादि व्याख्यासमम् ।
[द्विपञ्चमूलं महत्स्वल्पं च तस्य निष्काथे नलवणे द्रोणे पिष्टं वर्षं पर्युषितं लशुनाढकं वातकफाम- यान् हन्ति ॥ ]

तत्कन्दकल्कस्वरसे घृततैलं पृथक्पचेत् ।
शीलयेच्च यथासात्म्यं दारुणानलपीडितः ॥

तत्कन्देत्यादि लशुनकन्दस्वरसे तत्कल्कं घृतं तैलं वा पचेत् तच्च यथासात्म्यं दारुणेन बलवतानिलेन पीडितो नरः शीलयेत् ॥

नवनीतसमायुक्तं वा खादेत्तत्कल्कमर्दितौ ॥

दृत्वा शुभे दृढे च स्नेहपात्रे निक्षिपद् पश्चात् परतः क्रमेण शालिपिष्टप्रस्थचतुष्टय दद्यात् । सुबोधम ॥

निरान्नमुषितो धेनु लशुन खादयेत्तत' ।
क्षीरदध्याज्यमथित ब्राह्मणस्यापि शस्यते ॥

त्रीणि लङ्घनानि धेनु गा कारयित्वा नित्य लशुन खादयेत् । ततस्तस्या क्षीरादिक ब्राह्मणस्यापि शस्यत इत्याचार्यस्य देशसिद्धा काश्मीरका । वयमेतन्नविद्मः । [लशुन खादयेद्यस्तु स्वधर्मनिरतान् द्विजान् । वैद्यः पापस्य तस्याशु विलाम खादयेन्नृप ॥ ]

पित्तरक्तविनिर्मुक्त समस्तावरणादृते ।
शुद्धे वा विद्यते वायो न द्रव्य लशुनात्परम् ॥

पित्तावृत रक्तावृत च वात वर्जयित्वा न्यस्मिन्नावृते वायौ शुद्धे वा वायौ लशुनात्पर द्रव्य न विद्यते ॥

सुखावाप्तना विशेषेण प्रयोज्यो लशुनासव ।
नारदेनोद्धृतस्यैप वातभग्नस्य कल्पित ॥

सुखावाप्तनामित्यादि व्याख्यासमम् । उद्धवो नाम वृष्णीना राज ॥

आमाम्बुपानेक्षुविकारमत्स्य-
यानाध्ववातातपभाष्यचिन्ताः ।
स्वप्न दिवाजागरण निशासु
पिष्ट व्यवाय दधिचात्रनेच्छेत् ॥

अत्र च लशुनप्रयोगे आमाम्बुपानादि नेच्छेत् ॥

स्नेहकल्पविधानेन स्नेहयुक्त प्रयोजयेत् ।
लशुन स्नेहसयोगात् गरीयान् जायते ।हि सः॥

स्नेहकल्प स्नेहयोग । स्नेहसयोगादित्यादि स्नेहयुक्तप्रयोग हेतु' । स इति लशुन. ॥

पित्तकोपभयादन्ते युञ्ज्यान्मृदुविरेचनम् ।
रसायनगुणानेव परिपूर्णान् समश्नुते ॥

पित्त इत्यादि । अन्ते लशुनप्रयोगस्यावसाने । एवमिति विरेचनान्तेनानन्तरोक्तेन ॥

प्रियाम्बुगुडदुग्धस्य मासमद्याम्लविद्विष ।
अतितिक्ष्णोरजीर्ण च रसोनो व्यापदे ध्रुवम् ॥

अम्ब्वादिप्रियस्य मासादिविद्विषश्चाजीर्णचातितिक्ष्णोऽस्यक्तुमनिच्छत पुसो रसोनो ध्रुव व्यापदे भवति ॥

पाण्डूदरोर'क्षतशोफतृष्ण-
पानात्ययच्छर्दिविषव्रणेषु ।
पैत्ते विकारेक्षिगदेतिसारे
क्षामे शरीरे च सवर्जनीय ॥

स लशुन सर्वथा पाण्ड्वादिषु वर्जनीय ॥

शिलित एष करोतिदुराप
वह्निशरीरबल समवेर ।
वाङ्मतिरूपगुणाढ्यसुतेरसो
स्त्रीपुरुपस्य च १ बीजविशुद्धिम् ॥

१ [बीजसमृद्धिमिति च पाठ ॥ ]

एव रसोन' शीलित सन् समसेवैक कालमेव वह्नि शरीरस्य च दुराप बल करोति। यश्च । स्त्री वा पुरुषो वा वामानाद्य सुत प्राप्तुमिच्छति तस्य बीजविशुद्धि करोति ॥

अमृतकणसमुत्थ योरसोन रसोन
निरियुतमितिलादेश्छीतकालसदैव ।
स नयति शतजीवी स्त्रीसहायोचरान्न
कनकरुचिरवर्णो नीरुजस्तुष्टिपुष्ट ॥

स पुरुषो रसोन लशुन अमृतकणसमुत्थत्वादिरनाय रसोन निलकणपचरममनन्तरोक्तेनप्रकारेण निरित युत शीतकाले सदैव खादेत् स वर्षशतजीवित्वादिगुणो जरान्त नयति । स्त्रीसहायशब्देन वृष्यत्वमुक्तम् । इति लशुनकल्प ॥

॥ इति पलाण्डु ॥

रसोनानन्तर वायो' पलाण्डु परमौषधम् ।
साक्षादिवस्थित यत्र शक्राधिपतिजीवितम् ॥

रसोनानन्तरमिति । वायो पलाण्डु परमौषध रसोनानन्तर लशुनसमम् । यत्र पलाण्डौ शक्राधिपते. शक्रनायकस्य जीवित साक्षादिवस्थितम् ॥

यस्योपयोगेन शकाङ्गनाना
लावण्यसारादिविनिर्मितानाम् ।
कपोलकान्त्याविजित शशाङ्को
रसातल गच्छति निर्विदेव ॥

यस्य पलाण्डोरुपयोगेन हेतुना शकाङ्गनाना कपोलकान्त्या विजित शशाङ्को निर्विदेव प्रतिदिन रसातल गच्छति । किंभूतानामाह । लावण्यसारादि विनिर्मितानाम् ॥

स्निग्धाङ्गत्व गौरता कान्तिमत्ता
वह्नेर्दीप्तिर्दीर्घमायुर्बल च ।
सम्प्राप्यन्ते यस्य सङ्गेन मुक्तै
र्योगाभ्यासाद्वाग्मित्वं सुख च ॥

यस्य च पलाण्डोरभ्यासानन्यगा हेतुना हेयर मुक्ते पुरुषै स्निग्धाङ्गत्वादि प्राप्यते तथा धारीरायुर्दीर्घमायु सुख चाप्यते ॥

अप्याहारे शीलितो दीर्घरात्र
वल्यश्चक्षुष्यस्तर्पण स्थैर्यकारी ।
तैस्तैर्योगैर्योजितोय पलाण्डु
स्वास्तानातङ्कान् मेहिनामुच्छिनत्ति ॥

न केवल च पृथक्प्रयोगेन यावदाहारे व्यय पलाण्डुर्दीर्घरात्र चिरकाल सेवितो वल्य त्वादिगुणा भवति । स च मेहिना तैस्तैश्चिकित्सितोक्तैर्योगैर्योजित स्वस्वान् मेहसहजानातङ्कान् रोगानुच्छिनत्ति नाशयति ॥

रसरसोनवत्तस्य पीताग्नीधातथैव च ।
सवीजपूरस्वरस मदिरामधुशीधुष ॥

पलाण्डुरसस्य तु प्रयोगे च भोजनस्य च विधान लशुनवत् । एतदुक्तत्वे बीजपूरस्वरसाद्यनुप सन् रस रसोनवदिति ॥

मरतकमणिनील नाळमत्स्यातिनाल
परिणतशशिगौर यवराजि सुपिष्टम् ।
ससुरससुमुखाभ्यां माज्यमास मशुक्त
मृदुधवलसुवृत्तैर्मण्डकैरात्तमूर्तिम् ॥

बहुश शोभित शुभ्रै शशाङ्कशकलोपमै ।
धारिकण्डरिकावल्लै क्षीरोदारयवैरिव ॥

यवमुद्गमाषगोधू-
मबहुविधविकारकल्पितान् भक्ष्यान् ।
काम्बलिकरागपाडव
सट्टकभजकान् सफलसारान् ॥

पटुसुरभिसुगन्धान्
धवलाक्षधवलबहुलरसान् ।
खर्जूरदाडिमसिता
द्राक्षा पानानुपोभ्यसेवेत् ॥

अस्य च पलाण्डोर्नाळं च बीज च म-ण्डकैरात्तमूर्तिं गृहीतशरीरमश्नीयादितिमन्त्र-ध्यते । यवादीना च बहुविधैर्विकारैः कल्पि-तान भक्ष्यान् काम्बलिकादींश्च भोजनोपयोगि-न खर्जूराद्यन्यतमकृतपानानुप सम्भ्यस्येत् । मरतकमणिनीलमिति नाळविशेषणम् । परि-णतशशिगौरमिति सुपिष्टबीजविशेषणम् । सुर-ससुमुखौ हरितकविशेषौ । प्राज्यमासमिति सशुक्तमिति चोभयविशेषणम् । मृद्वादिक म-ण्डकविशेषणम् । अन्यच्च किम्भूत नाळ बीज चेत्याह । बहुशोनेकवार शुभ्रै शुक्लैश्चन्द्रख-ण्डोपमै धारिकादिभि शोभितम् । ते च धा-रिकादय शुक्लत्वात् क्षीरोदस्य, दुग्धसिन्धोरव यवा इवेति प्रतिभासन्ते । धारिका माषादि-भिर्द्विधिमिश्रै कृता सच्छिद्रा वटका वल्ला शिम्बीजयवादीना बहुविधैर्विकारैर्य कल्पिता भक्ष्यास्ता । काम्बलिकादय सुश्रोक्तलक्षणा । फलसारो दधित्थ । पटुत्वादिगुणगन्धानित्या-दि काम्बलिकादिविशेषणम् । धवलाक्षकेन पलाण्डुना धवल शुद्धो बहुलश्च रसो येषाम् । खर्जूरादिभि कृता पानास्तथोक्ता ॥

लभतेबलवर्णाजो वीर्यस्वरसौ मनस्यतेजासि ।
क्षीणशक्रुधिरोपि च रसोनवत्तद्रस पीत्वा ॥

तस्य च पलाण्डो रस रसोनवत् रसोन-रसमिव पीत्वा क्षीणशक्रुधिरोपि सन्नमलरक्त-धातुरपि बलादीनि लभते । इति पलाण्डु कल्प ॥

॥ इति कुक्कुटी ॥

सुरासुरै क्षीरसमुद्रमन्थे
गतास्ततान् येऽमृतविप्रुषःपुरा ।
बभूवतेभ्य किलकुक्कुटीयया
व्रजन्ति देवत्वमिवाथमानुषा ॥

पुरा कस्मिंश्चित् कालाशे सुरासुरै क्षीर-समुद्रस्य मन्थने येमृतस्य विप्रुषस्ततान् गता-स्तेभ्य कुक्कुटीबभूव किलेत्यागमदर्शनाय । यया कुक्कुट्योपयुक्तयाद्य कलौ मानुषादेवत्व व्रजन्ती-वेति ॥

कुक्कुटाण्डनिभे कन्दे किञ्चित्कटुकापिच्छिलेः
॥

अस्या लक्षणं कुक्कुटाण्डनिभैः कन्दैरित्यादिनाह । कटुकापिच्छिलैरिति कन्दविशेषणम् । क्षिरैरित्यादि तच्छदानां विशेषणम् । कटुकः क्षारः ॥

निखिलरोगहरापि विशेषतो
जयतिदारुणमप्यनिलामयम् ।
गुदजगुल्मतमो विषनाशिनी
जनयतिस्थिरतां वपुषः पराम् ॥

सा च कुक्कुटी सकलरोगहरापि सती विशेषतोऽनिलामयं जयति च । न कश्चिदेवापि तु दारुणमपि । न च केवलं गुदजादिनाशिनी अपि तु वपुषः परां सुतरां स्थिरतां जनयति ॥

कुटींप्रविश्यपलतस्कन्दान् भक्षयेत्घृतभर्जितान् ।
पयोनुपानं धारोष्णं तत्मिष्टमसनाम्बु वा ॥

तन्मात्रवृत्तिस्तु भवेद्दशाहं
विंशत्यहं स्यादसुगप्रमादी ।
जरूर्ध्वकोष्ठानिकसन्निपात
पाण्ड्वामयार्शस्तिमिराणि जित्वा ॥

वलीपलितनिर्मुक्तः स्थिरकेशद्विजश्रुतिः ।
मेधामतिस्मृतियुतो जीवेद्वर्षशतद्वयम् ॥

कुटीं प्रविश्येति वातातपनिषेधः । शेषं व्याख्यासमम् । तत्र च धारोष्णं पयोनुपानमिष्टमथवासनोदकम् । दशाहं च तन्मात्रवृत्तिर्भवेदस्याः कन्दान्येव भुञ्जीत न यवान्नादिकमिति । ततोनन्तरं विंशत्यहं स्यादप्रमादी च स्यात् । प्रतिषिद्धानां सेवाप्रमादः । अनेन जरूर्ध्ववातादीन् जित्वा वलीपलितनिर्मुक्तत्वादियुक्तो वर्षशतद्वयं जीवेत् ।

आपूर्यमाणचन्द्रप्रतिपदमारभ्यवर्द्धयेत्कन्दम् ।
एकैकं घृतमृष्टं प्राग्भक्तं पथ्यभुक्खादेत् ॥

भुञ्जीतात्वतरं दिनार्धितमपि
पक्षक्षये भक्षयन्
क्षीरबीजकवारितक्रमथवा
पीत्वास्थितिं कल्पयेत् ।
मासं प्राश्य तथा नरस्त्विद्विजरुचे
शीर्णोस्थितै कान्तिमान्
जीवत्यब्दशतत्रयं धृतिमति
स्मृत्यादिभिर्भूषितः ॥

आपूर्यमाणचन्द्रायां प्रतिपदि कुक्कुट्या एकं कन्दं घृतमृष्टं प्राग्भक्तं भोजनप्रारम्भे भक्षयेत् । ततः प्रत्यहमेकैकं कन्दं वर्द्धयेत् अत्र च प्रत्यहमेव ह्रासयेत् । एतस्यानन्तरं पथ्यं भुञ्जीत अपितुनिवृत्तिः सक्षितिः पक्षचन्द्रवद्वृद्धिः । पक्षक्षये च कन्दं भक्षयन् क्षीरादीनामन्यतमं पीत्वा स्थितिं कल्पयेत् नान्नं भुञ्जीतेत्यर्थः । एवं मासं प्राश्य नखादिभिः पूर्वं शीर्णैः पश्चादुत्थितैर्युक्तः कान्तिमान् धृत्यादिभूषितोऽब्दशतत्रयं जीवति ॥

क्षीरेण कन्दचूर्णं
पिबन्नन्नं च परिणते मासम् ।
लवणस्नेहविहीनं
दृढदर्जीवेच्छरद्विशतम् ॥

कुक्कुटीकन्दचूर्णं क्षीरेण पिबेत्तस्य च परिणतौ लवणस्नेहविहीना यवागूं पिबेत् । एवं च मासं कुर्वन् पुरुषो दृढया दंष्ट्रायुक्तः शरद्विशतं जीवेत् ॥

तिमिरं क्षौद्रघृताभ्यां
पथ्यभुजस्तद्रजो जयेन्मासात् ।
कन्दत्रयं च भृष्टं
घृतेऽश्नतो भक्षितं वातान् ॥

तद्रजः कुक्कुटीकन्दाद्रजः क्षौद्रघृताभ्यां युक्तं मासप्रयोगात् पथ्यभुजः पुरुषस्य तिमिरं जयेत् । कुक्कुटीकन्दत्रयं घृते भृष्टं भर्जितं भक्षितं सदश्नतः पूर्णं भोजनं कुर्वतश्चशब्दान्मासप्रयोगाद्वातान् जयेत् ॥

तत्कन्दसूक्ष्मरजसा
त्रिभागगोधूमचूर्णमिश्रेण ।
पयसा पक्त्वा खादेत्
घृतपूरानान्त्रवृद्धिहरान् ॥

कुक्कुटीकन्दसूक्ष्मचूर्णेन गोधूमचूर्णत्रिभागेन क्षीरेण च कृतान् घृतपूरानान्त्रवृद्धिहरान् खादेत् ॥

त्रीन् कन्दकान् निशि भक्षयनाज्यभृष्टान्
धात्रीफलाबुसमितं छगलीपयो वा ।
पेयं द्रागामयजयाय निषेवितव्या
कामं च रोगशममात्रफलार्थिभिः सा ॥

त्रीन् कुक्कुटीकन्दकान् घृतभृष्टान् निशि भक्षयता पुरुषेण धात्री ... छगलीपयो वा पेयम् । किमर्थमित्याह । द्रागामयजयाय । न केवलं चैव ... प्रयोगो यावत् सा कुक्कुटीरोगोपशममात्रफलार्थिभिः पुरुषैः कामभिच्छया निषेवितव्या । इति कुक्कुटीकल्पः ॥

॥ इति कञ्चुकी ॥

क्षीरान्विता मूलकतुल्यकन्दा
सप्ताष्टपत्रासितरक्तकाण्डा ।
बिभर्ति या पल्लवमब्दशब्दात्
सा कञ्चुकी श्वेतवपुर्वरेण्या ॥

क्षीरान्वितेत्यादिलक्षणाया ओषधिः सा कञ्चुकीति बोद्धव्या । सप्त वा अष्टौ वा पत्राणि यस्याः सा तथोक्ता अब्दशब्दान्मेघस्तनितात् पल्लवान् बिभर्ति वरेण्या श्रेष्ठा ॥

आषाढेकार्त्तिके गाढं तत्कन्दं शीतलेस्थितम्
अङ्गुष्ठपर्वद्वयसपिष्टं क्षीरपलाष्टके ।
कुटीप्रवेशस्तं पीत्वा क्षीरमेव पिबेत्तु ॥
क्षीरमेव च जीर्णेपि पेया वा स्नेहभर्जिताम् ।
किञ्चिदुष्णामलवणां स्पृशेदुष्णाम्बुनो हिमम् ।
एकेन सप्तरात्रेण कुष्ठान्येव नियच्छति ॥
सर्वव्याधीन् द्वितीयेन तृतीये न तु सर्पवत् ।
त्यक्त्वात्वचं ततो जीर्णां केशदन्तनखानपि ॥
श्रीमेधारूपवान् जीवेत् पञ्चवर्षशतानि च ।

आषाढ इति शीतप्रदेशे स्थितमङ्गुष्ठपर्वद्वयसं अङ्गुष्ठपर्वप्रमाणं यस्य ... यस ... प्रमाणं द्वयसन्प्रत्यय

वहेपा पादशेषे च पृथगर्द्राढकेन च ।
पचेत् काञ्जिकमस्तुभ्यां घृतप्रस्थं पिचून्मितैः ॥
शताह्वाम्बुकरचा कुष्ठैलात्वग्हिङ्गुभिः ।
सौवर्चल्गान्वितैः पद्मकेसराद्यविभिः पलैः ॥

पञ्चभिः पद्मबीजानां पद्मद्रादशकेन च ।
एतत् सोमामृतं पीत्वा यत्सोमोऽपि राजते ॥

इदमुपयुज्य सर्पिरतिवीर्यमुदारगुणं
भवति सुवाक्सुधीः सुदृढसुमन्युः सुभगः ।
ग्रहपरकोपमार्गविषभीतिभिरप्यपरः
विजितजराज्वरो नयति वर्षशतद्वितयम् ॥

अष्टौपलानीत्यादिना सोमामृतं नाम घृतं भवति । यत् सोमः शशाङ्कः पुरा पीत्वा अपि राजते । अतिवीर्यमुत्कृष्टगुणं चेदमुपयुज्य नरः सुवाक्त्वादियुक्तो भवति । ग्रहादिभिश्चाप्रधृष्यो निर्जितजराज्वरः सन् वर्षशतद्वयं जीवति । शताह्वाद्यादयः । सिक्ता या प्रत्येकं पलचतुष्टयम् । इति वचुकी घृतम् ॥

॥ इतो गुग्गुलुः ॥

दानवेन्द्रविजितान् पुरा सुरान्
भ्रष्टकान्तिधृतिधैर्यतेजसः ।
वीक्ष्य विष्णुरमृतं किलासृजत्
गुग्गुलुं पलपुञ्जयप्रदम् ॥

पुरा पूर्वं कस्मिंश्चित् काले दानवेन्द्रैर्विजितान् सुरान् भ्रष्टकान्त्यादीन् दृष्ट्वा विष्णुर्बलादिप्रदं गुग्गुलुममृतं किलासृजत् किंवदन्त्यागमे ॥

अप्राप्यत सुरगणाः किल धूपमुख्यान्
हित्वा वरागरुतुरुष्कहिमेन्दुदर्पान् ।
निर्दह्यमानवपुषोऽपि शिखाः पिबन्तो
गन्धेन यस्य शुचिता दधति प्रमादम् ॥

अत उक्तान्ते सुरगणा दिवौकसो धावविन्द्रेषु वरा गरादीन धूपमुख्यान् हित्वा त्यक्त्वा यस्य गुग्गुलोः शिखा धूमलेखा पिबन्तो निर्दह्यमानशरीरा अपि परं प्रसादं दधति धारयन्ति ॥

सयोगग्राही सशिवः समार्गः
सर्वर्तुसेव्यः सुखशीलनीयः ।
हन्ता जरापाण्डुमहामयानां
कर्ता प्रमेधास्मृतिपाटवानाम् ॥

स इति गुग्गुलुः । योगग्राही योगैरेव स प्रयुज्यते यदि तर्हि स्वगुणानजहन् तस्य गुणान् गृह्णाति । शिवः श्रेयस्करः । सर्वर्तौ हितः मार्गः । सुखोपमः । जरादीनां हन्ता । प्रमेधादीनां कर्ता ॥

गन्धोत्कटः सदाहे
स्निग्धः सपिच्छिलो निगतशल्यः ।
महिषाक्षः पुष्पराग
स्फटिकाभसितनीरदच्छायः ॥

यः पद्मरागरागो
यः कनकच्छेदपाटलो यो वा ।
जयतीन्द्रनीलममलं
भग्नोऽप्यतिकान्तिमत्त्वेन ॥

श्रेष्ठः प्रयोगोऽस्य तुला पलान्येवाधिकं पिबेत् ॥

कन्द आषाढे कार्त्तिके वा मासयास्त गृहीत क्षीरपलाष्टकेऽष्टपालिके क्षीरे पिष्ट ततश्च च कन्द कुटीप्रवेश पीतानुक्षीरमेव पिबेत् । अभिश्च जीर्णपि क्षीर पिबन् पेया वा घृतभर्जितत्वादियुक्ताम् । हिम जल न स्पृशेत् । एकेनेत्या दिना सप्तरात्रेषु क्रमेण गुणातिशयो व्याख्यामम ॥

कञ्चुकीकन्दचूर्णं वा स्वेन क्षीरेण भावितम् ॥
गोक्षीरकुडुबेऽन्यस्त कर्ष खण्डपलान्वितम् ।
पीत सर्वामयान् हन्ति नराक्रेशमिथतानपि ॥

कञ्चुकाकन्दचूर्णस्य स्वरसमाभावितस्य कर्ष खण्डपल चेतिगोक्षीराष्टपलेन पीत नराकेशाश्रितानपि सर्वामयान् हन्ति ॥

पीत तत्स्वरसचूर्ण तस्या मधुघृतान्वितम् ।
खादन्हिताशी सप्ताह त्वग्दोषास्तिमिरजयेत् ॥

तस्या कञ्चुकस्याश्चूर्णं भावनया पीतकञ्चुकीस्वरस मधुघृताभ्यामन्वित हिताशी पुरुष सप्ताह खादन् त्वग्दोषास्तिमिर च जयेत् ॥

विडङ्गताप्यत्रिफला लोहकञ्चुकिज रज ।
सप्तरात्रत्रय लिह्यान्मधुना सयतेन्द्रिय ॥
क्षीरेण भोजन जीर्णे शालेर्लावरसेन वा ।
तथास्य काचतिमिरे शुक्रच्छा शिरसो गदाः ॥
मेधाविन प्रणश्यन्ति गात्र सुप्त च बुध्यते ।
एष सप्तामृतश्चूर्णः सर्वव्याधिषु पूजितः ॥

विडङ्गादीना सप्ताना चूर्णो माक्षिकेणैकविंशतिदिन सयतेन्द्रियेण सता लीढ का च तिमिरे शिरोरोगाश्च नाशयति मेधा जनयति त्वग्दोषेण च सुप्तगात्र बोधयति । नाम्ना स सप्तामृत सर्वव्याधिहरश्च ॥

पल चूर्णस्य कञ्चुक्या क्षीरप्रस्थे समावपेत् ।
स्नेहवत्स्ततो लिप्ताल्लिताम्रा ससिता मधु ॥
शालेरन्न पय पान मासमेव प्रयोजयेत् ।
चतुर्गुण परीहार पोडशाब्दसमद्युति ॥
शतानि पञ्चवर्षाणा जीवेद्देव इवोर्जित ।

कञ्चुकीजात द्रव्ये नवनीतप्रयाग ध्रुवोध । षोडशवर्षेण यूना समकान्तिमन देव इवोर्जेयायुक्त पञ्चशतवर्षाणि जीवति ॥

पचेत् पलानिद्रोणेपा कञ्चुक्याःपञ्चविंशति ।
अष्टांशशिष्टेतु घृतात् प्रस्थ क्षीरसम पचेत् ॥
शङ्खपुष्पीवचाकुष्ठगिरिताम्रदारुभि ।
वरायष्टीसिताद्राक्षा महिषाक्षै पलांशिकैः ॥
युक्ते कमलकिञ्जल्क त्रिपलेन हिमेन च ।
क्षौद्राच्चतुष्पल दद्यादेतन्मर्त्यामृताह्वयम् ।
चक्षुष्य बृहण मेध्य वर्ण्य वर्पशतप्रदम् ॥

पचेत् पलानीत्यादिना मर्त्यामृतनाम घृत सुबोधम् । शङ्खपुष्पादिभि पलांशिकै पद्मकिञ्जल्कात् त्रिपलेन युक्तैरिति सम्ब ध । अत्र च हिम इति शीतीभूते । महिषाक्षो गुग्गुलु ॥

पचेत्पलानिकञ्चुक्याद्रोणिन्नोहात्सुचूर्णितात् ।
पलाशबीजाच्चत्वारि दद्याद्वे च फलत्रयात् ॥
अष्टादशशतावर्या बीजकस्यैकविंशति ।
जीवन्त्या षोडशैकध्य पौर्णमास्याविपाचयेत् ॥

विशेषाच्छोफवीसर्प दुष्टव्रणभगन्दरान् ।
शुक्रार्तवमनोदोष प्रमेहश्वित्रपाडुता ॥

पटोलादीना पृथगष्टभि क्काथैयुक्तो गुग्गुलु पथ्यपरस्य पुसो योगान् कफपित्तरोगान् हन्ति । शोफादीन पाण्डुतान्तात्रोगान् विशेषाद्धन्ति । दोषशब्दो रोगपर्याय, शुक्रादित्रयेण सम्बध्यते ॥

पटोलारिष्टनिर्यूह पिष्टस्तुल्यरसाञ्जन ।
गळरोगापची व्यङ्गग्रन्थस्थालपक्कामिमणुत् ॥

पटोलनिम्बयो क्काथेन पिष्टस्तुल्यरसाञ्जनो गुग्गुलु गळरोगादिक प्रकर्षेणनुदति ॥

शिलाजतुसम पीत' पयसा वातशोणितम् ।
निवर्तयत्यतिबल क्षीरमासघृताशिन ॥

शिलाजतुना समो गुग्गुलु पयसा क्षीरेण पीतोऽतिबल वातशोणित क्षीराद्यशनशीलिन पुसो निवर्तयति ॥

रसेनपयसा मूत्रैर्वातपित्तकफापह ।
ब्राह्मी मण्डूकशङ्खानां पृथङ्मेधादिकृद्रसै' ॥

मासरसेनयुक्तो गुग्गुलुर्वातापह । पयसा क्षीरेण पित्तापह' । मूत्रेण कफापह । ब्राह्म्यादीना पृथग्रसैर्युक्तो मेधादिकृत् आदिशब्देन स्मृत्यादीना ग्रहणम् ॥

मागधिकाग्निकालिङ्गविडङ्गै–
र्विल्वघृतै सवरापलषट्कै' ।
गुग्गुलुनासदृशेनसमेतै
क्षौद्रयुतै' सकलामयनाशः ॥

मागधिकादिभिश्चतुर्भिर्बिल्वघृतैः प्रत्येक पलप्रमाणैस्त्रिफलायाश्च प्रत्येक द्विपलैरेतैश्च सर्वै सदृशेन समेन दशपलेन गुग्गुलुनासमेतैर्युक्तैस्तश्च क्षौद्रद्रुतै सकलामयाना नाशो भवति ॥

पिबेत् पलशत योस्यविधिना नियतो यति' ।
नाकालमृत्योर्व्याधिभ्यो नैतस्यनरसो भयम् ॥

अस्य च प्रकृतस्य गुग्गुलो पलशत यः पुरुषो नियतो नियतेन्द्रिय यति ब्रह्मचारी च पिबेत् तस्या कालमृत्योर्व्याधेर्जरसश्च भय न भवति ॥

कल्पयेदौषधैः स्वैस्वैर्व्याधिषुव्याधिनाशनै ॥

सर्वेषु च व्याधिषु स्वै स्वैश्चिकित्सितनिर्दिष्टव्याधिना शनै सह गुग्गुलु कल्पयेत् ॥

शिलाजतुविधान च गुग्गुलो. सर्वमिष्यते ॥

अस्य च गुग्गुलोर्वक्ष्यमाण शिलाजतुविधानमपि सर्वमिष्यते शिलाजतुवत् सोपि योक्तव्य इत्यर्थ ॥

गुणनिधिरपिकुर्यात् सोतिमात्रोपयुक्त
स्तिमिरवदनशोपक्लीबताकार्श्यमोहान् ।
शमलशिथिल्यभाव देहगौरवं च तस्मा
द्रजनिचरनिषेवीस्यान्नरोगेष्वमीषु ॥

स च गुग्गुलु स्वभावेन गुणनिधिरप्युपकारनिधानमप्यतिमात्रोपयुक्त स्तिमिरादिक गद कुर्यात् । यतोस्य तिमिरादिकरणश-

स च महिषाक्षो गुग्गुलु श्रेष्ठ यो दाह उत्कटगन्ध स्निग्धादिरूपश्च । व्याख्यासमम् । अस्य च गुग्गुलो तुलाग्रहणं पर योग । अत ऊनोपि दोषानपेक्षया । प्रत्यहं च पला धिक नैव पिबेत् ॥

आत्रेयमुनिगीतश्च मन्त्रोय कर्मसिद्धिकृत् ।
भगवान् पुण्डरीकाक्षो देवाश्च सपुरन्दरा ॥
आनारयन्ति सम्पवरां ममाव नाद्रिवन्तिते ।
जरामरणदु खेभ्यः यथानेऽमृतेना सुरा ।
उपयोक्तु स्तथैवास्य भवन्तु हि महाबल ॥

भगवानित्यादिना श्लोकद्वयेनात्रेयमुनि गीत कर्मसिद्धिकृदय गुग्गुलुप्रयोगमन्त्रः सुबोध ॥

पञ्चमूलस्य महत काथेन हितभोजिना ।
गुग्गुलु शीलितोहन्ति सर्वान वातकफामयान्
लघीयसोपि तद्वच्च सुखोष्णेन जलेन वा ।
मस्तु धान्याम्लमद्यैर्वा वचादे सलिलेन वा ॥

स च गुग्गुलुर्महत पञ्चमूलस्य वा लघीयसो ह्रस्वस्य वा काथेनोष्णाम्बुना वा म स्वादीनामन्यतमेन वा वचादेर्गणस्य सलिलेन काथेन वा हितभोजिना शीलित सर्वान् वात कफेन कृतानामयान् व्याधीन् हन्ति ॥

वरणादेस्तुगाधिर्य दन्तकर्णशिरोरुज ।
स्वरभेदोदरश्वासवर्ध्मान्तगुल्मविद्रधीन ॥

वरणादेस्तुगणस्य सलिलेन शीलितो बाधिर्यादीन् विद्रध्यन्तानामयान् हन्ति । अन्तबृद्धो गुल्मविद्रधीभ्या सम्बध्यते ॥

वातपित्तास्रगेगेषु सूक्ष्मणार्थैर्निषेव्यते ।
काथेन वाजिगन्धाया जीवनीयगणस्य वा ।

अश्वगन्धाया क्वथेन जीवनीयगणस्य वा काथेनयुक्तो गुग्गुलु र्वातपित्तास्ररोगेष्विष्ट ॥ इत्यादिनि च पुरुष इष्यते ॥

दार्व्येनोत्पलमूलीका रक्तचन्दनसमना ।
वातपित्त निहन्त्येव पद्मकादिगणस्य वा ॥

एव गुग्गुलुस्त्वलादिजन्मना काथेन पद्मकादिगणस्य काथेन वा युक्तो वातपित्त निहन्ति ॥

चन्दनकुष्ठविदङ्गानां यवान्या नागस्य वा ।
मसारिण्यादि तोयन गुग्गुलु कफवातजित् ॥

चन्दनादिसपन्स्य वा यवान्यादीना वा काथेन युक्तो गुग्गुलु कफवातजित् ॥

स्यूषणाविष्मनवेल्लवराभि
भेक्षयन् समधून माहिषाक्षम् ।
आशु हन्ति कफमारुतमेदो
दोषजान् बलवतोपि विकारान् ॥

स्यूषणादीना सप्ताना नवसकर्गानामेकोभाग । द्वितीयो गुग्गुलोरित्येतत् भक्षयन् पुरुषो बलवतोपि कफादिजान् विकारानाशु हन्ति ॥

पटोलनिम्बात्रिफलागुडूची
गायत्रिदावीविद्यवनीजकानाम् ।
काथे पृथक्पथ्यपरस्य हन्ति
मासेन घोरान् कफपित्तरोगान् ॥

विशेषाच्छोफवीसर्प दुष्ट्रव्रणभगन्दरान् ।
गुल्मार्तवमनोदोष प्रमेहश्विलपाण्डुता ॥

पटोलादीना पृथगष्टभि काथैर्युक्तो गुल्गुलु पथ्यपरस्य पुसो योगान् कफपित्तरोगान् हन्ति । शोफादीन् पाण्डुतान्तान्रोगान् विशेषाद्धन्ति । दोषशब्दो रोगपर्याय शुक्रादिभ्येण सम्बध्यते ॥

पटोलारिष्टनिर्यूह पिष्टस्तुल्यरसाञ्जन ।
गळरोगापची व्यङ्गग्रान्थस्थाल्पक्रिमिमणुत् ॥

पटोलनिम्बयो काथेन पिष्टस्तुल्यरसाञ्जनो गुल्गुलु गळरोगादिक प्रकर्षेणनुदति ॥

शिलाजतुसम पीत' पयसा वातशोणितम् ।
निवर्तयत्यतिबल क्षीरमासघृताशिन. ॥

शिलाजतुना समो गुल्गुलु पयसा क्षीरेण पीतोऽतिबल वातशोणित क्षीराद्यशनशीलिन पुसो निवर्तयति ॥

रसेनपयसा मूत्रैर्वातपित्तकफापह ।
ब्राह्मी मण्डूकशङ्खानां पृथक्मेधादिकृद्रसै. ॥

मासरसेनयुक्तो गुल्गुलुर्वातापह । पयसा क्षीरेण पित्तापह' । मूत्रेण कफापह । ब्राह्म्यादीना पृथग्रसैर्युक्तो मेधादिकृत् आदिशब्देन स्मृत्यादीना ग्रहणम् ॥

मागधिकाग्निकलिङ्गविडङ्गै--
र्निम्बघृतै सवरापलषट्कै' ।
गुल्गुलुनासदृशेनसमेतैः
क्षौद्रयुतै. सकलामयनाशः ॥

मागधिकादिभिश्चतुर्भिर्निम्बघृतै. प्रत्येक पलप्रमाणैस्त्रिफलायाश्च प्रत्येक द्विपलैरेतैश्च सर्वै सदृशेन समेन दशपलेन गुल्गुलुनासमेतैर्युक्तैस्तथा क्षौद्रयुतै सकलामयाना नाशो भवति ॥

पिबेत् पलशत योस्यविजितमना नियतो यति' ।
नाकालमृत्योर्व्याधेर्वातस्यनरसो भयम् ॥

अस्य च प्रकृतस्य गुल्गुलो पलशत य' पुरुषो नियतो नियतेन्द्रिय यति ब्रह्मचारी च पिबेत् तस्या कालमृत्योर्व्याधेर्जरसश्च भय न भवति ॥

कल्पयेदौषधै' स्वैस्वैर्व्याधिषुव्याधिनाशनै ॥

सर्वेषु च व्याधिषु स्वै स्वैश्चिकित्सितनिर्दिष्टैर्व्याधिना शनै सह गुल्गुलु कल्पयेत् ॥

शिलाजतुविधान च गुल्गुलो सर्वमिष्यते ॥

अस्य च गुल्गुलोर्वक्ष्यमाण शिलाजतुविधानमपि सर्वमिष्यते शिलाजतुवत् सोपि योक्तव्य इत्यर्थ ॥

गुणनिधिरपिकुर्यात् सोतिमात्रोपयुक्त
स्तिमिरवदनशोषक्लीबताकार्श्यमोहान् ।
श्मलशिथिलभाव देहरौक्ष्य च तस्मा
द्गजनिचरनिषेवीस्यान्नरोगेष्वमीषु ॥

स च गुल्गुलु स्वभावेन गुणनिधिरप्युपकारनिधानमप्यतिमात्रोपयुक्त सस्तिमिरादिक गद कुर्यात् । यतोस्य तिमिरादिकरणश-

स च माहिषाक्षो गुग्गुलु श्रेष्ठ यो दाह उत्कटगन्ध स्निग्धादिरूपश्च । व्याख्यासमम् । अस्य च गुग्गुलो तुलालक्षण पर योग । अत ऊनोपि दोषाद्यपेक्षया । प्रत्यह च पला धिक नैव पिबेत् ॥

आत्रेयमुनिगीतश्च मन्त्रोय कर्मसिद्धिकृत् ।
भगवान् पुण्डरीकाक्षो देवाश्च सपुरन्दरा ॥
आनाययन्ति सम्यक्त्वा प्रभाव चादिशन्तिते ।
जरामरणदुःखेभ्य यथाब्धेः कुत्थिता सुरा ।
उपयोक्तुस्तथैवास्य भवत्व हि महाबल ॥

भगवानित्यादिना श्लोकद्वयनात्रेयमुनि गीत कर्मसिद्धिकृदय गुग्गुलुप्रयोगमन्त्र सु बोध ॥

पञ्चमूलस्य महत काथेन हितभोजिना ।
गुग्गुलु शीलितोहन्ति सर्वान् वातकफामयान्
लघीयसोपि तद्वद्वा सुखोष्णेन जलेन वा ।
मस्तुधान्याम्लमद्यैर्वा वचादे सलिलेन वा ॥

स च गुग्गुलुर्महत पञ्चमूलस्य वा लघीयसो ह्रस्वस्य वा काथेनोष्णाम्बुना वा म स्त्वादीनामन्यतमेन वा वचादेर्गणस्य सलिलेन काथेन वा हितभोजिना शीलित सर्वान् वात कफेन कृतानामयान् व्याधीन् हन्ति ॥

वरणादेस्तुबाधिर्य दन्तकर्णशिरोरुज ।
स्वरभेदादरश्वासवर्ध्मान्तर्गुल्मविद्रधीन ॥

वरणादेस्तुगणस्य सलिलेन शीलितो बाधिर्यादीन् विद्रध्यन्तानामयान् हन्ति । अन्त शब्दो गुल्मविद्रधीभ्या सम्बध्यते ॥

वातपित्तास्रगोगेषु बृहणार्थेनिषेव्यते ।
काथेन वाजिगन्धाया जीवनीयगणस्य वा ।

अश्वगन्धाया काथेन जीवनीयगणस्य वा काथेनयुक्तो गुग्गुलु वातपित्तास्ररोगेषिव्यते । बृहणार्थेनि च पुरुष इष्यते ॥

काथेनोत्पलमृद्वीका रक्तचन्दनन मना ।
वातपित्त निहन्त्येष पद्मकादिगणस्य वा ॥

एष गुग्गुलुरुत्पलादिजन्मना काथेन पद्मकादिगणस्य काथेन वा युक्तो वातपित्त निहन्ति ॥

चव्यकुष्ठविडङ्गानां यवान्या नागस्य वा ।
प्रसारिण्याश्च तोयेन गुग्गुलु कफवातजित् ॥

चव्यादित्रयस्य वा यवान्यादीना वा काथेन युक्तो गुग्गुलु कफवातजित् ॥

श्यूषणाग्नित्रिवल्कवराभि
र्भक्षयन् समधृत माहिषाक्षम् ।
आशु हन्ति कफमारुतमेदो
दोषजान् बलवतोपि विकारान् ॥

श्यूषणादीना समाना नवसङ्ख्यानामेकोभाग । द्वितीयो गुग्गुलोरित्येतत भक्षयन् पुरुषो बलवतोपि कफादिजान् विकारानाशु हन्ति ॥

पटोलनिम्बत्रिफलागुडूची
गायत्रिरात्रिद्वयवीजकानाम् ।
काथे पृथक्पथ्यपरस्य हन्ति
मासेन घोरान् कफपित्तरोगान् ॥

विशेषाच्छोफवीसर्प दुष्टव्रणभगन्दरान् ।
शुक्रार्तवमनोदोष प्रमेहश्वित्रपाडुता: ॥

पटोलादीना पृथगष्टभि क्वाथैर्युक्तो गुग्गुलु पथ्यपरस्य पुंसो योगान् कफपित्तरोगान् हन्ति । शोफादीन् पाण्डुतान्ताञ्रोगान् विशेषाद्धन्ति । दोषशब्दो रोगपर्याय' शुक्रादित्रयेण सम्बध्यते ॥

पटोलारिष्टनिर्यूह पिष्टस्तुल्यरसाञ्जन ।
गळरोगापची व्यङ्ग्रग्रन्थ्यर्श्वोल्वक्रमिप्रणुत् ॥

पटोलनिम्बयो क्वाथेन पिष्टस्तुल्यरसाञ्जनो गुग्गुलु गलरोगादिक प्रकर्षेणनुदति ॥

शिलाजतुसम पीत' पयसा वातशोणितम् ।
निवर्तयत्यतिबल क्षीरमासघृताशिन ॥

शिलाजतुना समो गुग्गुलु पयसा क्षीरेण पीतोऽतिबल वातशोणित क्षीराद्यशनशीलिन पुसो निवर्तयति ॥

रसेनपयसा मूत्रैर्वातपित्तकफापहः ।
ब्राह्मी मण्डूकशङ्खानां पृथक्मेधादिकृद्रसै. ॥

मासरसेनयुक्तो गुग्गुलुर्वातापह । पयसा क्षीरेण पित्तापह' । मूत्रेण कफापह । ब्राह्म्यादीना पृथग्रसैर्युक्तो मेधादिकृत् आदिशब्देन स्मृत्यादीना ग्रहणम् ॥

मागधिकाग्निकलिङ्गविडङ्गै–
र्बिल्वघृतैः सवरापलषट्कै' ।
गुग्गुलुनासदशेनसमेतैः
क्षौद्रयुतै सकलामयनाशः ॥

मागधिकादिभिश्चतुर्भिर्बिल्वघृतै प्रत्येक पलप्रमाणैस्त्रिफलायाश्च प्रत्येक द्विपलैरेतैश्च सर्वै सदशेन समेन दशपलेन गुग्गुलुनासमेतैर्युक्तैस्तैश्च क्षौद्रद्रुते सकलामयाना नाशो भवति ॥

पिबेत् पलशत योस्यर्बि नना नियतो यति' ।
नाकालमृत्योर्न्नव्याधेर्न्नतस्यनरसो भयम् ॥

अस्य च प्रकृतस्य गुग्गुलो, पलशत य' पुरुषो नियतो नियतेन्द्रिय यति ब्रह्मचारी च पिबेत् तस्या कालमृत्योर्व्याधेर्जरसश्च भय न भवति ॥

कल्पयेदौषधै' स्वैस्वैर्व्याधिषुव्याधिनाशनै ॥

सर्वेषु च व्याधिषु स्वै'स्वैश्चिकित्सितनिर्दिष्टव्याधिना शनै सह गुग्गुलु कल्पयेत् ॥

शिलाजतुविधान च गुग्गुलो' सर्वमिष्यते ॥

अस्य च गुग्गुलोर्वक्ष्यमाण शिलाजतुविधानमपि सर्वमिष्यते शिलाजतुवत् सोपि योक्तव्य इत्यर्थ ॥

गुणनिधिरपिकुर्यात् सोतिमात्रोपयुक्त
स्तिमिरवदनशोषक्लीबताकार्श्यमोहान् ।
शमलशिथिलभाव देहरौक्ष्य च तस्मा
द्गुजनिचरानिषेवीस्यान्नरोगेष्वमीषु ॥

स च गुग्गुलु स्वभावेन गुणनिधिरप्युपकारनिधानमप्यतिमात्रोपयुक्त सन्तिमिरादिक गद कुर्यात् । यतोस्य तिमिरादिकरणश-

स च महिषाक्षो गुग्गुलुः श्रेष्ठ यो दाह उत्कटगन्ध स्निग्धादिरूपश्च । व्याख्यासमम् । अस्य च गुग्गुलो तुलालक्षण पर योग । अत ऊनोपि दोषाद्यपेक्षया । प्रत्यह च पला धिक नैव पिबेत् ॥

आत्रेयमुनिगीतश्च मन्त्रोय कर्मसिद्धिकृत् ।
भगवान् पुण्डरीकाक्षो देवाश्च सपुरन्दरा ॥
आशासयन्ति सम्यक्त्वं प्रभाव चाद्दिशन्ति ते ।
जरामरणदु खेभ्यो यथाते भ्युत्थिता सुरा ।
उपयोक्तुस्तथैवास्य भवत्व हि महाबल ॥

भगवानित्यादिना श्लोकत्रयेणात्रेयमुनि गीत कर्मसिद्धिकरश्च गुग्गुलुप्रयोगमन्त्रः सु बोध ॥

पञ्चमूलस्य महत क्वाथेन हितभोजिना ।
गुग्गुलु शीलितो हन्ति सर्वान् वातकफामयान् ।
लघीयसोपि तद्वच्च सुखोष्णेन जलेन वा ।
मस्तु धान्याम्लमद्यैर्वा वचादे सलिलेन वा ॥

स च गुग्गुलुर्महत पञ्चमूलस्य वा लघीयसो ह्रस्वस्य वा क्वाथेनोष्णाम्बुना वा म स्त्वादीनामन्यतमेन वा वचादेर्गणस्य सलिलेन क्वाथेन वा हितभोजिना शीलित सर्वान् वात कफेन कृतानामयान् व्याधीन् हन्ति ॥

वरणादेस्तु वार्यर्य दन्तकर्णशिरोरुज ।
स्वरभेदोदरश्वासवर्ध्मान्तर्गुल्मविद्रधीन ॥

वरणादेस्तु गणस्य सलिलेन शीलितो वा ध्यर्यादीन् विद्रध्यन्तानामयान् हन्ति । अन्त-र्शब्दो गुल्मविद्रधीभ्या सम्बध्यते ॥

वातपित्तास्ररोगेषु बृंहणार्थिनि चेष्यते ।
क्वाथेन वाजिगन्धाया जीवनीयगणस्य वा ॥

अश्वगन्धाया क्वाथेन जीवनीयगणस्य वा क्वाथेन युक्तो गुग्गुलु र्वातपित्तास्ररोगेष्विष्यते । बृंहणार्थिनि च पुरुष इष्यते ॥

क्वाथेनोत्पलमृद्वीका रक्तचन्दनजन्मना ।
वातपित्त निहन्त्येष पद्मकादिगणस्य वा ॥

एष गुग्गुलुरुत्पलादिजन्मना क्वाथेन पद्मकादिगणस्य क्वाथेन वा युक्तो वातपित्त निहन्ति ॥

चव्यकुष्ठविडङ्गानां यवान्या नागस्य वा ।
प्रसारिण्याश्च तोयेन गुग्गुलु कफवातजित् ॥

चव्यादित्रयस्य वा यवान्यादीना वा क्वाथेन युक्तो गुग्गुलु कफवातजित् ॥

व्यूषणाग्निनववेल्लवराभि
र्भक्षयन् समधृत महिषाक्षम् ।
आशु हन्ति कफमारुतमेदो
दोषजान् बलवतोपि विकारान् ॥

व्यूषणादीना सप्ताना नवसङ्ख्यानामे-कोभाग । द्वितीयो गुग्गुलोरित्येतत् भक्षयन् पुरुषो बलवतोपि कफादिजान् विकारानाशु हन्ति ॥

पटोलनिम्बत्रिफलागुडूची
गायत्रिरात्रिद्वयबीजकानाम् ।
क्वाथे पृथक्पथ्यपरस्य हन्ति
मासेन घोरान् कफपित्तरोगान् ॥

निशेषाच्छोफवीसर्प दुष्टव्रणभगन्दरान् ।
शुक्रार्तवमनोदोष प्रमेहश्चित्रपाण्डुताः ॥

पटोलादीना पृथगष्टाभि क्काथैर्युक्तो गुग्गुलु पथ्यपरस्य पुसो योगान् कफपित्तरोगान् हन्ति । शोफादीन् पाण्डुतान्तान्रोगान् विशेषाद्धन्ति । दोषशब्दो रोगपर्याय, शुक्रादित्रयेण सम्बध्यते ॥

पटोलारिष्टनिर्यूह पिष्टस्तुल्यरसाञ्जन ।
गलरोगापची व्यङ्गग्रन्थस्थौल्यकृमिमणुत् ॥

पटोलनिम्बयो क्काथेन पिष्टस्तुल्यरसाञ्जनो गुग्गुलु गलरोगादिक प्रकर्षेणनुदति ॥

शिलाजतुसम पीत' पयसा वातशोणितम् ।
निवर्तयत्यतिबल क्षीरमासघृताशिन ॥

शिलाजतुना समो गुग्गुलु पयसा क्षीरेण पीतोऽतिबल वातशोणित क्षीराद्यशनशीलिन पुसो निवर्तयति ॥

रसेनपयसा मूत्रैर्वातपित्तकफापह ।
ब्राह्मी मण्डूकशङ्खानां पृथङ्मेधादिकृद्रसैः ॥

मासरसेनयुक्तो गुग्गुलुर्वातापह । पयसा क्षीरेण पित्तापहः । मूत्रेण कफापह । ब्राह्म्यादीना पृथग्रसैर्युक्तो मेधादिकृत् आदिशब्देन स्मृत्यादीना ग्रहणम् ॥

मागधिकाग्निकलिङ्गविडङ्गै-
र्विलयघृतै सवरापलषड्कै' ।
गुग्गुलुनासदृशेनसमेतै
क्षौद्रयुतै सकलामयनाश' ॥

मागधिकादिभिश्चतुर्भिर्विलयघृतै, प्रत्येक पलप्रमाणैस्त्रिफलायाश्च प्रत्येक द्विपलैरेतैश्च सर्वै सदृशेन समेन दशपलेन गुग्गुलुनासमेतैर्युक्तैस्तैश्च क्षौद्रद्रुतै सकलामयाना नाशो भवति ॥

पिबेत् पलशत योस्यविधिना नियतो यति' ।
नाकालमृत्योर्न्व्याधर्भतस्यनरसो भयम् ॥

अस्य च प्रकृतस्य गुग्गुलो, पलशत य' पुरुषो नियतो नियतेन्द्रिय यति ब्रह्मचारी च पिबेत् तस्या कालमृत्योर्व्याधेर्जरसश्च भय न भवति ॥

कल्पयेदौषधैः स्वैस्वैर्व्याधिपुव्याधिनाशनै ॥

सर्वेषु च व्याधिषु स्वै स्वैश्चिकित्सितनिर्दिष्टव्याधिना शनै मह गुग्गुलु कल्पयेत ॥

शिलाजतुविधान च गुग्गुलो' सर्वमिष्यते ॥

अस्य च गुग्गुलोर्वक्ष्यमाण शिलाजतुविधानमपि सर्वमिष्यते शिलाजतुवत् सोपि योक्तव्य इत्यर्थ ॥

गुणनिधिरपिकुर्यात् सोतिमात्रोपयुक्त
स्तिमिरवदनशोषक्लीबताकार्श्यमोहान् ।
शमलशिथिलभाव देहरौक्ष्य च तस्मा
द्रुजनिचरनिषेवीस्यान्नरोगेष्वमीषु ॥

स च गुग्गुलु स्वभावेन गुणनिधिरप्युपकारनिधानमप्यतिमात्रोपयुक्त सन्तिमिरादिक गद कुर्यात् । अतोस्य तिमिरादिकरणश-

क्तिर्विद्यते ततोऽपि तिमिरादिषु रोगेषु पुरुषो रजनिचरनिषेवी न स्यात् । रजनिचरो गुल्गुलु । क्लीबता स्त्रीगमनाशक्तत्वम् । अमलाविल- भावो द्रुतपुरीषत्वम् । सर्वामयेष्वन्योन्येषु नि षेध । इति गुल्गुलुकल्प ॥

॥ इति शिलाजतु ॥

ग्रीष्मेऽर्कतप्ता गिरयो जतुतुल्यं वमन्ति यत् ।
हेमादिषड्धातुरसं प्रोच्यते तच्छिलाजतु ॥

ग्रीष्मार्य प्रतो गिरय पर्वता अर्केण भगवता गभस्तिमालिना तप्ता सन्तो जतुतुल्य यद्वमन्त्युद्गिरन्ति तच्छिलाजतून्यते । किं ते वमन्तीत्याह । हेमादिषड्धातुरसं हेमादीना सुवर्णरूप्यताम्रत्रपुसीसकायसाख्याना षण्णा धातूना रस तद्यथास्वं धातुबलेनैव विज्ञायते ॥

सर्वदोषप्रशमनं सर्वरोगविनाशनम् ।
शिलाभ्यो यस्य यज्जातं धातोस्तत्तद्गुणं तु तत् ॥

तच्च सर्व शिलाजतु सर्वदोषप्रशमन स- र्वरोगविनाशन च । यस्य च हेमादिधातो शिलाभ्यो यज्जातं तत्तद्गुणम् ॥

सर्व च तिक्तकटुकं नात्युष्णं कटुपाकतः ।
छेदनं च विशेषेण लौहं तत्र प्रशस्यते ॥

गोमूत्रगन्धि कृष्णं
गुल्गुल्वाभं विशर्करं मृत्स्नम् ।
स्निग्धमनम्लकषायं
मृदुगुरु च शिलाजतु श्रेष्ठम् ॥

सर्वं च तिक्तादिगुणम् । तत्र तेषु मध्ये लौहं प्रशस्तम् । गोमूत्रगन्धित्वादिगुणं च शिलाजतु शस्तमिति विद्यात् । विशर्करं वि- गतशिलाचूर्णम् ॥

[ प्रतिदोषं शिलाजतुभावनमाह ॥ ]

रास्नादशमूलबला
पुनर्नवैरण्डशुण्ठिमधुकानाम् ।
क्वाथेन भावितं तत्
द्विगुणितो वातरोगघ्नम् ॥

द्राक्षाभीरुपटोल
त्रायन्तिगुडूचि जीवनीयानाम् ।
निर्यूहेण सुभिन्नं
शुक्लं पित्तामये सुखदम् ॥

क्रिमिजिद्वचा कलिङ्ग
करञ्जघनमूलकचभूस्तृणानाम् ।
सहपञ्चकोलकाना
क्वाथेन कफामये भाव्यम् ॥

लघुपञ्चमूलशुण्ठी
द्राक्षा काश्मर्य वाजिगन्धानाम् ।
सगुडूचिशरवलाना
रसेन पित्तानिलगदेषु ॥

घनकुष्ठवचा त्रिफला
सुरदारुविडङ्गपञ्चकोलानाम् ।
रजनीमरिचातिविषा
युक्ताना वातकफजेषु ॥

पाठा पटोलनिम्ब
त्रिफलाघनकुटज सप्तपर्णानाम् ।
त्रायन्त्यमृतातिविषा-
सहितानां पित्तकफजेषु ॥

रास्नेत्यादि । तत्र शिलाजतु सर्वदोषरोगघ्नमपि रास्नादिक्वाथेन भावितं विशेषेण वातरोगघ्नं भवति । द्राक्षादिक्वाथेन भावितं पित्तामये सुतरां शस्तम् । कफामये पञ्चकोलसहितानां कृमिजिद्व्यादीनां क्वाथेन भाव्यम् । मुख्यपञ्चमूलं महत् । गुडूच्यादिसहितानां लघुपञ्चमूलादीनां रसेन, क्वाथेन पित्तानिलगदेषु भाव्यम् । रजन्यादियुक्तानां घनादीनां क्वाथेन वातकफजेषु व्याधिषु । त्रायन्त्यादिसहितानां पाठादीनां क्वाथेन पित्तकफजेषु ॥

निचयेपि दोषबलतो
योगानेतान् विकल्प्ययुञ्जीत
विविधगणसङ्ग्रहोक्तैः
स्वैः स्वैश्चगणैर्गिरेस्सारम् ॥

व्याधिव्याधितसात्म्य
समनुसरन् भावयेदय पात्रे ।
प्राक्केवलजलधौतं
शुष्कं क्वाथैस्ततो भाव्यम् ॥

एतांश्च पृथगुक्तान् समगोक्तांश्च योगान् सन्निपातेपि दोषबलापेक्षया विकल्प्य युञ्जीत । विविधगणसङ्ग्रहाध्यायोक्तैश्च जीवनीयादिभिर्गणैः स्वस्वैरेव विषयेषु । गिरेः सारं शिलाजतु । कथं युञ्जीत आह । व्याधिसात्म्यव्याधितसात्म्यं च समनुसरन्ननुगच्छन् । तत्र यदा भाव्यं तदायसपात्र एव । तत्र प्रथममेव केवलेन जलेन धौतं शुष्कं च क्वाथैस्ततो भाव्यम् ॥

समगिरिजमष्टगुणिते
निष्क्वाथ्य भावनौषधं तोये ।
तन्निर्यूहेऽष्टांशे
पूतोष्णे प्रक्षिपेत् गिरिजम् ॥

तत् समरसतां यातं
सशुष्कं प्रक्षिपेद्रसे भूयः ।
स्वैःस्वैरेव क्वाथैः
भाव्यं वारान् भवेत् सप्त ॥

समगिरिजमित्यादिना भावनाविधानम् । यावदेव शिलाजतु भाव्यं तावदेवौषधं पलमानेनाष्टगुणिते तोये निष्क्वाथ्यम् । अष्टांशे तस्मिन् निर्यूहे क्वाथे पूते उष्णे च गिरिजं प्रक्षिपेत् । तत्र शिलाजतु क्वाथेन समरसतामेकत्वं प्राप्तमनु च शुष्कं पुनस्तेनैव विधानेन भावनारसं प्रक्षिपेत् । एवमेतेनप्रकारेण स्वैःस्वैर्यथोक्तैः प्रत्येकं कषायैः सप्तवारान् भावयेत् ॥

अथस्निग्धस्यशुद्धस्य घृतं तिक्तकसाधितम् ।
त्र्यहं युञ्जीतगिरिजमेकेन तथा त्र्यहम् ॥
फलत्रयस्ययूषेण पटोल्या मधुकस्य च ।
योगयोग्यं ततस्तस्य कालापेक्षं प्रयोजयेत् ॥
शिलाजमेवं देहस्य भवत्यत्युपकारकम् ।
गुणान् समग्रान् कुरुते सहसा व्यापदश्च न ॥

अथेत्यादिना उपयोगक्रमः । आदावेव स्निग्धस्यानन्तरं कृतशोधनस्य तिक्तके सूत्रोक्तौषधे साधितं घृतं त्र्यहं युञ्जीत । ततोनन्तरं
यूषेण
युक्त

शाहानि सस्वाद । ततोऽनन्तरं तस्य शिला जतुनो योग स्वस्थातुरविशेषयोग कालमवेक्ष्य प्रयोजयेत् । एवमेतेनैव क्रमेण शिलाज दृढ स्यात्सुपकारक भवति । समस्ताश्च रसायन गुणान् कुरुते । व्यापदश्च सहसा न कुरुते ॥

एकत्रिसप्तसप्ताह कर्षमर्द्धपलं पलम् ।
हीनमध्योत्तमो योगः शिलाजस्य क्रमान्मत ॥

तस्य शिलाजस्य हीनादिविशेषेण त्रिप्रकारो योगो मत आचार्याणाम् । तत्र हीन द्वितीयो मध्यम तृतीय उत्तम. एव हीनादिविशेषेण । मात्राविशेषेण प्रत्येक त्रिविध कर्ष मर्द्धपल पलमिति । अत्रैकसप्ताह हीनो योग. । त्रिसप्ताह मध्यम । सप्तसप्ताहमुत्तम इति क्रमार्थ । तथैव कर्षो हीनयोग । अर्द्ध पल मध्यम । पलमुत्तम इति ॥

संस्कृत संस्कृते देहे प्रयुक्त गिरिजाह्वयम् ।
युक्त व्यस्तैः समस्तैर्वा ताम्रायोरूप्यहेमभिः ॥
क्षीरेणालोडितं कुर्याच्छीघ्र रासायन फलम् ।
हन्याद्रोगानशेषांश्च जीर्णे हितमिताशिनः ॥

संस्कृतमिति । संस्कृत स्नेहादिभिर्देहे यथादोषमौषधै सस्कृत शिलाजं ताम्रादिभिर्द्वाभि पृथग्यथायोग मिश्रितैर्वा चतुर्भिर्वा युक्त क्षीरेण चालोडित प्रयुक्त रासायन फल दीर्घायुष्यादिक जीर्णे हित मित च भोजन कुर्वत शीघ्र कुर्यादशेषांश्च रोगान् हन्यात् ॥

व्यायामातपमारुतचेत
सन्तापगुरुविदाह्यादि ।
उपयोगादपिपरतो
द्विगुण परिवर्जयेत् कालम् ॥

कुलत्थान् काकमाचीं च कपोतांश्च सदात्यजेत् ।
पिबेन्माहेन्द्रमुदकं शीतं मासरणाम्बु वा ॥

व्यायाम इत्यादि । अत्र च व्यायामादिकमत्र प्रयोगात्परतो द्विगुणमपि काल परिवर्जयेदपिशब्दात् प्रयोगेपि । कुलत्थादिक च सदा प्रयोगात् प्रभृति यावज्जीवं त्यजेत् । तथैव च माहेन्द्रादिकमुदक पिबेत् । माहेन्द्र मान्तरिक्षम् । [शिलाजतुप्रयोगेषु विदाहीनि गुरूणि च । वर्जयेत् सर्वकालन्तु कुलत्थान् परिवर्जयेत् । तेषामत्यन्तविरुद्धत्वादश्मनोभेदनं परम् । लोके दृष्टान्तमस्येषा प्रयोग प्रतिपिध्यते ॥ इति चरकपाठः । व्याख्या । सर्वकालन्तु कुलत्थान् परिवर्जयेदित्यत्र तुशब्दोऽवधारणार्थे । ननु सर्वस्य कालस्यकीदृक् । यावज्जीवमित्येके । अन्येत्वाचक्षते अत्यन्तविरुद्धत्वेपि रसायनस्या न्वयता फलेन भावितस्य नात्यन्तिकेन । तस्मात् संवत्सरपरिहारः तस्यैतावानेवकालो यत पवृत्त वत्सस्य विशेषणानि । कुलत्थाना शिलाजतुप्रयोगे विदाहादिभ्यो विशेषतो विरोध तस्मा त्तेषामेव वर्जन यतस्तन्मय एव कायो भवति । कुलत्थाश्चाश्मविरोधिन येन तद्रसेन पाषाण भिन्ना स्फुटन्ति । संवत्सराद्धि अत्यन्तदृढ ता कायस्यस्यादत सवत्सर-परिहार । इति जज्जट । ]

ज्वरीज्वरघ्नाम्बुदपर्पटादे
क्काथेन रक्ती मधुयष्टिकायाः ।
शोषी रसैः क्रव्यभुजामिपोत्थै-
र्मायूरमांसैः पयसा च कार्श्ये ॥

मध्वम्बुना मेदसि सम्प्रवृद्धे
क्षीरेण पर्याकुलबुद्धिसत्त्वः ।
पाण्ड्वामयार्त्तोदरेन्मशोफे
पिबेच्छिलाजं माहिषीजलेन ॥

ज्वरीत्यादेः शिलाजं पिबेदितिसम्बन्धः ॥ व्याख्यामनम् ॥ मुस्तापर्पटकादि यच्चिकित्सितं तदुक्तं तस्य क्काथेन । रक्ती रक्तपित्तेन प्रवृत्तरक्तः । क्रव्यभुजो मांसाशिनः प्राणिनस्तेषां रसैः शोषी राजयक्ष्मी । पर्याकुलमेकरूपं बुद्धिः सत्त्वं च यस्य स क्षीरेण । सत्त्वं मनः । पाण्ड्वामयादिरोगे माहिषीमूत्रेण ॥

अश्मवीरतरायेन कुष्ठं खदिरवारिणा ।
विषं विषघ्नैरगदैर्हन्त्येवं तद्यथामयम् ॥

अश्मेत्यादिभिर्हन्तीतिसम्बन्धः । यथामयमिति रोगस्वरूपानतिक्रमेण ॥

शैलजत्रिकटुक्षौद्रं क्षौद्रधातून् निषेवते ।
क्षीरौदनाशी यो जीर्णे यक्ष्मणा न स बाध्यते ॥

शैलजादिकं सर्वं क्षौद्रेण मिश्रितं यो निषेवते तस्मिंश्च जीर्णे क्षीरौदनाशी च भवति स राजयक्ष्मणा न बाध्यते ॥

सुभावितात्सारगणैस्तुलापीत्वाशिलोद्भवात् ।
साराम्बुनैव भुञ्जानः शालिं जाङ्गलजै रसैः ॥

व्यपोह्य मधुमेहाख्यमन्तकं रोगसङ्करम् ।
वपुर्वर्णबलोपेतः शतं जीवत्यनामयः ॥

सारगणोऽसनादिसारास्तैः सुभाविताच्छिलोद्भवात् तुला पलशतं साराम्बुनैव पीत्वा शालिं जाङ्गलजै रसैर्भुञ्जानः पुरुषो मधुमेहाख्यं रोगसङ्करमन्तकं व्यपोह्य नाशयित्वा वपुरादिभिरुपेतोऽनामयश्च सन् वर्षशतं जीवति ॥

शिलाह्वात् षोडशपलं त्रिःस्त्रिरेकश्च भावयेत् ।
वराया दशमूलस्य गुडूच्याः कर्कशस्य च ॥

बलाया मधुयष्ट्याश्च रसे गव्ये च वारिणि ।
क्षीरे सकृत्क्रमेणैव सप्तकृत्वस्तथा पुनः ॥

काकोलियुग्मघनपुष्करवह्निरास्ना
मेदायुगर्द्धिचविका गजपिप्पलीनाम् ।
पाठाद्विजीवकनिकुम्भविदारियुग्म
वीरावरी मधुकलाशुमतीद्वयानाम् ॥

पलिकानामब्द्रोणे
सिद्धाना पादशेषिते क्काथे ।
भावितमित्थं गिरिज
द्विपलैश्चूर्णीकृतैर्युञ्ज्यात् ॥

कर्कटशृङ्गी धात्री
[illegible]
[illegible]

द्विपलेन चतुर्जाता
त्सलघृतक्षौद्रशर्कराभिश्च ।
द्विपलाद्द्विगुणाभिः
कार्या गुलिकास्ततोऽक्षसमाः ॥

ताः शुष्का नवकुम्भे
जातीपुष्पाधिवासिते स्थाप्याः ।
तासामेकां खादेत्
प्रतिदिनमनुपानमत्रेष्टम् ॥

क्षीररसद्राक्षाम्भो
मार्द्वीकसुरासवान्यतमम् ।
जीर्णेऽन्नलघुभोज्य
यूषपयः पिशितनिर्यूहैः ॥

सप्ताहमात्रमेव
सर्वाङ्गीनं क्रमात् भवेत् परतः ।
भक्तस्यान्ते प्राग्वा
गुलिकानविरुध्यते सेपा ॥

निरपायाभूरिफला
परिहारसुखोपयोजिता जयति ।
प्रबलमपि वातशोणित
मूरुस्तम्भं ज्वरं दीर्घम् ॥

भगमूत्रशुक्रदोष
प्लीहयकृद्रक्तपाण्डुहृद्रोगान् ।
वर्ध्मक्रिमि गुल्मपीनस
हिध्माकासारुचिश्वासान् ॥

विद्रध्युदर कुष्ठ
श्वित्र जाड्यं क्षय मद मूर्च्छाम् ।
उन्मादमपस्मार
मुखनेत्रशिरोगदा स्त्रा स्त्रान् ॥

आनाहमतीसार
हलीमक कामिला ग्रहणिरोगान् ।
ग्रन्थ्यर्बुदान सपिटकान्
भगन्दर गण्डमाला च ॥

अतिकार्श्यमतिस्थौल्य
स्वेदमथश्लीपद गुदे कीलान ।
दष्ट्रविष समूल
गरयोगान् सुधाराश्च ॥

अभिचारमरातिकृत
दुःस्वप्न भौतिकीं तथा बाधाम् ।
पाप्मालक्ष्मीं चेयं
गुलिका शमयेच्छिवा नाम्ना ॥

पुष्याऽऽयुष्यापत्या
कान्तियशः श्रीविबोधिनी मेध्या ।
कुरुते नृपवल्लभता
जय विवादे च जनस्या ॥

जितवलितिवलीपलिता
जीवयति सुख शतद्वय शरदाम् ।
वर्षद्वयप्रयोगा
द्वर्षशतचतुष्टय जीवत् ॥

शिलाह्वादित्यादिना शिवा गुटिका । षोडशपलं शिलाह्वात् त्रिफलादीनां पण्णां पट्सु क्वाथेषु क्रमेण तत्रैकैकस्य क्वाथे त्रिस्त्रिर्भावयेत् । भावनाक्वाथस्य चेदेव विधानमुक्तम् । तेन त्रिफलादिषट्कान्यतमद्रव्यं शिलाजतुसमत्वात् षोडशपलं कार्यम् । तस्य चाष्टगुणं जलं दत्वा कथितेनाष्टांशशिष्टेन तेन समं शिलाजतुभाव्यम् । तदनन्तरमेव च गोमूत्रेणैव वारान् भावयेत् । अनन्तरं च क्षीरे सकृदेकवारं भावयेत् । मूत्रं क्षीरं च क्वाथवच्छिलाजतुसममेव निक्षेप्यम् । एवं क्रमेण त्रिफलादिक्वाथैरितिक्रमो व्याख्यातः । एवं द्वाविंशतिवारान् भावयेत् । ततः पुनः सप्तवारान् भावयेत् । केनेत्याह । काकोल्या दिक्वाथेन । चरकादौ कर्कटशृङ्गी श्रावणी चाधिके पठिते । काकोलियुग्मं काकोली क्षीरकाकोली च ॥ घनं मुस्तम्, वाहि श्रेयक, मेदायुग्मं मेदा, महामेदा च । ते हि प्रसिद्धे । जीवकद्वयं जीवन्ती, जीवकं च । निकुम्भो दन्ती । विदारीयुग्मं विदारी, क्षीरविदारी च । वीरास्वना मिका, (महाशतावरी) वरी शतावरी, मधुफला द्राक्षा, अंशुमतीद्वयं सालपर्णी, पृश्निपर्णी च । इत्यमनेन प्रकारेण भावितं गिरिजं कर्कटशृङ्ग्यादिभिः पञ्चभिः प्रत्येकं द्विपलैर्युक्तं योगं नयेत् । अत्र चरकादौ पुष्करमूलमपि पठितम् । तालीसपत्रकुष्ठादींश्च युक्त्यादिति सम्बन्धः ... तत्क्षीरीरसं पलं कर्षद्वयं च ... न्यु-कानि चरकादौ पञ्च । ...दिद्विगुणाभियुक्तयात् । एव च तैलादीनां द्वन्द्वात् स्त्रीलिङ्गैः सामानाधिकरण्यं स्यात् । तेन तैलं द्विपलं ततो द्विगुणं घृतं चत्वारिपलानि । ततो द्विगुणं क्षौद्रमष्टौ पलानि । ततो द्विगुणा शर्करा षोडशपलानि । ततोनन्तरमक्षसमाः कार्यिका गुटिकाः कार्याः। तासां गुटिकानां मध्यात् प्रतिदिनमेकां गुटिकां खादेत् । अत्र च गुटिकायां दोषाद्यपेक्ष क्षीरादीनामन्यतममनुपानमिष्टम् । अत्र च लघ्वन्नं यूषादिभिरर्थात् कफादषु भोज्यं तन्निभ्रजीर्णे । अजीर्णे वर्ज्यमित्यर्थः । विशिष्टनिर्यूहो मांसरसः । एवं एव क्रमः सप्ताहमात्रं विधेयं । मात्रशब्देन दोषाद्यपेक्षमाधिक्यमपि प्रदर्शयति । परतश्च सप्ताहादिच्छया क्रमात् सर्वाङ्गीणो भवेत् न तु त्वरया । एषा च गुटिका प्राग्भक्तमप्युत्तरभक्तमपि न विरुध्यते । निरपाया अस्या मुपयुज्यमानाया-मपायो नाशङ्क्यते । एषा च परिहारयुक्ता यन्त्रणानवितेत्यर्थः । एषाचोपयोजिता सती प्रबलमपि वातशोणितमूरुस्तम्भादिकं च जयति । दोषशब्देन रोगपर्यायेण भगादीनां सम्बन्धः । गुल्मादेर्गदांश्च तांस्तानिति सम्बाध्यायनिर्दिष्टान् । इयं च गुटिकानाम्ना शिवा पाप्मानं मलक्ष्मीं च शमयेत् पुष्ट्यादिस्वरूपा च । वकरस्या निवारे जयं च कुरुते । एषा च जित खलमादिका सती शरदां संवत्सराणां शतद्वयं पुरुषं सुखं जीवयति ... वर्षद्वयप्रयोगात् पुरुषो ...

द्विपलेन चतुर्जाता
तैलघृतक्षौद्रशर्कराभिश्च ।
द्विपलाद्द्विगुणाभिः
कार्या गुलिकास्ततोऽक्षसमाः ॥

ताः शुष्का नवकुम्भे
जातीपुष्पाधिवासिते स्थाप्याः ।
तासामेका खादेत्
प्रतिदिनमनुपानमत्रेष्टम् ॥

क्षीररसद्राक्षाम्भो
माद्वीकसुरासवान्यतमम् ।
जीर्णेऽल्पलघुभोज्य
यूषपयःपिशितनिर्यूहैः ॥

सप्ताहमात्रमेव
सर्वात्मीन क्रमात् भवेत् परत ।
भक्तस्यान्ते भाग्वा
गुलिकानविरुध्यते नैषा ॥

निरपायाभूरिफला
परिहारसुखोपयोजिता जयति ।
प्रबलमपि वातशोणित
मूरस्तम्भ ज्वर दीर्घम् ॥

भगमूत्रशुक्रदोष
प्लीहयकृद्रक्तपाण्डुहृद्रोगान् ।
वर्ध्मगमिं गुल्मपीनस-
हिध्माकासारुचिश्वासान् ॥

विद्रधिमुदर कुष्ठ
श्वित्र जाड्य क्षय मद मूर्च्छाम् ।
उन्मादमपस्मार
मुखनेत्रशिरोगदास्त्वास्तान् ॥

आनाहमतीसार
हलीमक कामिला ग्रहणिरोगान् ।
ग्रन्थ्यर्बुदान सपिटकान्
भगन्दर गण्डमाला च ॥

अतिकार्श्यमतिस्थौल्य
स्वेदमथश्लीपद गुदे कीलान ।
दष्ट्राविष समूल
गरमयोगान् सुघोराश्च ॥

अभिचारमरातिकृत
दुःस्वप्न भौतिकीं तथा बाधाम् ।
पाप्मालक्ष्मीं चेय
गुलिका शमयेच्छिवा नाम्ना ॥

पुष्पाऽऽयुष्याधन्या
कान्तियश श्रीत्रिरोगिनी मेध्या ।
कुरुते नृपवल्लभता
जय विवादे च सन्नस्था ॥

जितखलतिवलीपलिता
जीवयति सुख शतद्वय शरदाम् ।
वर्षद्वयप्रयोगा
द्वर्षशतचतुष्टय जीवेत् ॥

शिलाह्वादित्यादिना शिवा गुलिका । षोडशपल शिलाह्वात् त्रिफलादीना षण्मा षट्सु काथेषु क्रमेण तत्रैकैकत्र काथे त्रिस्त्रिर्भावयेत् । भावनाकाथस्य चैतैव विधानमुक्तम् । तेन त्रिफलादिषट्कान्यतमद्रव्य शिलाजतुसमत्वात् षोडशपल कार्यम् । तत्र चाष्टगुण जल दत्त्वा कथितेनाष्टांशशिष्टेन तेन सम शिलाजतुभाव्यम् । तदनन्तरमेव च गोमूत्रेणैव वारान् भावयेत् । अनन्तर च क्षीरे सकृदेकवार भावयेत् । मूत्र क्षीर च काथवच्छिलाजतुसममेव निक्षेप्यम् । एव क्रमेण त्रिफलादिकाथैरिति क्रमो व्याख्यात । एव द्वाविंशतिवारान् भावयेत् । तत पुन. सप्तवारान् भावयेत् । केनेत्याह । काकोळ्या दिकाथेन । रत्नादे कर्कटशृङ्गी धात्रमी चा त्राधिके पठिते । काकोळीयुग्म काकोळी क्षीरकाकोळी च ॥ घन मुस्तम्, वह्नि चित्रक, मेदायुग्म मेदा, महामेदा च । ते हि प्रसिद्धे । जीवकद्वय जीवन्ती, जीवक च । निकुम्भो दन्ती । विदारीयुग्म विदारी, क्षीर विदारी च । वीराख्या मिका, (महाशतावरी) वरी शतावरी, मधुफला द्राक्षा, अंशुमतीद्वय सालपर्णी, पृश्निपर्णी च । इत्थमनेन प्रकारेण भावित गिरिज कर्कटशृङ्ग्यादिभि पञ्चभि प्रत्येक द्विपलैर्युक्तयायोग भवेत् । अत्र रत्न नादे पुष्करमूलमपि पठितम् । तालीसपत्रक- ङ्कुनादींश्च युञ्ज्यादिति सम्बध्यते । क्षीरशुक्ला तत्क्षीर्यारत्न पल कर्षद्वय च । यथो पलान्यु क्तानि रत्नादे पञ्च । तैलादिमिश्र द्विपला- दिद्विगुणाभिर्युञ्ज्यात् । द्विपलादेर्द्विगुणत्वम् । अत्र च तैलादीना द्वन्द्वात् स्त्रीलिङ्गै.सामानाधि- करणञ्च स्यात् । तेन तैल द्विपल ततो द्विगुण घृत चत्वारिपलानि । ततो द्विगुण क्षौद्रमष्टौ- पलानि । ततो द्विगुणा शर्करा षोडशपलानि । ततोनन्तरमक्षसमा कार्पिका गुळिका. कार्याः । तासा गुळिकाना मध्यात् प्रतिदिनमेका गुळि- का खादेत् । अत्र च गुळिकाया दोषाद्यपेक्ष क्षीरादीनामन्यतममनुपानमिष्टं । अत्र च लघ्वन्न यूषादिभिरर्थात् कफादिषु भोज्य त- स्मिञ्जीर्णे । अजीर्णे वर्ज्यमित्यर्थ । पि- शितनिर्यूहो मासरस । एष एव क्रम सप्ता- हमात्र विधेय । मात्रशब्देन दोषाद्यपेक्षमा- धिक्यमपि प्रदर्शयति । परतश्च सप्ताहादि- च्छया क्रमात् सर्वाशीनो भवेत् न तु त्वरया । एषा च गुळिका प्राग्भक्तमप्युत्तरभक्तमपि न निरुध्यते । निरपाया अस्या मुपयुज्यमानायाः- मपायो नाशङ्क्यते । एवा च परिहारसुला यन्त्रणानन्विनेत्यर्थ । एवाचोपयोजिता सती प्रबलमपि वातशोणितमूरुस्तम्भादिरुच जयति । दोषशब्देन रोगपर्यायेण भगादीना सम्बन्धः । मुक्तादिगदाश्च तास्तानिति सम्बन्धाभावनिर्दे- शात् । इय च गुळिकानाम्ना शिवा पाप्मान मलक्ष्मीं च शमयेत् वृष्यादिलक्षणा च । व- क्त्रस्था विवादे जय च कुरुते । एवा च जित खलयादिका सती शरदा सवत्सराणा शतद्वय पुरुष सुख जीवयति । अस्याश्च वर्षद्वयप्रयो गात् पुरुषो वर्षशतचतुष्टय जीवेत् ॥

---

१ [मौक्तिकास्तथा योधान् इति ग पाठ ॥ ]

नसोऽस्तिरोगो भुवि साध्यरूपो
जत्वश्मज यं न जयेत् प्रसह्य ।
तत्कालयोगैर्विधिवत्प्रयुक्त
स्वस्थस्यचोर्जा विपुला दधाति ॥

शिलाजतुप्रसङ्गेनाह । भुवि सरोग साध्यरूप साध्यश्चासौ नास्ति । यं रोगम श्मज जतु प्रसह्याक्रम्य न जयेत् । तथाश्मज जतुकाले योगैश्च योगैर्विधिवच्छास्त्रविधिना प्र युक्त स्वस्थस्य चनीरोगस्यापि विपुला मूर्जां दधाति ॥

अमरमन्दिरमन्दरसम्भवा
च्छतपलं गिरिजादुपयोजय ।
यदि जरामयदु खविवर्जिता
सुचिरमिच्छसिजीवितमन्ततिम् ॥

कर्मान्तराधिक्ययोच्यते । त्वं यदि जरा-दिवर्जिता सुचिरं बहुकाल जीवित सन्ततिमा युष समूहमिच्छसि तर्हि पलशत गिरिजादुप योजय । किम्भूतादाह अमरमन्दिरमन्दर सम्भवात् अमराणा देवाना यन्मन्दिर वासवे श्मयो मन्दर सुमेरो गिरि तत्र सम्भवो यस्य तस्मात् ॥

दशगुणमुपयुङ्क्ते य शतं शैलजाता
छघुहितमितभोजी वर्जयन् वर्जनीयान् ।
सततसमनुपक्तान् वर्जितान् वैद्यवृन्दै
र्विधमति सगदौघान् नेक्षतेचायुषोऽन्तम् ॥

य पुरुष शैलजातात् गिरिजाद्दशगुण सहस्र लघ्वादिभोजी वर्जनीयान्वर्जयन्नुपयुङ्क्ते स पुरुषो व्याधिसमूहान् विधमति नाशयति । आयुषश्चान्त नेक्षते न पश्यति । किम्भूतान् गदौघानाह सततसमनुषक्तान अजय्यत्वादनुव द्धान वैद्यवृन्दैर्वर्जिताश्च ॥

समुद्भवामृतमन्थनोत्थ
स्वेदं शिलाभ्योमृतवान् गिरेर्माक् ।
यो मन्दरस्याब्भुवाहिताय
न्यस्त सशैलेषु शिलाजरूपी ॥

पुरा अमृतमथने मन्थनगिरेर्मन्दरस्य श्रमस्वेदोऽमृतेनयुक्त प्रथमसुद्भूत । योमृत वान् गिरे स्वेद स एवाब्भुवा ब्रह्मणा लोक हिताय शिलाजरूपेण शैलेषु हिमवदादिषु न्य-स्त । इति शिलाजतुकल्प ॥

॥ तुवरकल्प ॥

सुवर्णशैलप्रभवो विष्णुना काञ्चनोरस ।
तापी किरातचीनेषु यवनेषु च निर्मित' ॥
ताभ्या सूर्यांशुसन्तप्तो माधवे मासि दृश्यते ।
मधुर काञ्चनाभास साम्लोरजतसन्निभ ॥
किञ्चित् कषाय उभय शीत'पाके कटुर्लघु' ।
शिलानिर्यासजश्चात्र कुलत्थादीन् परित्यजेत् ॥

सुवर्णशैलप्रभव काञ्चनोरसस्तापयादिषु देशेषु विष्णुना निर्मित । तापी मध्यदेशप्रसि द्धा तस्या सूर्यांशुभि सन्तप्त माधवे वैशाखे मासि दृश्यते । स च द्विविध एक काञ्च-नाभासो मधुरश्च । द्वितीयो रजतसन्निभोऽम्ल-श्च । उभयोपि किञ्चित् कषायरस कटुको

लघुश्च । शिलाजतुनश्च तान्यपि कुलत्थादीन् परित्यजेद्वर्जयेत् ॥

नतन्निषेवी जरसाभिभूयते
न पन्नगैर्नापि गरैर्नवृश्चिकैः ।
न पाण्डुमेहज्वरशोफयक्ष्मभि-
र्न कण्ठनेत्रश्रवणत्वगामयैः ॥

यश्च त निषेवते स जरसानाभिभूयते नापि पन्नगादिभिः ॥

सोदश्वित्कोमाक्षिकधातु सघृतो वा
सक्षौद्रो वा क्षौद्रघृताभ्यां सहितो वा ।
साम्भस्को वा तैलयुतो वा विनिहन्ता
त्वग्दोषाणां सर्वविषाणां सगराणाम् ॥

सोदश्वित्क इत्यादि । व्याख्यासमम् । माक्षिकधातुस्ताप्य ॥

अक्षद्राक्षापोमलमुस्तामलकानां
सव्योषाणां पर्वतनिर्यासयुतानाम् ।
दत्वा तुल्यं माक्षिकधातुं मधुमिश्रं
लिह्यात्पाण्डुव्याध्यभिभूतः शिवमिच्छन् ॥

अक्षादीनां पर्वतनिर्यासेन शिलाजतुना युतानामेकोभागो द्वितीयो माक्षिकधातोः तन्मधुमिश्रं लिह्यात् । सुबोधम् ॥

अशः शुण्ठ्या, लोहमलाशोन्दराश
पिप्पल्यशो माक्षिकधातुर्द्विगुणांशः ।
क्षौद्रं कामं कृष्णतिलानामपिचांशः
श्रेष्ठा पिण्डी पाण्डुविकारक्षयघ्नी ॥

शुण्ठ्यादीनां पञ्चानामेकएकोभागो माक्षिकधातोर्द्वौ भागौ क्षौद्रं काममिच्छया योजयेद्येष पिण्डी श्रेष्ठा पाण्डुविकारक्षयघ्नी ॥

सायश्चूर्णमाक्षिकधातुं मधुमिश्रं
व्योषोपेतं पर्वतनिर्याससमेतम् ।
क्षीराहारो योवलिहान प्रयताश्मा
मृत्युद्वारं शोषमपोहत्यचिरेण ॥

अयश्चूर्णादियुक्तं माक्षिकधातुमवलिहानः क्षीराहारः सन् मृत्योर्द्वारभूतं राजयक्ष्माणमचिरेणापोहति । अयश्चूर्णादीनि पञ्च समानि ॥

लोहं सर्पिर्माक्षिकधातुर्मधुमात्रा
धात्रीचूर्णं केसरमम्बुप्रभवानाम् ।
योगं कुर्याद्देपसिताभागविमिश्रं
चक्षुर्घ्राणश्रोत्ररसज्ञानविबोधम् ॥

लोहादिचूर्णमम्बुप्रभवानां पद्मानां केसरं मधुमात्रा माक्षिकस्य स्तोक एव योग एषः सर्वेण सिताभागेन विमिश्रश्चक्षुरादीनां विबोधं करोति ॥

कृत्वैकस्थं माक्षिकधातुं त्रिफलां च
भ्राष्ट्रे पक्त्वा ये सहाविंक त्रिलिहन्ति ।
पथ्यादास्तान् वार्द्धकदोषानभजन्ते
मातुर्दोषास्तन्यानिरतानिव बालान् ॥

माक्षिकधातुं त्रिफलां चैकैकस्थं कृत्वा मिश्रीकृत्य भ्राष्ट्रे पक्त्वा सघृतं ये पुरुषा अवलिहन्ति पथ्याशाः सन्तस्तान् वार्द्धकदोषा

जरादयो न भजन्ते । यथा मातुर्दोषास्त या भिवृत्तान् बालान् सन्त्रधित्वाभावात भजन्ते ॥

समश्नतो माक्षिकधातुचूर्ण
सर्पिर्मधुभ्यां त्रिफलां रजश्च ।
शनैः शनैर्याति जराविनाशं
प्रत्यन्तवासादिव लोकयात्रा ॥

माक्षिकधातुचूर्णं त्रिफलाचूर्णं चैकीकृत्य सर्पिर्मधुभ्यां समश्नतः पुंसो जरा शनैः शनैर्विनाशं याति । यथा प्रत्यन्तग्रामात् गह्वरे निवसनात् लोकयात्रा विनाशं याति । इति साप्यकल्पः ॥

॥ इतो वृद्धदारकः ॥

त्रिकोणकाण्डाः सुवहुप्रतानाः
फलेषु पीताः कुसुमेषु रक्ताः ।
पत्रैःसदुग्धैर्मृदुरोमवद्भि
स्ताम्रूलतुल्यैर्घनकन्दमूलाः ॥

पवनविषमदग्धवनितादिषु कामवशा
विविधमनःशरीरगदद्वन्द्वनिवृत्तिकरी ।
भुवि परमौषधिर्महिषवल्लरीतिमथिता
क्वचिदपि वृद्धदारक इत्यग्निविल्लरिका ॥

त्रिकोणकाण्डादिरूपा परमौषधी भुवि महिषवल्लरीतिप्रथिता क्वचिदपि वृद्धदारक इति क्वचिद्वल्लरिकेति च । पवनादिषु कामवशा वा सातपव्यवायादिषु दुष्टआवृतिरत्यन्तमना विविधानां मनोगतद्वन्द्वानां शरीरगदद्वन्द्वानां च निवृत्तिकरी ॥

वमन्ते सगृहीतानां शोषितानामनातपे ।
वृद्धदारकमूलानां तुलां सचूर्ण्य सर्पिषा ॥
आप्लाव्य घृतपात्रस्थां धान्ये पक्षमुपेक्षिताम् ।
लिह्यादनुपिबेत्क्षीरं जीर्णे क्षीरघृताशनः ॥
तत्प्रयोगाज्जराजीर्णो वृद्धो दारकतामियात् ।
भग्नास्थिर्गद्गदः पगुः कृशोह्रस्वोन्यरूपताम् ॥
निरस्ताशेषदोषोत्थ नखभेदाद्युपद्रवः ।
अपस्मारग्रहोन्मादपाप्मालक्ष्मी विवर्जितः ।
दीप्ताग्निर्बलवान् वाग्मी जीवेद्वर्षशतानि षट् ॥

वमन्ते सगृहीतादिगुणानां वृद्धदारकमूलानां तुलां पलशतं सचूर्ण्य पश्चात् घृतेनाप्लाव्य घृतपात्रे स्थितां धान्यराशौ पक्षमुपेक्षितां पश्चादूर्ध्वं लिह्यात् । अनन्तरं च क्षीरं पिबेत् । जीर्णे च क्षीरघृताशनः स्यात् । तत्प्रयोगाद्वृद्धदारकप्रयोगाद्वृद्धः पुरुषो वर्णादीनामभिनवानां सम्भवाद्दारकतामतितरुणतामियात् । भग्नास्थ्यादिश्चान्यरूपतां यथास्थिताद्वैपरीत्यं याति । तेन भग्नास्थि स्थिरास्थिर्भवति । गद्गदो मधुरवाक् । पगुः सुगतिः । कृशः स्थूलः । ह्रस्वो दीर्घ इति । निरस्ता अपास्ता अशेषा वातादिदोषोत्था नखभेदादयः सूत्रस्थानपठिता उपद्रवव्याधयो येन । अपस्मारादिविवर्जितो दीप्ताग्न्यादियुक्तश्च षड्वर्षशतानि जीवेत् ॥

चूर्णितैरश्वगन्धायाः संयुतं त्रिंशतापलैः ।
तत्तुल्यदारकं प्राश्य पयसा सर्पिषाऽथवा ॥
जीर्णे पूर्ववदश्नीयाद्योजीवेत् ससमाः शतम् ।
वाजिवेगो गजप्राणः सुरूपो भास्करद्युतिः ॥

अश्वगन्धायास्त्रिंशत्पलस्य चूर्णेन तत्तुल्यमेव त्रिंशत्पलं वृद्धदारकसंयुतं पयसा सर्पिषा वा प्राश्य सकिर् जीर्णे पूर्ववदिति क्षीरघृताभ्यां य पुरुषोऽश्नीयात् स समाशतं वर्षशतं जीवेत् वाजित्वेनादिषु अश्व भवेत् । भास्करयुतिः सू र्यतेजा ॥

अश्वगन्धेनसंयोज्यौ शरीगोक्षुरकौ पृथक् ॥

अश्वगन्धाप्रकारेण वृद्धदारकप्रयोगे शतावरी योज्या । तद्वदेव गोक्षुरकोपि ॥

यो लिह्यात् सर्पिषा चूर्णं वृद्धदारकमूलजम् ।
सप्ताहं यूपभक्ताशीस्यात्स किंमरतुल्यवाक् ॥

यो लिह्यादित्यादि । य पुरुषो वृद्धदारकमूलजं चूर्णं सर्पिषा सह सप्ताहं लिह्यात्, यूपभक्ताशी च स्यात् स किन्नरसमानवाक् स्यात् ॥

स्वरसेन शतावर्या सप्ताहं भावितं च तत् ।
लिहानः पूर्ववन्मासं शतं जीवेन्महामतिः ॥

तत् वृद्धदारकमूलचूर्णं शतावरीस्वरसेन सप्ताहं भावितं पूर्ववदिति सर्पिषा मासं लिहानो महामतिः सन् वर्षशतं जीवेत् ॥

लिह्याद्वा मधुसर्पिर्भ्यां धात्रीस्वरसभावितम् ।
क्षीरेण वा पिबन्मासं शतं जीवेदरुक्सुधीः ॥
वृद्धदारकमूलानां रसं क्षीरेण यः पिबेत् ।
तत्कल्कसिद्धं सर्पिर्वा सजीवेन्नीरुजः शतम् ॥
पीतं वेल्लरिकामूलं गोमूत्रेण सहोषितम्
कुष्ठगुल्मोदरगरश्लीपदान्यपचीं जयेत् ॥

धात्रीस्वरसभावितस्य वृद्धदारकमूलचूर्णस्य मासं मधुसर्पिर्भ्यां लेहनं क्षीरेण पानं वा । अरुक्सुधीः ॥ तत्कल्कसिद्धमिति वृद्धदारकमूलकल्कसिद्धम् । सहोषितं भावितम् ॥

पिप्पली त्रिफला दार्वी महौषधपुनर्नवाः ।
पृथग्दशपलाः सर्वतुल्यांशो वृद्धदारकः ॥
धान्याम्लपीतस्तच्चूर्णो जीर्णे स्वच्छन्दभोजनं ।
श्लीपदामयमेहांश्च गुल्मोदरगरान् हरेत् ॥

पिप्पल्यादीनि सप्त पृथग्दशपलानि सर्वैः समो वृद्धदारकः । सुबोधम् । आममहामवात ॥

शौण्डी बिभ्रत्यद्वीपि वेल्लमुस्ताः समाग्रः ।
तुल्यवेल्लरिकामूला साज्यक्षौद्रास्तथागुणाः ॥

शौण्ड्यादीन्यष्टौ समभागानि [illegible] वेल्लरिकामूलम् । अस्याज्यक्षौद्राभ्यां [illegible] तथागुणा इति श्लीपदादीन् जयेत् [illegible] पिप्पली । वरा फलत्रयम् ॥

तत्फलात्स्वरसकर्षं [illegible] ।
गव्यं पिबेदनु पयो [illegible] ॥
पश्चाहेन जयेत् कामान् [illegible] ।
महाकुष्ठानि मासेन [illegible] तु ।
पञ्चवर्षशतायुष्मान् [illegible] ॥

वृद्धदारकस्वरसस्य कर्षं तावदेव क्षौद्रमिति लिहन् गव्यं [illegible] वा पयः ।

वेल्लरीफलमूलानां पिप्पल्याश्च समं रजः ।
वेल्लरीफलमूलोत्थस्वरसेनैव भावयेत् ॥

अमृतायाः रसेनानु ततः शुष्कं घृताप्लुतम् ।
निखनेत् घृतकुम्भस्थं करीषे बहुसञ्चये ॥

मासादुद्धृत्य तं लेहं यो वपुमुपयोजयेत् ।
सहस्रायुः सजरसां सहसानाभिभूयते ॥

एकोभागो वेल्लर्याः फलमूलानां चूर्णस्य । द्वितीयः पिप्पलीरजसः । तद्वल्लरीफलमूलस्वरसेनैव भावयेत् । अनन्तरं गुडूचीरसेन भावयेत् । ततः शोषयित्वा घृतेनाप्लाव्य घृतकुम्भस्थं बहुसञ्चये करीषे गोमये निखनेत् । ततो व्याख्यासमम् । इति वृद्धदारकल्पः ॥

॥ कुष्ठस्य प्रयोग उच्यते ॥

कुष्ठचूर्णतुलां क्षौद्रघृतस्य द्वितुलान्विताम् ।
धान्यराशौ दिनशतं निहितामुपयोजयेत् ॥
सुगन्धिकायो दृक्श्रोत्रस्वरवर्णोऽतीन्द्रियः ।
गतव्याधिजरो जीवेत् सप्तवर्षशतानि ना ॥

कुष्ठचूर्णपलशतं क्षौद्रपलशतं घृतपलशतं चैकाकृत्य धान्यराशौ दिनशतस्थितं ततः पुरुष उपयोजयन् सुगन्धिकायो भवति । दृगादिषु चातीन्द्रियोऽतिशयेनाश्चर्यभूतत्वात् । गतव्याधिजरश्च सप्तवर्षशतानि जीवेत् । इति कुष्ठस्य प्रयोगः ॥

एते च सर्वे प्रयोगाः कुटीप्रवेशमधिकृत्योक्ता अतः स एवोपसंह्रियते ॥

कुटीप्रवेशः क्षणिनां परिच्छदवतां हितः ।
अतोऽन्यथा तु ये तेषां सौर्यमारुतिको विधिः ॥

क्षणिनाम् अन्यव्यापाररहितानां परिच्छदवतां च कुटीप्रवेशो हितः । परिच्छदोऽनेकविधमुपकरणम् । अतो यथोक्तादन्यथा वैपरीत्येन ये क्षणिनः परिच्छदवन्तश्च न भवन्ति तेषां सौर्यमारुतिको विधिर्हितः । [कुटीप्रवेशः क्षमिणां परिच्छदवतां हितः इति चरकपाठः । कुटीप्रावेशिकवातातपिकयोर्विषयप्रदर्शनायाह । कुटीप्रवेश इत्यादि । क्षमिणां कृतक्षमाणां न पुत्रदारकुटुम्बधनवर्षणादर्शाकुलानामित्यर्थः । परिच्छदवतां सर्वोपकरणवतामिति यावत् । इति जर्जटः ॥ ]

वातातपसहा योगा वक्ष्यन्तेऽतो विशेषतः ।
सुखोपचारा भ्रंशेपि ये न देहस्य बाधकाः ॥

वातातपसहा इत्यादि । सुबोधम् ॥

शीतोदकं पयः क्षौद्रं घृतमेकैकशो द्विशः ।
त्रिशः समस्तमथवा प्राक्पीतं स्थापयेद्वयः ॥

शीतोदकादिकमेकैकं वा द्वे द्वे वा त्रीणि त्रीणि वा समस्तमेव वा प्राक्पीतं वयः स्थापयेत् जीर्णत्वाद्भक्तं ॥

हरीतकीमामलकाक्षधात्री
श्चूर्णीकृता लोहरजोविमिश्राः ।
सर्पिर्मधुभ्यामदतः शरीरं
कालाग्रदूती न जरा दुनोति ॥

हरीतक्यादिकं मधुसर्पिर्भ्यां सह दत्तो भक्षयतः पुंसः शरीरं कालस्याप्यद्भुती जरा न दुनोति नोपतापयति ॥

हरीतकीमागधिकाविडङ्ग
शशाङ्कलेखामलकच्छवीनाम् ।
सितोपलातैलघृतान्विताना
रोगा न लेढारमभिद्रवन्ति ॥

हरीतक्यादीनां सितोपलाद्यन्वितानां लेढारं लिहानं पुरुषं रोगा नाभिद्रवन्ति नाभिधावन्ति । आमलकच्छविरामलकफलं त्यजितास्थि ॥

त्रिफलामसनोदकेन पिष्टां
रजनीं पर्युषितामयः कपाले ।
मधुना मधुरां लिहन् हिनस्ति
स्थविमानं जरसं गदांश्च सर्वान् ॥

असनोदकेन बीजकजलेन पिष्टां त्रिफलां रजनीं रात्रिमयः कपाले शस्त्रपात्रे पर्युषितां मधुना माक्षिकेण मधुरामापादितमाधुर्यां लिहन् पुरुषः स्थविमादिकं हिनस्ति नाशयति ॥

खादिरासनयूपभाविताया-
स्त्रिफलाया घृतमाक्षिकप्लुतायाः ।
नियमेन नरा निषेवितारो
यदि जीवन्त्यजराः किमत्र चित्रम् ॥

खदिरादिक्वाथभाविताया [illegible]
प्रयोगः सुबोधः ॥

असनस्वरसेन भाविताना-
मभयानां सविडङ्गतण्डुलानाम् ।
मधुलोहरजोघृताप्लुताना
न हि लेढारमभिद्रवन्ति रोगाः ॥

अभयानामादौ विडङ्गतण्डुलैर्योजन-
मनन्तरमसनोदकेन भावनं ततो मध्वादिभिर्योजनम् । सुबोधम् ॥

बीजकस्य रसमङ्गुलिहार्यं
शर्करामधुघृतं त्रिफलां च ।
शीलयत्सु पुरुषेषु जरत्वा
स्यागतापि विनिवर्त्तत एव ॥

अङ्गुलिहार्यो योऽङ्गुल्या आहर्तुं शक्यते तम् । एवंविधं प्रयोगं शीलयत्स्वतिशयेनागतापि जरत्वा विनिवर्त्तते । वृत्तस्य नाम मनसि स्फुरत्येव ॥

दर्वीप्रलेपास्त्रिफलाकषायः
सितोपला तैलमधुप्रगाढः ।
सपिप्पलीनागरलोहरेणु-
स्तनोः सपर्णां जरसं निहन्ति ॥

त्रिफलाया कषायो घनत्वेन दर्वीप्रलेपः सितोपलादिभिः प्रगाढः पिप्पल्यादिभिर्युक्तस्तनोः शरीरस्य सपर्णां जरसं निहन्ति ॥

फलत्रयत्र्यूषणचूर्णयुक्तां
द्राक्षां ससर्पिर्मधुशर्करां च
क्षीरानुपानं पुरुषा लिहन्तो
[illegible]

फलत्रयादिचूर्णयुक्ता सार्विरादियुता च द्राक्षा क्षीरानुपानं लिहन्त पुरुषा निर्धूतजरा विकारा जीवन्ति ॥

हरीतकीं सर्पिषिसम्प्रताप्य
समश्नतस्तत् पिबतो घृतं च ।
भवेच्चिरस्थायिबलं शरीरे
सकृत्कृतं साधु यथा कृतज्ञे ॥

सर्पिषि घृत हरीतकीं सम्प्रताप्यतामेव समश्नतस्तदेव च घृतमनुपिबत शरीरे बलं चिरस्थायि भवति तथा यथा कृतज्ञे पुरुषे सकृदेकवारमेव कृतं यत् किञ्चित् साधु चिरस्थायि भवति ॥

आराचितानां कलशं पुराणं
धात्रीफलानां मधुनश्च पूर्णम् ।
संवत्सरार्द्धं निहितं यवेषु
निषेवमाणो जरसं निहन्ति ॥

मृण्मयं पुराणं कलशमाराचितानां बहुकालसञ्चितानां धात्रीफलानां माक्षिकस्य च पूर्णं यवराशौ संवत्सरार्द्धं षण्मासं निहितं निषेवमाणः पुरुषो जरसं निहन्ति । पूरणशेषेन षष्ठी । अत्र च यथाप्रयोगं गुणातिशयः ॥

मार्कण्डिपत्रासनसारचूर्णं
सतैलसर्पिर्मधुलोहरेणु ।
निषेवमाणस्य भवेज्जरस्य
तारुण्यलावण्यमपि प्रणष्टम् ॥

धान्यादिकं निषेवमाणस्य तारुण्यं लावण्यं च प्रणष्टमपि भवति ॥

नवामलकशुक्तयो मधु घृतं रजश्चायसं
चतुष्टयमयोघटस्थमिति चूर्णितं वत्सरम् ।
क्रमेणलिहत पयोनुपिबतश्च पथ्याशिनं
श्चिरभवति जीवितंक्षयमुपैति पृथ्वी जरा ॥

नवानामामलकानां शुक्तयो दलानि मधु घृतमयोरजश्चेत्येतच्चतुष्टयमर्थात् सम चूर्णकरणयोग्यं कालमयोघटे स्थितं ततस्तच्चूर्णितं क्रमेण स्तोकाभिवृध्या वत्सरं लिहतोऽनुपयः पिबत पुंसः पथ्याशिनः सतो जीवितं चिरं भवति जरा च पृथ्वी विस्तीर्णापि क्षयमेति ॥

चूर्णं श्वदंष्ट्रामलकामृताना
लिहन् ससर्पिर्मधुभागयुक्तम् ।
वृषस्थिरःशान्तविकारदुःखः
समाः शतं जीवति कृष्णकेशः ॥

विडङ्गसारं मधुकं च पिष्टं
भल्लातकक्वाथमधुप्रगाढम् ।
अर्शांसि जन्तूंश्च जयत्युदीर्णान्
वह्निं च सन्धुक्षयति क्षणेन ॥

विडङ्गभल्लातकचित्रकाणां
गुडोत्तराणामभयान्वितानाम् ।
तैलेन चूर्णानि निषेवमाणान्
शरीरिणोनोपतपन्ति रोगाः ॥

श्वदंष्ट्रादिचूर्णं व्याख्यासमम् । विडङ्गसारादिकं विडङ्गभल्लातकादिकं च । गुडोत्तरं गुडाधिकम् । तैलेनोपयुज्यते ॥

विळङ्गभल्लातकनागराणि
येऽश्नन्ति सर्पिर्मधुसयुतानि ।
जरानदी रोगतरङ्गिणीं ते
लावण्ययुक्ता पुरुषास्तरन्ति ॥

ये पुरुषा विडङ्गादिकमश्नन्ति ते जरानदीं लावण्ययुक्तास्तरन्ति । किम्भूतामाह । रोगतरङ्गिणीं रोगा एव ह्यवगाढत्वात्तरङ्गा । जरोपशमे पुरुषस्य यतो लावण्यादिकं स्यात् ॥

विळङ्गकल्क स्वरसेन धात्र्या
क्षौद्रेण युक्त च पिबेन्नरो य ।
द्राक्षारसक्षौद्रपरिप्लुत वा
विजित्य रोगान् स भवेच्छतायुः ॥

विळङ्गकल्कस्य धात्रीरसक्षौद्राभ्या वा द्राक्षारसक्षौद्राभ्या वा प्रयोग ॥

चूर्ण सम मागधिकाकणाना
विडङ्गचूर्णेन सचित्रकेण ।
निषेवमाणो मधुतैलमिश्र
वय.परीणामजले न मज्जेत् ॥

मागधिकाकणाना पिप्पलीतण्डुलाना चूर्ण सचित्रकेण विडङ्गचूर्णेन सम चित्रकविडङ्गचूर्णसम पिप्पलीचूर्णमित्यर्थ । वय परिणाम एव विनाशहेतुत्वाज्जलम् ॥

पुनर्नवस्यार्द्धपल पल वा
पिष्ट पिबेत् पयसार्द्धमासम् ।
मासद्वय तत्त्रिगुण समां वा
जीर्णोऽपि भूय सपुनर्नव. स्यात् ॥

मूर्वाबृहत्यंशुमतीवलाना-
मुशीरपाठासनशारिवाणाम् ।
काळानुसार्यागरुचन्दनाना
वदन्ति पौनर्नवमेव कल्पम् ॥

पुनर्नवस्यार्द्धपलमित्यादि सुबोधम । मूर्वाबृहत्यादिक च ॥

शतावरीकल्ककषायसिद्ध
ये सर्पिरश्नन्ति सिताद्वितीयम् ।
तान् जीविताध्वानमभिप्रपन्नान्
न विप्रलुम्पन्ति विकारचोरा. ॥

ये शतावरीकल्ककषायसिद्ध सर्पि सितया सहाश्नन्ति तान् जीविताध्वानमायुरेव पन्थानमभिप्रपन्नान् प्राप्य विकारचोरा न विप्रलुम्पन्ति न लुण्ठयन्ति ॥

पीताश्वगन्धा पयसार्द्धमास
घृतेनतैलेन सुखाम्बुना वा ।
कृशस्य पुष्टिं वपुषो विधत्ते
बालस्यसस्यस्य यथा सुवृष्टि. ॥

पय आदीनामन्यतमेनार्द्धमासमश्वगन्धा पीता कृशस्य बालस्यवपुषस्तथा पुष्टिं विधत्ते यथा सस्यस्य सुवृष्टि ॥

दिने दिने कृष्णतिलप्रकुञ्च
समश्नत शीतजलानुपानम् ।
पोष शरीरस्य भवत्यनल्पो
दृढीभवन्त्यामरणाच्च दन्ताः ॥

शिलाजतुक्षौद्रविडङ्गसर्पि
र्लोहाभयापारदताप्यभक्षः ।
आपूर्यते दुर्बलदेहधातु
क्षिप्रश्चरात्रेण यथा शशाङ्कः ॥

दिनेदिन इत्यादि प्रयोगद्वयं व्याख्या-समम् । प्रकुञ्चं पलम् । पारदं शिलाजतु ताप्याभ्यां मर्दितुं योग्यं भवति । यथा शशाङ्कश्चन्द्रः क्षिप्रं त्रात्रेण पक्षेणापूर्यते तद्वद्रसादयपि ॥

मधुमधुरमा लाजा भार्ङ्गी मधूकशतावरी
कमलकुसुमत्वक्क्षीरीभिः समं जतु पार्वतम् ।
प्रचुरहविःपालेह लीढ्वा समृद्धसितोपलं
शिथिलजरसोमन्दातङ्का भवन्ति चिरायुषः ॥

मध्वादीनामेकोभागो द्वितीयश्शिलाजतु न इत्येवलेह्य प्रचुरघृतं समृद्धशर्करं च लीढ्वा पुरुषाश्शिथिलजरसः स्वल्पजरा स्वल्पव्याधयश्चिरजीविताश्च भवन्ति ॥

गायत्रीशिखिशिंशपासनशिवा
वेल्लाक्षकाराष्कराना
पिष्ट्वाष्टौ दशषट्गुणेऽम्भसि धृतान्
खण्डे सहायोमये ।
पात्रे लोहकृते त्र्यहं रविकरै
रालोळयन् पाचये-
दष्टौ चातुमृदौ सलोहशकलं
पादस्थितं तत् पचेत् ॥

पूतस्यांशः क्षीरतोंशस्तथांशौ
मार्ङ्गीनिर्यासात् पित्र्यांस्त्रयोंशाः ।
अशाश्वत्वारस्तत्र्यव्यङ्ग्नीना-
देकीत्येतत् साधयेत् कृष्णलौहे ॥

निमलया सितया मधुनाथवा
युतमयुक्तमिदं यदि वा घृतम् ।
स्वरुचिभोजनपानविचेष्टितो
भवति ना पलशः परिशीलयन् ॥

श्रीमान् निर्धूतपाप्मा वनमहिषबलो
वाजिवेगः स्थिराङ्गो
केशैर्भृङ्गाङ्गनीलैर्मधुसुरभिमुखो
नैकयोषित्निषेवी ।
वाग्मेधावीसमृद्धः सुपटुः हुतवहो
मासमात्रोपयोगा
द्धत्तेसौ नारसिंहं वपुरनलशिखा-
तप्तचामीकराभम् ॥

गायत्र्यादिना नारसिंहघृतम् । गायत्री खदिरः, शिखी चित्रकः, असनं बीजकम् । शिवा हरीतकी, अक्षकं बिभीतकम्, एतान्यष्टावौषधानि समानि पिष्ट्वा एतेभ्यो मानेन षोडशगुणेऽम्भस्यौपधमेभिः शकलैर्धृतानि त्र्यहमादित्यतापेनालोळयन् चालयन् पाचयेत् । चतुर्थेह्नि तथाविधमेव चतुर्भागशेषं तन्मृदुनाग्निना पचेत् तत परिपूतं क्वाथं गृहीत्वाऽनेन समो भागो क्षीरस्य देयः । क्षीरयुक्तेन तेनैव समो भृङ्गस्वरसात् भागः । क्वाथात्त्रिगुणं पित्र्यां शतावर्या स्वरसं क्वाथाच्चतुर्गुणं हृव्यङ्गवीनं ह्रो दोहस्य विकारो नवनीतम् । कृष्णलौहं इति शस्त्रपात्रे सिद्धमतिशुद्धया शर्करया वा माक्षिकेण वा युतं प्रयोगस्य बलस्य चार्थे । अत्र च भोजनादिकं स्वरुच्या । पलशः इति यथासामर्थ्यं मात्रा । भृङ्गाङ्गं भ्रमरशरीरम् । मधु

मार्द्वीक तस्य पानात् सुराभिमुख । असौ प्रयोक्ता पुरुषस्तु नारसिंह वपुर्धत्ते । किम्भूतमाह । अनलशिखाभिरग्निज्वालाभिस्तप्त यच्चामीकर सुवर्ण तदाभम् ॥

हविरिदमतिप्रभाव
स्वमिववपुर्निर्मित नृसिंहेन ।
नश्यन्ति यतो भीता
व्याध्याधिजरासुरा दूरात् ॥

इदमतिप्रभाव हविर्घृत स्वमिव शरीर भगवता नरसिंहेन निर्मितम् । यतो घृताद्व्याध्याद्यसुरा दूरान्नश्यन्ति पलायन्ते । यथा हि नरसिंहवपुषेऽसुरा दूरान्नश्यन्ति तथैवास्मात् घृताद्व्याध्यादय इत्यर्थ । आधयो मनोरोगा ॥

भृङ्गप्रवालाननुमैस्यमृष्टान्
घृतेन य. खादति यन्त्रितात्मा ।
विशुद्धकोष्ठोऽसनसारसिद्ध
दुग्धानुपस्तत्कृतभोजनार्थ ॥

मासोपयोगात् ससुखी जीवत्यब्दशतत्रयम् ।
गृह्णाति सकृदप्युक्तमविलुप्तस्मृतीन्द्रिय ॥

योऽनेनैवकल्पेन इत्यङ्गवीनविधानेन सिद्ध तैलमुपयोजयेत् । सतानेवानन्तरोक्तान् गुणानाप्नोति कृष्णकेशश्च जायते भवति ॥

काश्मर्याणातुलामास स्थितांमधुघृतोक्षिताम् ।
उपयुज्य पयोभाशी चिर जीवति कान्तिमान् ॥

काश्मर्या फलाना तुलापलशत या मधुघृताभ्या सिक्ता सती मास स्थित। ता पयोभाशी सन्नुपयुज्य चिर जीवति कान्तिमाश्च भवति ॥

उक्तानीत्यादिना रसायनान्युपसंह्रियन्ते ॥

उक्तानि शक्यानि फलान्वितानि
युगानुरूपाणि रसायनानि ।
महानुशसान्यपि चापराणि
प्राप्तयादिकष्टानि न कीर्तितानि ॥

तान्येतानि रसायनान्युक्तानि यान्यास्मिन् कलियुगे कर्तुं शक्यन्ते फलान्वितानि च भवन्ति । अपराणि तु येषा महान्ति फलानि शसितानि प्राप्त्युपयोगाधिकारादिना यतोऽतिकष्टान्यतो न कीर्तितानि ॥

अमानुषाणामतिविस्मयाना
सत्कर्मणा यद्यपि तानि हेतुः ।
समूलकाष तु कषन्ति देह
भ्रशाद्विधेस्ते न विवर्जितानि ॥

यान्यत्यमानुषाणा मनुष्यासम्भविना मत्याश्चर्याणामुत्कृष्टाना योगादीना कर्मणा यद्यपि हेतुस्तथापि विधे शास्त्रोक्तस्य भ्रशाद्देह समूलकाष कषन्ति हिंसन्ति तेन हेतुना तान्यत्र विवर्जितानि ॥

युगस्वभावादित्यादिना रसायनफलानामलाभाशङ्का निवार्यते ॥

युगस्वभावाद्यदिचौषधीना
क्रियासुशक्ति परिकल्प्यतेल्पा ।
आयुर्बलादिष्वपि सा तथेति
यत्नाक्षिपेव्याणि रसायनानि ॥

यदि च जनेन युगस्वभावादौषधीनामल्पाशक्ति क्रियासु परिकल्प्यते तर्ह्यायुर्बलादि-

ष्वपि सा तथेत्यल्पैव । तस्माद्रसायनानि द्रव्याणि यत्नाभिषेव्याणि । यदि हि कृतयुगसममेवाद्यापि आयु स्यादौषधीना च युगस्वभावादल्पवीर्यत्व ततो युज्येत रसायनानामनिषेवणम्। यावता यथौषधयोऽल्पवीर्यास्तथायुरादीन्यपि सुतरामिति ॥

नचौषधीनामपिसर्वथैव
प्रभावहानि परिकल्पनीया ।
फलप्रयात्यू र्वमथस्त्रिवृत्तु
प्रत्यक्षत कस्य न सिद्धमेतत् ॥

न च सुधिया औषधीना प्रभावहानि सर्वथैत्यवश्य परिकल्पनीया । यन्मदनफल धामयति त्रिवृत्तु विरेचयतीत्येवमादीन्यपि कस्य प्रत्यक्षसिद्ध न भवति ॥

अदेशकालेत्यादिना श्लोकद्वयेन रसायनाना सम्यग्विधाने यत्न प्रदर्श्यते ॥

अदेशकालोपहितान्यसात्म्या-
न्यत्युष्णतीक्ष्णानि यथौषधानि ।
नाश नयन्ते सहसैव देह
सम्यक्प्रयुक्तानि तथैव वृद्धिम् ॥
जित्वा तस्मादिन्द्रियादीन् सुदुष्टान्
कालोपेत श्रद्दधानो यथावत् ।
आयु प्रज्ञातेजसां यद्विवृध्यै
वीर्योपेत शीलयेदौषध तत् ॥

औषधान्यदेशकालोपयुक्तादीनि यथैव सहसा देह नाश नयन्ति तथैव सम्यक् प्रयुक्तानि सहसा वृद्धिं नयन्ति प्रापयन्ति । यत एव तस्मादसम्यगौषधविधाने विशेषहेतून् सुदुष्टानिन्द्रियादीन् शत्रून् जित्वा वशे कृत्वा काले श्रद्धान श्रद्धावान् यदौषधमायुरादीना विवृद्ध्यै वीर्ययुक्त भवति तदेव यथावच्छीलयेत् ॥

उत्साहधीरैरित्यादिना रसायनप्रयोगे नियमपरत्वमुच्यते ॥

उत्साहधीरैरपि सर्वकाल
नरैरगम्यानि तपोदरिद्रैः ।
महार्णवानामिव दुस्तराणा
पाराण्यपाराणि रसायनानाम् ॥

यथा तपसा दरिद्रै पुरुषैरुत्साहधीरैरपि दुस्तराणा महार्णवानामपाराणि पाराणि सर्वकालमगम्यानि भवन्ति तथैवापाराण्यन्त्यानि रसायनानाम् । [ उत्साहधीरैरिति च पाठ ॥ ]

रसायनानामुपयोगसम्पदा
कृतप्रसादैर्मलदोषधातुभि ।
स्थिर शरीर क्रियते शरीरिणां
कुल यथा सत्पुरुषैरधिष्ठितम् ॥

रसायनाना पथ्यामलकादीना य उपयोगस्तस्य सम्पदा परिपूर्णतया कृतप्रसादैर्मलदोषधातुभि कर्तृभि शरीरिणा शरीर स्थिर क्रियते तथा यथा सत्पुरुषैराधिष्ठित कुलम् ॥

दान्तेन्द्रियेण शास्त्रार्थं यथावदनुतिष्ठता ।
कियद्वा दीर्घदर्शित्व नेन्द्रत्वमपि दुर्लभम् ॥

अथवा शास्त्रोक्तविधानेन रसायनफलावाप्ति कियन्मात्रा । दान्तेन्द्रियत्वादियुक्तेन पुरुषेण इन्द्रत्वमपि न दुर्लभम् ॥

सारो हि जीवलोकस्य स्त्री स्त्रीगुणसमन्विता ।
स्त्रियः सादृश्यः प्रसुवते नरान् गुणमयानिव ॥

गोत्रवृद्धिकरा ह्येता गृहिण्यो गृहदेवता. ।
गृह हि हीनमेताभिर्न्नश्रीमदपि शोभते ॥

जीवलोकस्यैव सारा यत् स्त्री स्त्रीगुणस मन्विता भवतीति । सादृश्य स्त्रियोगुणैरिव- कृतान् नरान् प्रसुवते । एता इति सादृश्य स्त्रिय । गृहिण्या भार्या ।

न तु ता अपि शोभन्ते जरसानुगता इव ।
पुयोगेन विना स्त्रीणा स हि सवनन परम् ॥

ता अपि स्त्रिय पुयोगेन विना तु तथा न शोभन्ते यथा जरसाऽनुगता । स हि पुयोग स्त्रीणा पर सवनन वशीकरणम् । (पुरुषरहिता स्त्रिय स्वतन्त्रत्वाच्च इत्यर्थ ॥ )

वाजीकरणनित्यस्य काम काम सिषेविषो' ।
न शरीरमवाप्नोति न वा रतिरति क्षयम् ॥

य पुरुषो वाजीकरणनित्यस्तस्य काम मिच्छया काम स्त्रीसङ्गम सिषेविषोरपि शरीर क्षय न प्राप्नोति । रतिरतिश्च क्षय न नावाप्नोति ॥

अच्छाय. पूतिकुसुम फलेनरहितोद्रुम' ।
यथैकश्चैकशाखश्च निरपत्यस्तथा नर ॥

द्रुमो यथा ... परिहा
र्या निरुपकारश्च भवति ... नर ॥

अदृष्टपुत्रपौत्रस्य कुलतन्त्वन्तवर्त्तिन' ।
ससारसुखबाह्यस्य कीदृश नाम जीवितम् ॥

अथवा येन पुत्रपौत्रमदृष्ट स कुलतन्तोरन्ते वर्तते अत एव च ससारसुखात् बहिर्भूतस्तस्य दृशस्य कीदृश नाम जीवित तज्जीवितमेव न भवतीत्यर्थ ॥

असम्बन्धोवपुत्रस्य नित्यमेव पर पर. ।
सीदत्यस्यावसाने च गृह सुस्थेऽप्यनायकम् ।
अतो वाजीकरायोगा निषेव्या शुक्रवर्द्धना ॥

अपुत्रस्य हि परोऽन्यो विशिष्टेन सम्बन्धेन रहितो नित्यमेवपर स तद्धितस्याश्रयोऽसाधारणसम्बन्धाभावादित्यर्थ । अस्य चापुत्रस्यावसाने नयोऽन्ते सुस्थेपि । धनादिसद्भावेऽप्यनायक गृहमवसीदति । यत एव सत शुक्रस्यवर्द्धना वाजीकरा योगा निषेव्या ॥

कल्पस्योदग्रवयसो वाजीकरणसेविन ।
सर्वेष्वृतुष्वहरहर्व्यवायो न निवार्यते ॥

कल्पस्यनीरोगस्य प्रत्यग्रवयसो वाजीकरणसेविनश्च पुस सर्वेषु ऋतुषु षट्स्वपि अहरहर्दिनेदिने व्यवायो मैथुन न निवायते न निषिध्यते ॥

चिन्ताजराभ्याशुक्र तु व्याधिभि कर्मकर्शनात् ।
क्षयगच्छत्यनशनात् स्त्रीणा चातिनिषेवणात् ॥
शुक्रक्षयात् भयाच्छोकादविस्रम्भाद्दसेवनात् ।

शरेक्षुकुशकाशाना विदार्या वीरणस्य च ।
मूलानि कण्टकार्याश्च जीवकर्षभकौ बलाम् ॥
मेदे द्वे द्वे च काकोल्यौ सूर्प्यपर्ण्यौ शतावरीम् ।
अश्वगन्धामतिबला मात्मगुप्ता पुनर्नवाम् ॥
वीरा पयस्या जीवन्ती मृद्वीं रास्ना त्रिकण्टकम् ।
मधुकं शालिपर्णीं च भागा स्त्रिपलिकान् पृथक् ।
माषाणामाढकचतुर्द्रोणे सा ।धयेदपाम् ।
रसेनाढकशेषेण पचेत्तेन घृताढकम् ॥
दत्त्वाविदारी धात्रीक्षुरसानामाढकाढकम् ।
घृताच्चतुर्गुण क्षीर पेष्याणीमानि चावपेत् ॥
वीरास्वगुप्ता काकोल्यौ यष्ट्यीफल्गुद्विपिप्पलीम् ।
द्राक्षा विदारीं खर्जूर मधुकानि शतावरीम् ॥
तत्सिद्धपूत चूर्णस्य पृथक्प्रस्थेन योजयेत् ।
शर्करायास्तुकायाश्च पिप्पल्या कुडवेन च ॥
मरिचस्यमकुश्चेन पृथगर्द्धपलोन्मितै ।
त्वगेला केसरै श्लक्ष्णै क्षौद्रद्विकुडवेन च ।
पलमात्र तत खादेत् मत्यह रसदुग्धभुक् ।
तेनारोहति वाजीवकुलिङ्गवत् हृष्यति ॥

शरादीना कण्टकार्यन्ताना मूलानि । व्याख्यासमम् । शर काण्डेक्षु, वीरणमुशीरम् । वीराक्षीरविदारी, पयस्या क्षीरिका, त्रिकण्टको गोक्षुरक । फल्गु काकोदुम्बरिकाफलम्, क्षौद्रस्य द्विकुडव षोडशपलानि । कुलिङ्गश्चटक ॥

माषात्मगुप्ताबीजानामाढक मस्रतोन्मितम् ।
मेदाश्वग-धर्द्धिवरी वीरा यष्टी द्विजीवकम् ॥
शूर्पेऽपा विपचेत्तेन पादशेषेण पाचयेत् ।
विदारीक्षुरसप्रस्थद्वयेनसदृशेन च ॥
सर्पि क्षीरेण हविषो नरात् प्रस्थ मृतेन च ।
सिता क्षौद्रसिताख्याना पृथग्द्याच्चतुष्पलम् ।
पल कणात् पुरोभक्त लिहन्स्तत्पलपूर्वकम् ।
तरुणीष्वतृप्तासुप्रसभ रासभायते ॥

माषात्मगुप्ता बीजाना मिश्रीकृतानामाढकम् । मेदादिक प्रसृतोन्मितमिति । सर्विरिति क्वाथ विदारीक्षुरसे सदृशेन समेन क्षीरेण । सुबोधम् । अस्य योगस्य भक्तात् पूर्व प्रयोगः । पलपूर्वक लिह स्तत्पुरुषो वा पुरुषे अतृप्तासुरुण्यस्वासुरामभाबते रासभ इवाचरति ॥

मेदादिभिश्च कर्षांशै शृत वाष्कयण पय ।
सशर्कराक्षौद्रघृत शुक्रवृद्धिकर परम् ॥

मेदादिभि पूर्वकाथनिर्दिष्टैर्जीवकान्तैः कर्षांशैर्वाष्कयण पय शृत शर्करादियुक्त पर शुक्रवृद्धिकरम् ॥

पयसा पायसस्तेन माषकण्टकारीफलै ।
वृष्यो वेगकर सिद्ध सघृतक्षौद्रशर्कर ॥

तेन च मेदादिसिद्धेन पयसा माषै कपिकच्छुफलैश्च पायस सिद्धो घृतादियुक्तो वृष्यो वेगकरश्च ॥

श्वदंष्ट्राया विदार्याश्चरसे क्षीरचतुर्गुणे ।
घृताढ्य साधितो वृष्यो माषषष्ठिकपायस ॥

क्षीरचतुर्गुणे श्वदंष्ट्रादिरसे घृताढ्य साधितो माषषाष्टिकपायसो वृष्य शुक्रपुष्टिकर ॥

भल्लातकशृतक्षीरं सुबोधम् । दुग्धस्याढकं चतुष्पष्टिपलानि । सुजीर्णस्य सुवृद्धस्यापि । (भल्लातकरसाकृत्करस्यमज्जा ॥ )

स्वयङ्गुप्तेक्षुरकयोर्बीजचूर्णं सशर्करम् ।
धारोष्णेन नरः पीत्वा पयसा रासभायते ।
उच्चटाचूर्णमप्येवं शतावर्याथ योजयेत् ॥

स्वयङ्गुप्तेक्षुरकयोरध्यण्डकोकिलाक्षकयोर्बीजस्य चूर्णं शर्करासहितं धारोष्णेन पयसा पीत्वा नरो रासभायते रासभवदाचरति । सुबोधम् । उच्चटा प्रसिद्धा । (महामुस्ता ॥ )

मूष्यपर्णी द्विकाकोली जीवकर्षभकैः शृतम् ।
लघुना पञ्चमूलेन द्विकाकोलीयुतेन वा ।
पयोतिवृष्यमभ्यस्य वृद्धोपि तरुणायते ॥

मूष्यपर्ण्यादिभिर्वृषभकान्तैः शृतं पयः एकः प्रयोगः । ह्रस्वपञ्चमूलेन काकोलीद्वययुतेन द्वितीयः ॥

क्षीरिणी च श्वदंष्ट्रा च फाणितं शर्करा मधु ।
दृष्टिक्षीरनवसर्पिरेतत् पुंसवनपरम् ॥

क्षीरिण्यादिकं पुरुषेणोपयुक्तं परं पुंसवनम् । क्षीरिणी पयस्या ॥

अश्वत्थफलमूलत्वक्शृङ्गसिद्धं पयो नरः ।
पीत्वा सशर्करं शीतं कुलिङ्ग इव हृष्यति ॥

अश्वत्थस्य फलादिचतुष्टयेन सिद्धं पयः पीत्वा कुलिङ्गवद्धृष्यति ॥

पयः पयस्यया सिद्धं शुक्रकृत्साज्यमाक्षिकम् ॥

पयस्यया सिद्धं पयः प्रयोगो व्याख्यानम ॥

शतावरीकल्करसे पयो दशगुणं घृतम् ।
शृतं सपिप्पलीभौद्रशर्करं वृष्यमुत्तमम् ॥
शतावरीरसप्रस्थं क्षीरप्रस्थचतुष्टयम् ।
प्रस्थं घृतस्य शुक्रस्यश द्राक्षामासी परूषकम् ॥
जीवकर्षभ यष्ट्याह्व बला मेदा कशेरुकम् ।
मियालबीजकाकोलीयुग्मचैकत्र पाचयेत् ।
पक्वपूते क्षिपेच्चास्मिन् कुडवांशां सितोपलाम् ॥
दृष्टिक्षीरानुपं प्राश्य तन्नारीषु द्रुपायते ।
विजयेत च वातास्र पित्तासृग्ज्वरक्षतक्षयान् ॥

शतावरीघृते घृताद्दशगुणं पयः पिप्पल्यादिकं सिद्धस्येयम् । द्वितीये शतावरीरसप्रस्थादौ द्राक्षादिकं शुक्त्यंशमर्द्धपलं चैतस्मिन् भाजने कृत्वा पाचयेदेतच्च घृतं वातास्रादिकं च जयेत् ॥

जीवकक्षीरकाकोली स्थिराहंसपदी घनैः ।
षडांशुगुण्डिका यष्टी मृणालैः कार्षिकैः पचेत् ॥
घृतप्रस्थं दशगुणे क्षीरे तत् बलपुष्टिकृत् ।
वन्ध्यानां पुत्रजननं शुक्रवर्द्धनशोधनम् ॥

जीवकादिघृतं सुबोधम् । हंसपदी त्रिसन्ध्याख्या, कार्षिकं कर्षप्रमाणम्, घृताद्दशगुणं क्षीरम्, वन्ध्यानामप्रजानाम्, शुक्रवर्द्धनं शुक्रशोधनं च ॥

जलाढके स्वयंगुप्ता मूलात् पञ्चपलं पचेत् ।
पादशेषं च सचूर्णं कुडवांशां पृथक्क्षिपेत् ॥
स्वयंगुप्तामूलगोधूममाषेक्षुरकपिप्पली ।

शर्करादिभि पक्का मुरुकारिका कृकवाकु रसानुप खादेत् । कृकवाकुरस कुक्कुटरस । मयूररसादन्यतम वा पिबेत । लिङ्ग मेढ्र ॥

पिष्ट्वा वराहमांसानि दत्त्वा मरिचसैन्धवे ।
कोलवद्गुलिका कृत्वा तप्ते सर्पिषि वर्त्तयेत् ॥
वर्त्तनस्तम्भितास्ताश्च प्रक्षेप्या कौकुटे रसे ।
घृताढ्ये गन्धपिशुने दधिदाडिमसारिके ॥
यथानाभिन्द्याद्गुलिकास्तथा त साधयेद्रसम् ।
त पिबन्भक्षयस्ताश्च बली वालेयवद्व्रजेत् ।
मासानि बलयुक्तानि तथान्यान्यपि कल्पयेत् ॥

पिष्ट्वेत्यादि । सूकरमासेन पिष्टेन मरिचसैन्धवयुक्तेन कृता गुलिकास्तप्ते घृते वर्तयेत् मनागग्निसन्ताप नयेत् । ततस्तेन वर्तनेनस्तम्भिता गृहीतकाठिन्या कौकुटे रसे प्रक्षेप्या । ततस्ता रक्षयन् साधयेत् । घृताढ्य इत्यादि रसविशेषणम् । वालेयो रासभ । कुक्कुटवत्तान्यान्यपि बलयुक्तानि मासानि कल्पयेत् । [तप्ते सर्पिषिभञ्जयेत् । भर्जनस्तम्भितास्ताश्च इति चरकपाठ । व्याख्या । तप्ते सर्पिषि भर्जयेत् । भर्जनस्तम्भितास्ताश्च प्रक्षेप्या कौकुटे रसे इत्यस्यायमभिप्राय. । सर्पिषा तप्तेन नवनीतावस्थामतिक्रान्तेन । नवनीतावस्थाया हि सावशेषकाळेशायावयवत्वादम्लानुगम प्रयोगे नेष्यते । ननु सर्पिषीत्युक्ते तदेव गम्यते कथ पुनर्नवनीताशङ्केति । उच्यते । आचार्या नवनीत घृत जातमित्यत्रिन्नवनीत घृतव्यपदेश । तस्मात्तदपनयनार्थ मिति व्याख्यानयन्ति । तेन च तप्तेन ता सहति मासादयन्ति । तथा न भिद्यन्ते द्रवे क्षिप्ता । दधिदाडिमसारिके इति सारिके सान्द्रीभूत इत्यर्थ । दधि दाडिमाम्लभिष्यते नान्यच्चुक्रादि तस्य शुक्रक्षयहेतुत्वेनाम्नानात् । अम्लोऽम्ल पच्यते अम्लश्चपाक शुक्रनाशन । इति जज्जट. ॥ ]

माषानकुञ्चितान्शुद्धान् निस्तुषान्साजहाफलान्
घृताढ्ये माहिषरसे दधिदाडिमसारिके ॥
प्रक्षिप्यसाधयेद्युक्त्या धान्यजीरकनागरैः ।
पीतो भुक्तश्च स रस कुरुते शुक्रमक्षयम् ॥

अङ्कुरितत्वादियुक्तान् माषानजहाफलसयुक्तान माहिषमासरसे घृतभूयिष्ठे दधिदाडिमप्रधाने प्रक्षिप्य साधयेत् । ससिद्धोरस पीतो भुक्तश्चाक्षय शुक्र कुरुते । अजहा आत्मगुप्ता । [कुरुते शुक्रमक्षयमिति मन्तानमवृत्त्य अक्षयमित्युपचर्यते । इति जज्जट' ॥ ]

हसबर्हिणदक्षाण्डान् भृष्टास्तप्तेन सर्पिषा ।
सुरानुपानान् य खादेत्सतृप्तस्तर्पयेत्स्त्रिय ॥

हसादीना प्रत्येकस्याण्डान् तप्तेन सर्पिषा भृष्टान सुरानुपानान खादेत् ॥

आर्द्राणि मत्स्यमांसानि शफरीर्वा सुभर्जिता ।
तप्ते सर्पिषिय.खादेत् स गच्छेत् स्त्रीपुनक्षयम् ॥

आर्द्राणा मत्स्यमासाना शफरीमासाना च घृतभृष्टाना प्रयोग सुबोध । शफरी रोहित । [मत्स्यशब्दस्य सामान्यत्वाभिधित्वेपि रोहितस्य ग्रहण प्रधानकल्पनाश्रयणात् रोहितो मत्स्यानामिति । इति जज्जट ॥]

घृतभृष्टान्सूसे छागे रोहितान् फलसारिके ।
अनुपीतरसान् सिद्धानपत्यार्थी प्रयोजयेत् ॥

द्राक्षादीनां क्वाथेन क्षीरप्रस्थं पचेत् । क्षीरशेषम् । सिताज्यसहितेन तेन क्षीरेण षष्टिकान्नमश्नात् । अजीर्णे आत्मगुप्ता ॥

जीवकर्षभकौ मेदा जीवन्ती श्रावणीद्वयम् ।
खर्जूरं मधुकं द्राक्षा विदारी विश्वभेषजम् ।
शृङ्गाटकानि चपला नव सर्पिः पयो जलम् ॥
घृतावशेषितं सिद्धं शर्करामाक्षिकान्वितम् ।
षष्टिकौदनमश्नीयादुपयोज्य यथाबलम् ।
तद्वृष्यं बलकृद्वर्ण्यं कण्ठ्यं देहस्य बृंहणम् ॥

जीवकादिसिद्धं घृतं शर्करामाक्षिकसहितं यथाबलं षष्टिकान्नयोज्यं वृष्यादिगुणं ॥

गृष्टिर्नैष्कयणीनीरुग्घृष्ष्टशृङ्गी चतुस्तनी ।
सान्द्रस्वादुबहुक्षीरा रूपशीलसमन्विता ॥
भूमिर्माषपर्णेन या सुपुष्टार्जुनेन वा ।
तत्क्षीरं ससिताक्षौद्रघृतं पुंस्त्वरतिप्रदम् ॥

गृष्टित्वादिगुणयुक्ताया इक्ष्वादिना सुपुष्टाया गोः क्षीरं सितादिसहितं पीतं पुंस्त्वं रतिप्रदं च । गृष्टिः प्रथमप्रसवा । वष्कयण्य नवप्रसूता । [गृष्टिरेकवारप्रसूता तस्या उपचितधातुत्वात् पयोऽपि कारणानुविधानात् तद्वदेव भवति । पुष्टग्रहणं चैतत् ज्ञापयति । सात्म्येनोपचितायाः क्षीरमपि तथास्तामाहति । चतुस्तन्यादिभिर्विशेषणैः त्रिस्तन्यविशालत्वनिशङ्कटत्वादयो गवां दोषा इति । एवंविधा या भूस्या चतुस्तन्यादियुक्तेति । एवंविधायाः पयः प्रभावाद्वृष्यतामासादयति । माषपर्णेनेत्यत्र पर्णग्रहणेनैतज्ज्ञापयति स्त म्बवन्तो न फलानीति । प्रा यशो गवा तृणपर्णाचितत्वात् । तस्मात् माषपर्णेनेत्युच्यते । अन्यतृणपर्णपुष्टाया अपि क्षीरं वृष्यमुच्यते । माषपर्णादिभिः पुष्टाया नितरां वृष्यत्वमापाद्यति । अन्ये त्वन्यथा क्षीरत्रयमिति वर्णयन्ति । इक्ष्वादाया माषपर्णादाया अर्जुनादायाश्चेति । इति जज्जट ॥]

शुक्लैर्जीवनीयैर्वा बृंहणैर्बलवर्द्धनैः ।
वयसः स्थापनैश्चैतत् पयः सिद्धं पृथक्पृथक् ॥
युक्तं गोधूमचूर्णेन सघृतक्षौद्रशर्करम् ।
पर्यायेणोपयोक्तव्यमिच्छता शुक्रमक्षयम् ॥

गोर्गृष्ट्यादिगुणयुक्तायाः क्षीरं पयः शुक्रैः शुक्रवर्द्धनैर्मेदाकाकोल्यादिभिर्महाध्यायपठितैर्मेदाकाकोल्यादिभिः जीवनीयाख्यैर्जीवन्तीकाकोल्यादिभिः । बृंहणैर्गोक्ष्यादिभिः । वयसः स्थापनैरमृतापथ्यादिभिश्च पृथक्पृथक्सिद्धमनन्तरं च गोधूमचूर्णेन घृतादिभिश्च युक्तं पर्यायेणेति क्रमेणोपयोक्तव्यमक्षयं शुक्रमिच्छता पुंसा ॥

मेदापयस्याजीवन्तीविदारीकण्टकारिकाम् ।
माषान्श्वदंष्ट्राक्षीरीकागोधूमान्शालिषष्टिकान् ॥
तत्क्षीरेऽर्द्धोदकेसिद्धान् कार्षिकानाढकोन्मिते ।
विसर्जयेत्पयश्शेषं तत्पूतं क्षौद्रसर्पिषा ।
सितया च युतं पीत्वा वृद्धोऽपि तरुणायते ॥

तत्क्षीरे तस्या गृष्ट्यादिगुणयुक्तायाः गोः क्षीरे आढकान्मिते अर्द्धोदके उदकस्यार्द्धेन युक्ते मेदादीन् कर्षांशान् दत्वा सिद्धान् पयश्शेषं कृत्वा तान् विसर्जयेत् ।

क्षौद्रादियुक्तं पीत्वा कुर्वीत तत्समर्पितमपि तक्र- णायते तरुण इवाचरति ॥

मण्डलैर्जातरूपस्य सुवर्णस्य तदपि श्रुतम् ॥
सिद्धं सुवर्णं वृष्यं ससिताघृतमाक्षिकम् ।
रूप्यायस्ताम्रसीसानामयमेव पृथग्विधिः ॥

तत्पयस्तस्या गुरुत्वादिगुणयुक्ताया गा- पय सुते सुवर्णस्य पत्रे श्रुतम् । सिद्धमित्या- दि सुबोधम् । सुवर्णरूप्यादीनामपि चतुर्णां मन्यतमस्य विधिः । [जातरूपस्य सुवर्णस्य शुद्धस्येत्यर्थः । मण्डलैः पत्रैः श्रुतस्य पयसो वि- शिष्टशक्त्युत्पाद । तत्पयस्तस्या गवदादिषु ह्यायाः । इति जज्झटः ॥

चूर्णिता पिप्पली शिशिवं मधुक्षे तैल्सर्पिषो ।
भूयः सशर्कराक्षौद्रा क्षीरेणालोडिता पिबेत् ।
अश्वत्थपष्टिक क्षीरसर्पिर्भ्यां वाजिवद्व्रजेत् ॥

तैलघृतयो मधुच्छेशृतस्य शिशिवपिप्प- लीचूर्णस्य शर्कराक्षौद्रसहितस्य क्षीरेण पानं च ष्टिकान्नस्य च क्षीरसर्पिर्भ्यामशनं वाजीकरणम् ॥

चन्द्रांशुशुभ्रं पयसा घृताढ्यं षष्टिकौदनम् ।
शर्करामधुसंयुक्तं भुञ्जानो ना वृषायते ॥

चन्द्रांशुवच्छुभ्रं षष्टिकस्यौदनं घृतभूयिष्ठं शर्करामधुयुक्तं क्षीरेण भुञ्जानो वृषायते । ना पुरुषः । (चन्द्रांशुकल्पमिति चरकपाठः । षष्टिकौदनस्य चन्द्रांशुकल्पत्वं नस्यापेतकण मलस्याखण्डितधौतस्य ज्ञापनार्थम् । अन्ये तु गौरषष्टिकस्य प्रवरत्वात्तद्विशेषणार्थं चन्द्रांशुक ल्पमिति साम्प्रयायकल्पनेति । इति जज्झटः ॥ )

दध्नः सरेणसघृतो भक्षितः षष्टिकौदनः ।
सेलातुकांपणक्षौद्रः शर्कराढ्येन शुक्रकृत् ॥

शर्कराभूयिष्ठेन दध्नः सरेण आदियुक्तः षष्टिकौदनो भक्षितः शुक्रकृद्भवति । कथम् भक्षितम् । [दध्नः सर आगन्तु द्रवः तेन दोष- वर्जितम् । शर्कराक्षौद्रैरेलेर्युक्तः क्षीरी च बुद्धिमान । शुक्रयायुक्त शुक्लपैल च । इमे शु- चौ पटे । मार्जितं प्रक्षिप्य शीते घृताक्तं षष्टि- कौदने । विशेषतः रसालायामधुरा च षष्टिकौदनम् । वर्णस्वरबलोपेतः पुमांस्तेन वृ- षायत ॥ इति चरके । दध्नः सरमित्यादि । षष्टिकौदनं शुक्लया रसालाया मात्रा पिबेत् । रसाला नाम दधिशर्करया सह पटमृदित च- चतुर्जातककर्पूरादिमधुयुक्तं लोके रसालेत्यु च्यते । इति जज्झटः ॥ ]

अश्वगन्धामार्षभीचैव स्वयङ्गुप्ताफलानि च ।
पादलेपं नरः कृत्वा निशि नैव प्रहीयते ॥

अश्वगन्धादिभिः पादलेपो वाजीकरणः (नि) अश्वगन्धक्षुरकास्तैलकण्टक कोकिलाक्ष- श्च । आर्षभी ऋषभकाख्या । स्वयंगुप्ता आत्मगुप्ता । सैव कपिकच्छूः ॥

वर्षाभूमूलमृद्वीका स्वयङ्गुप्ताफलानि च ।
सिद्धचरणलेपोऽयं शुक्रं पद्भ्यां तु न स्पृशेत् ॥

वर्षाभ्वादिभिश्चरणलेप सिद्धोऽप्रतिहतः । अस्मिन् कृते पद्भ्यां शुक्रं न स्पृशेत् ॥

घृतक्षीराशनो नित्यं निर्व्याधिर्नित्यगो युवा ।
सङ्कल्पप्रवणो नित्यं नरः स्त्रीषु वृषायते ॥

घृतक्षीराशन इति । नित्य घृतक्षीराशनत्वादियुक्तो नर स्त्रीषु नित्य वृषायते । नित्यगो य सदैव स्त्रियं याति । [सङ्कल्पप्रवणकालानुध्यानाभिमुखः सङ्कल्पप्रवणस्तन्नित्यः । नरग्रहण किं स्त्रीषु वृषायत इत्युक्ते गम्यत एव तथा स्त्रीग्रहण च तत्रैव वृषायते नान्यत्रेति स्त्रीग्रहणमपि व्यर्थम् ॥ उच्यते नरग्रहण विना नपुंसकमित्येतत्र ज्ञापयति । स्त्रीग्रहण च सामान्येनैव स्त्रीति प्रवर्तते । इति जर्जट ।]

आत्मगुप्ताफल माषा गोधूम शालिषष्टिकम् ।
इक्षुरिक्षुरक क्षीर क्षौद्र द्राक्षा सितोपला ॥
उच्चटा शरमूलानि विदारी सशतावरी ।
जीवनीयानि खर्जूर मोचचोचफलानि च ॥
एभिर्भक्ष्याणि पेयानि लेह्यानि च घृतानि च
नित्यमासेवमानस्य स्त्रीषु हर्षो विवर्द्धते ॥

आत्मगुप्ताफलादिभि कृतानि भक्ष्यादीनि सदा सेवमानस्य स्त्रीषु विषये हर्षो विवर्द्धते । इक्षुरक कोकिलाक्ष, उच्चटा प्रसिद्धा महामुस्ता, श्वेतगुञ्जिका स्वल्पविटप प्रायशो न दीर्घे दृश्यत इति सुश्रुतटीका । चूडाला चक्रलोच्चटा इत्यमर ॥

जीवनीयघृतक्षीरमधुतैलसितारसै ॥
रसक्षीराशिन क्षिप्र वृष कुर्वन्ति बस्तय ॥

जीवनीयादिभि कृता बस्तयो रसक्षीराशिन नर क्षिप्र वृष कुर्वन्ति ॥

सिद्धबस्तिविकल्पोक्तान् बलशुक्रसुतप्रदान् ।
युञ्जीतबस्तीन् पुत्रार्थी पुत्रकामोदित च यत् ॥

यस्तु पुत्रार्थी स सिद्धबस्तिकल्पाध्यायोक्तान् बलादिप्रदान् बस्तीन् युञ्जीत । तथा-यदपि किञ्चित् पुत्रकामीये शारीर उक्त तदपि युञ्जीत ॥

इदानीमुक्तानुक्तवाजीकरणसंग्रहायाह ॥

यत्किञ्चिन्मधुर स्निग्ध बृंहण बलवर्द्धनम् ।
मनसो हर्षण यच्च तत्सर्व वृष्यमुच्यते ॥

यदित्यादि । यत् किंचि माधुर्यादिगुण वस्तु यच्च मनसो हर्षण तत्सर्व वृष्यमुच्यते । [ननु दध्यादीन्यम्लत्वेऽपि शुक्रजननानि मण्डादीनि रूक्षाण्यपि । अतो यत् किंचिन्मधुरादेतद्विरोधीति । उच्यते । प्रभावात् । दधिमण्डादीन्यम्लरूक्षाण्यपि वाजीकरणानि । न केवल गुणभावादेव द्रव्याणि कारणानि । किन्तु प्रभावादपि । द्रव्यप्रभावश्चाचिन्त्य, शास्त्रैकसमधिगम्य एवेति न कश्चिद्विरोध इति जर्जट ॥]

द्रव्यैरेवविधैस्तस्मात् भावितः प्रमदा व्रजेत् ।
आत्मवेगेनचोदीर्णः स्त्रीगुणैश्च प्रहर्षित ॥

तस्मादेवविधैर्मधुरादिगुणैर्द्रव्यैर्भावित उत्पन्नसंस्कार सन् आत्मवेगेन च पुरुषसद्भाव कृतनोदीर्ण उत्सिक्त स्त्रीगुणैश्च रूपचेष्टादिभि प्रहर्षित प्रमदा व्रजेत । [द्रव्यैरित्यादि । अत्र भावितग्रहणेनैतत् ज्ञापयति यावत् सर्वात्मना निव देहे द्रव्य स्यात्तावत् गन्तव्य न प्रयोगान्तरमेवेति । ननु चात्मवेगेन चोदीर्ण इति व्यर्थ । नहि परवेगेनोदीर्णता सम्भवति । उच्यते । अयमभिप्राय यावदिन्द्रियोद्भूत-

वेग, परा हृष्यताम्रामारूढस्तावत् प्रमदाप्रवेशः । उक्तं च नानुद्भूतवेग इति । स्त्रीगुणैश्च प्रहर्षितो हावभावमदोन्मादादिभिरित्यर्थः । इति अर्जेट ॥ ]

इष्टा इत्यादिना स्त्रिया वृष्यत्वमुच्यते ॥

इष्टा ह्येकैकशोऽप्यर्था हर्षप्रीतिकराः परम् ।
किं पुनः स्त्रीशरीरे ये संघातेन प्रतिष्ठिताः ॥

अर्थाः शब्दादयो विषया ये इष्टास्ते नियतमेवैकशः पृथग्भावेनापि स्थिताः परं हर्षप्रीतिकरा भवन्ति । किं पुनर्ये स्त्रीशरीरे संघातेन उपरतप्रतिष्ठिताः । [सर्ववाजीकरणेऽप्ययोषि स्त्र्येव । वाजीकरणमुत्कृष्टमानन्ददेहतुल्यादिन्याह । इष्टाह्येकैकश इत्यादि । एकैकशोऽप्यर्था विषयाः शब्दादय इष्टाः परं हर्षप्रीतिकरा भवन्ति । एवमर्थानां प्रत्येकं हर्षप्रीतिकरणे सामर्थ्यं किं पुनः स्त्रीशरीरे ये संघातेन प्रतिष्ठिताः । ननु स्त्रीग्रहणेन पर्याप्तत्वात् शरीरग्रहणं किं । उच्यते । एकदेशानामात्ममनसा च व्यावर्तनार्थम् । आत्मन्यपि केचिदवस्थिता मनस्यपि केचित् । तस्माच्छरीरे ये प्रतिष्ठिता इत्यर्थः । किंच । गुणगुणिनोरन्यत्वं चानेन प्रकाशितं भवति । इति अर्जेट ॥ ]

रुचिभेदेन लोकस्य दैवयोगाच्च योषिताम् ।
तं तं प्राप्य विवर्द्धन्ते नरं रूपादयो गुणाः ॥

रुचिभेदेनेत्यादि । तथा रूपादयो योषितां ये गुणास्ते नरं विशिष्टं प्राप्य विवर्द्धन्ते । य एवैकस्य न किंचिदप्यनुरूपास्त एवापरस्यापरिमेया इति भवन्ति । अस्य च रागविरागस्य हेतुर्लोकानां रुचिभेदो विभिन्नरुचित्वम् । तथा स्वभावात् । यथा दैवयोगतः यस्य तथाविधमदृष्टं भवत्येतदाहितरागाभिमुखता त्रियामम् । न किंचित् कल्पितं तद्विति किंचिदपि प्रतिभाति ॥

तस्मात्सा यस्य हृदयं विशतीव वराङ्गना ।
तुल्यस्वभावा या हारिभिर्या रूपगुणान्विता ॥
पाशभूतैर्वहन्त्यङ्गैर्लावण्यमिव मूर्तिमत् ।
आनयन्त्यमृतेनेव या गात्राणि निषिञ्चति ॥
पिबन्तीव च पश्यन्ती स्पृशन्ती विशतीव या ।
नित्यमुत्सवभूता या या समानमनःशया ॥
नयत्युत्सुकतां चेतो नित्यं सन्निहितापि या ।
यया वियुक्तो निःस्त्रीकमरतिर्मन्यते जगत् ॥
भयद्वारातिसन्तापे यस्या लज्जामयी च या ।
बहुशोऽपि च योगरता तत्पूर्वमिव गच्छति ॥
चरितैर्निर्विकाराया विकारैरिव निर्मिता ।
कान्तानुवृत्तिपरमा सा स्त्री वृष्यतमा मता ॥

यत एवं तस्मात्सा वराङ्गना यस्य हृदयं स्वशरीरान्तर्नियततया विशतीव सा वृष्यतमा मोहितस्य च तुल्यस्वभावैर्यादेरेव एव मन्यन्ते । या तुल्यस्वभावा हारिभिर्गुणैरन्विता च हारिभिर्मनोहरा ज्ञानादिभिः । पाशभूतैस्समाकर्षणयोग्यैरङ्गैर्युक्ता मूर्तिमदिव लावण्यं वहन्ती । या च लपन्ती गात्राण्यमृतेन निषिञ्चतीव । या च पश्यन्ती पिबन्तीव स्पृशन्ती विशतीव । या च नित्यमुत्सवभूता सदा हृत्यानन्दकरी । या समानमनःशया तुल्यकालोद्भवसुरतावसाना [सदैवानुन्दकासा इति

नर्जेट । ] या नित्य सन्निहिता समीपास्थि तापि चत उत्सुकता नयति उत्सुकता मोत्क ण्ठत्वम् । यया विमुक्ता विप्रयुक्तोऽपि सन् सर्व जगन्निश्रीकमेव मन्यते । या रतिसमागमे प्रगल्भासमर्था । स्वस्था निवृत्तरतिसमागमा लज्जामयीव या च बहुशोऽपि गत्वा पुरुषोऽदृष्ट सन् प्रथममिव गच्छति । या च चरितैर्थे बहारचेष्टादिभिर्निर्विकारा । शृङ्गारचेष्टासु पुनर्विकारैरिव निर्मिता । कान्तस्य चित्तानुवृत्तिप्रधाना सैवभूता वृष्यतमा मताभिप्रेता । (या यस्य हृदयमित्यादि बहुनो याऽपति किम् । उच्यते । पृथगपि वृष्या द्वित्रादिभिर्वृष्यतरा म-नोवृष्यतमेऽस्याऽर्थस्य ज्ञापनार्थं यायेति बहुत्वम् । सौरूप्यमेकमेव पर्याप्तो गुण प्रथम यौवनमत्र द्वितीयश्च परिगृह्यते । लक्षणैर्बाह्यैरान्तरैर्नियमविनयादिभिश्च यान्विता सा मताभिप्रेता वृष्य-तमेति । इति जर्जट ॥ )

अपरे अमी भावा पर वृषत्व कुर्वन्तीत्याह ॥

अभ्यञ्जनोद्वर्तनसेकगन्ध
स्रग्चित्रवस्त्राभरणप्रकारा ।
सुगन्धिपुष्पोत्करपेरणुकीर्णा
मृदुर्मनोज्ञा विपुला च शय्या ॥

प्राज्ञा कलाज्ञावशगा विनीता
प्रियवदा प्रीतिकरा वयस्या ।
विस्रम्भसत्त्वप्रकृतिक्रियैक्या-
च्छरीरमात्रेण पृथक्त्वभूता ॥

कान्तावनान्ता परपुष्टघुष्टा
रम्या सवन्त्य सतत स्रवन्त्य ।
मद्यमदामोदकर विशेषा-
द्धृद्या प्रसन्ना सुरभि प्रसन्ना ॥

शशाङ्गनागण्डतलाभिपाण्डु
ताम्बूलपत्र परिवारशोभि ।
प्रसाधन स्त्रीमुखपङ्कजाना
यदायुध मूर्तिमिवात्मजन्य ॥

अभ्यञ्जनेत्यादि । अभ्यञ्जनादयो नानाविधा प्रकारा । तथा मृद्वादिगुणा शय्या किम्भूता शोभनस्य पुष्पकरस्य रेणुभि कीर्णा । तथा वयस्या प्राज्ञादिगुणा । कला भवु पष्टि कामतन्त्रप्रसिद्धा तज्ज्ञा विस्रम्भादीना मैक्याच्छरीरमात्रेण पृथग्भूता । तथा च नान्ता कान्ता मनोरमा । तथा स्रवन्त्यो नद्य सततमविच्छेदेन स्रवन्त्यो वहन्त्य । तथा तन्मद्य यन्मद करोत्यामोद च आमोद सौरभम् । मद्येभ्यश्च विशेषात् प्रसन्ना सुरा कि म्भूता हृद्या हृदयप्रीतिदायिनी सुरभि सौरभ्य-युक्ता प्रसन्ना स्वच्छा च । तथा ताम्बूलपत्रम् । किम्भूतम् । शशाङ्कनाना यत् गण्डतल गण्ड-प्रदेश तद्वदभिपाण्डु तथा यत्ताम्बूलपत्र परिवारेण पूगक्षारकर्पूरादिना शोभते । अन्यच्च किम्भूत स्त्रीणा यानि मुखपङ्कजानि तेषा प्रसाधन मण्डन यत् परिवारशोभितहास्यस्य कामस्य मूर्तिमदिवायुध विजयहेतुत्वात् ॥

हिमाचलोद्धूनितदुग्धसिन्धु-
समुद्भवत्फेनचयावदातम् ।
सौध सुधा शुभ्रतरा कराश्च
चन्द्रस्य कुर्वन्ति पर टपत्वम् ॥

तथा सौध हर्म्यपृष्ठमपि वृषत्वं करोति किम्भूतमाह । हिमाचले न तुषारगिरिणा उद्धूनित क्षोभितो यो दुग्धसिन्धुस्तत उद्भूतो य फेनानां च यो निचयस्तद्वदवदात शुक्लम् । तथा सुधातः सुभ्रतरा अत्यन्तशुक्ला ये चन्द्रस्य करास्ते च पर वृषत्व कुर्वन्ति ॥

बन्धेनपूर्वोपहितेन पुंस
खिन्नस्यवृत्ति करणान्तरेण ।
संवाहन स्पर्शसुखे करश्च
करोत्यपूर्वामिव मन्मथेच्छाम् ॥

तथा बन्धेन रतौ सवेशनप्रकारेणैकेन खिन्नस्य पुंसोऽन्येन करणेन वृत्तिर्या साऽपूर्वामिव मन्मथेच्छा करोति । तथैव बन्धखिन्नस्य स्पर्शसुखे कान्ताकरे संवाहनमपूर्वां मन्मथेच्छा करोति ॥

प्रायोगिकाधिकरणोदितचित्रचेष्टा
सशीलनोऽन्नवदनल्परसार्द्रचित्त ।
वृष्योपयोगपरिबृंहितदेहधातु-
र्नारीमनासि वशमानयति प्रसह्य ॥

तथा एवम्भूत पुरुषो नारीमनांसि प्रीचित्तानि प्रसह्यात्मन वशमानयति । किम्भूत आह । प्रायोगिकाधिकरणे कामशास्त्रे या विचित्रा चेष्टास्तासां शीलनात् अत एवानल्पो रस सुरताख्यस्तेनार्द्रं चित्त यस्य स तथोक्त । तथा वृष्याणामाहारादीनामुपयोगेन परिबृंहिता देहधातवो यस्येति ।

तस्मान्निरस्य स्त्रीषु वाञ्छन्नियन्त्र
वृष्यैर्योगैर्जातकामोपि कामी ।
सत्त्व सात्म्य देशकालौ च बुध्वा
चातुष्षष्ट्ये चेष्टिते व्याप्रियेत ॥

तस्मादत एव नत कामीवृष्यैर्योगैर्जातकामोपि स्त्रीषु नियन्त्र वाञ्छन् सत्त्वादिक बुद्ध्वा वात्स्यायनोक्तायां सांप्रयोगिकायां न खरदन्तादिभेदेन चातुष्षष्ट्ये चेष्टिते व्याप्रियेत ॥

वलयस्वनसंकुलमुष्टिरव-
द्विगुणीकृतमेखलिकानिनद ।
चलनूपुरशब्दयुतोपि मुहु
शममावहते न रतातिशय ॥

वलयस्वनादियुक्तो रतातिशयो मुहुरपि सेव्यमानो न शममावहते ॥

सर्वार्थसिद्धि प्रथमोनुराग
शृङ्गारगान्धर्वकथाविशेषा ।
सीत्कारगर्भं हसित सहाव
त्रिनाक्षर विभ्रमवच्च गीतम् ॥

सव्याजसन्दर्शितचारुगात्र
वृत्त प्रियाणामवलोकित च ।
चूताङ्कुर पुष्पफल यथर्तु
विद्युत्वदुद्योतितगर्जितानि ॥

विहङ्गभृङ्गस्वनितानुयात
स्त्रीकूजित नूपुरशिञ्जितानि ।
काल यथास्व वपुषश्च शुद्धि
सङ्कल्पयोनेर्धुरमुद्वहन्ति ॥

सर्वार्थसिद्धयादीनि सङ्कल्पयोनेः कामस्य धुरमुद्वहन्ति । सर्वेषामर्थानामिष्टाना सिद्धि । सीत्कारगर्भं हसितमित्यादि प्रियाणामिति म

इसवर्हिणदक्षाण्डा यन्त्यत्यर्थशुक्रलाः ।
मुनयः सदया न्यूयुस्तान्योगेष्वन्यथा कथम् ॥

अन्यथेति यद्यपि कश्चिन्न्यूनतादोषः परि-
हार्यो न स्यात्तत सदया मुदूरत्यक्त प्राणिहिंसा
कथमिव हनाग्रहान् प्रयोगेषु न्यूयु ॥

कथं वा सर्वएवैते योगा रागाभिदीपना ।
क्लिष्टसङ्कल्पजनना मोक्ता ससारवर्द्धना ॥

यदि च न्यूनतादोष परिहार्यो न स्या
त्तत कथ वैते योगा रागाभिदीपना उत्तेजना-
ननिवापणा सर्वं एव कामस्योद्दीपना प्रयोजि
ता क्लिष्टस्य च सङ्कल्पस्य जनना यत्नज यस्य
च ससारस्य वर्द्धना मोक्ता ॥

त्रिकालदर्शिभिर्दिव्यै सत्वदोषविवर्जितैः ।
पूर्वाचार्यैः कृत वर्त्म कोलङ्घयितुमर्हति ॥

एतच वर्त्म त्रिकालदर्शिभि पूर्वाचार्यैः
कृत कोऽस्मदादिर्लङ्घयितुमतिक्रमितुमर्हति ।
दर्शन दृष्टिः त्रिकाले भूतभविष्यद्वर्तमानाख्ये
काले दर्शी येषा ते । दिविभवादिव्याश्चे ।
तथा सत्वदोषा रागद्वेषाद्य तद्वर्जितैराचार्यैः ॥

प्रक्रान्ते सर्वथा सर्वमुक्त भवति सूदितम् ।
नहि लेशाभिधानेन लभ्यः सर्वार्थसङ्ग्रह ॥
तथा च गर्भक्षीर मासमश्व हस्तिनाम् ।
महासागरतोय च मोक्त निरुपयोग्यपि ॥

सर्वथा प्रक्रान्ते सर्वप्रकार वक्तुमारब्धे
सति सर्वमप्युक्त सूदित भवति । न तु लेशो-
क्तम् । एतदेवोच्यते नहीत्यादिना । लेशा-
भिधानेन स्तोकोक्त्या सर्वेषामर्थाना सङ्ग्रहो न
लभ्यो भवति । तथा च गर्दभीक्षीरादिक नि
रुपयोग्यपि प्रवक्तव्यमेव ॥

तस्मात् न्यूनतादोष परिहृत्यास्य तन्त्रस्य
व्यापित्वमुच्यते ॥

अग्रत्वेपि विशेषेण भूरितन्त्रार्थसङ्ग्रहात् ।
सङ्ग्रहान्नानुष्येत तज्ज्ञानमतिदुर्लभम् ॥

अग्रत्वे साम्प्रतिकत्वेपि सङ्ग्रहात्तस्मात्
तन्त्रान्नानुष्येत तज्ज्ञानमतिदुर्लभम् । एतद्वि-
धस्यान्यस्योपायस्याभावात् । किम्भूतात् स
ङ्ग्रहादित्याह । भूरितन्त्रार्थसङ्ग्रहात् प्रभूताना
तन्त्राणा सम्बन्धिनोर्थस्य सङ्ग्रहोऽस्मात्वव्या-
पनात् ॥

यथा प्रतिज्ञातमितिक्रमेण
वेदोयमष्टाङ्गनिधेर्निबद्ध ।
अभ्यस्यतोमार्गमिमार्य सत्य
सञ्जायते स्वार्थपरार्थसिद्धिः ॥

यथेति । पूर्वं यथा प्रतिज्ञात तथा क्र-
मेणाष्टाङ्गनिधेर्वेदोयमिति निबद्ध । य निब-
न्धमभ्यस्यत पुसस्तथा स्वार्थपरार्थयो सिद्धि
सञ्जायते यथामार्गोव्यमार्थमन्यमभ्यस्यत तत्रा-
र्थपदानि दु रा समुदायो निरोधामार्गश्चवि सा-
गवप्रसिद्धलक्षणानि । एव च पूर्वं प्रतिज्ञातम् ।
सर्वतन्त्राण्यत प्राय सहयाष्टाङ्गसमद । अ
स्थानविस्ताराक्षेप पुनरुक्तादिवर्जित । हेतुलि
ङ्गौषधस्कन्ध त्रयमात्रनिबन्धनः । विनिगूढार्थ
तत्त्वाना प्रदेशाना प्रकाशक । स्वान्यतन्त्र-

पतति स वाक्यशेषः । यथा रोगास्तु दोषजे यस्य दोषसाम्यमरोगता इत्यत्र उच्यत इति वाक्यशेषः ॥ ८ ॥ प्रयोजनं नाम यत् सम्पादयितुं क्रियाहार आरभ्यते तत्प्रयोजनम् । यथा सन्तापेषु दोषशेषपाचनमग्निसन्धुक्षणं च सम्पादयितुमौषधपानमारभ्यते ॥ ९ ॥ उपदेशो नाम शुद्धस्याप्तवचनस्य कीर्तनमुपदेशः । यथा गर्भस्तु मातुः पृष्ठाभिमुखो ललाटे कृताञ्जलिः सङ्कुचिताङ्ग इत्येवमादि ॥ १० ॥ अपदेशो नाम प्रतिज्ञातस्य साधनहेतुरपदेशः । यथा अहिताशोत्तरोत्तरं दुष्टा वातादय इत्यस्याः प्रतिज्ञाया दुष्परिहरत्वादिति हेतुः ॥ ११ ॥ अतिदेशो नाम अन्यसम्बन्धिना धर्मेणान्यत्रावस्थापनमतिदेशः । यथा पालक्यासम्बन्धिना धर्मेण चुक्रावस्थापनम् ॥ १२ ॥ अर्थापत्तिर्नामयदेकस्मिन्नर्थे उच्यमाने अनुक्तस्याप्यर्थस्य बलादागमनं सार्थापत्तिः । यथा पक्वे जठरे जीर्णेऽप्यामे न पेयमित्युच्यमाने आभोजनादि त्वनुच्यमानस्यापि सामर्थ्यादागमनम् ॥ १३ ॥ निर्णयो नाम उद्दिष्टानामर्थानामनुद्दिष्टेन निराकाङ्क्षत्वापादनं निर्णयः । यथा सर्वरोगनिदानीयोक्तानां रोगाणां सर्वरोगप्रतिषेधनिराकाङ्क्षत्वापादनम् ॥ १४ ॥ प्रसङ्गो नाम यदप्राकरणिकस्यापि वस्तुनः किञ्चित् सम्बन्धेन यत् कीर्तनं स हि प्रसङ्गः । यथा वमनप्रस्तावे धूमास्ते प्राय सर्वैरित्यप्राकरणिकस्य कीर्तनम् ॥ १५ ॥ एकान्तो नाम यत् प्रमाणान्तरव्यावर्तकं तदेकान्तः । यथा दोषहेतुजत्वेन निजत्वं न कदाचिदपि बाह्यहेतुजं व्याप्नोति ॥ १६ ॥ नैकान्तो नाम यदुच्यमानमव्यवश्यम्भावित्वेनानियतं स नैकान्तः । यथा ज्वरस्तु जातः षडहात्सप्ताहिनीषु निवर्तत इत्येतद् क्रमव्यवश्यम्भावित्वेनानियतम् ॥ १७ ॥ अपवर्गो नाम सामान्योक्तस्यानुप्रविष्टस्य विशेषेणाकर्षणं सोपवर्गः । यथा मधुरः श्लेष्मलेत्युक्ता अनुप्रविष्टेषु जीर्णशाल्यादिषु शब्देनाकर्षणम् । ॥ १८ ॥ विपर्ययो नाम उक्तस्यान्यथाभावो विपर्ययः । यथा निशायां कानामनुपशयो भवति तद्विपरीतानां चोपशयः ॥ १९ ॥ पूर्वपक्षो नाम परप्रतिज्ञातानुपपत्तिप्रदर्शनपरो वाक्यसमुदायः पूर्वपक्षः यथा षड्रसनादिन प्रत्यनकरसप्रतिपादकानि वाक्यानि ॥ २० ॥ विधानं नाम तन्त्रस्य कर्त्रा विशिष्टाया पदादिरचना कृता तद्विधानम् । यथा सर्वविरोधपरिहाराय व्यवहारोच्छित्तिर्मा भूदित्यभिप्रायेणोक्तं न च तद्विधानमैकान्तिकमिति ॥ २१ ॥ अनुमतं नाम परपक्षस्य प्रतिषिद्धस्याप्यङ्गीकरणमनुमतम् । यथा वस्तिविधाने कल्पनाया मृतपुदोषौपशमादिनत्व सर्वमेतत् प्रमाणयेदित्यङ्गीकरणम् ॥ २२ ॥ व्याख्यानं नाम सङ्क्षेपेणोक्तस्यार्थस्य विस्तरेणाख्यानं व्याख्यानम् । यथा सर्वरोगनिदाने तस्योपलब्धिर्निदानादिभिरिति सङ्क्षेपेणोक्तस्य तत्त्यादिना विस्तरेणाख्यानम् । अथवा स्फुटैः शब्दैरनभिहितं गुरुपारम्पर्यक्रमागतम् ॥ २३ ॥ संशयो नाम विरुद्धानां पक्षाणामनिश्चयः संशयः । यथा विषवेगसमानपक्षेषु ॥ २४ ॥ अतीतापेक्षा नाम यत्रातीतं पदमपेक्ष्य सम्बन्धार्थता भवति सातीतापेक्षा । यथा स्नेहादयः स्नेह्या इत्युक्ते नात्यतिमन्दाग्निरित्यादेः स्नेह्या इत्यपेक्षते । यथा

च ज्वरे लङ्घनं कुर्वीतेति सूत्रोक्तं लङ्घनमपेक्षते ॥ २५ ॥ अनागतापेक्षा नाम यत्रानागतेनार्थेन सम्बन्धिता भवति सानागतापेक्षा । यथा ततो नावनगण्डूषेत्यादिना दिनचर्यायां नस्यादिविषयोपेक्ष्यन्ते ॥ २६ ॥ स्वसंज्ञा नाम या स्वतन्त्रे एवमन्यस्मिञ्छास्त्रे न श्रूयते सा स्वसंज्ञा । यथा आपानोजेन्ताक इत्येवमादि । ॥ २७ ॥ ऊह्यं नाम यत् भिषजा स्वप्रज्ञया शब्देनानुक्तमपि व्यवस्थाप्यते तदूह्यम् । यथा द्रव्यं जङ्गमादयौगिकमिति यन्न यौगिकं तच्छब्देन नोक्तमपि प्रज्ञया व्यवस्थाप्यते ॥ २८ ॥ समुच्चयो नाम एकस्मिन् विहिते तदविरोधेन तत्रैव द्वितीयस्य विधानं समुच्चयः । यथा वातस्योपक्रमः स्नेहः स्वेद इत्यादि ॥ २९ ॥ निदर्शनं नाम साध्यस्यैकदेशो दृष्टान्तो निदर्शनम् । यथा आमदोषेषु त्रिविधेषु लङ्घनपाचनशोधनानि दृष्टान्तः । (एवमन्यानपि व्याधीन् स्वनिदानविपर्ययात् चिकित्सेदित्यादि) ॥ ३० ॥ निर्वचनं नाम सहयोक्तस्य तदर्थेन योजनं निर्वचनम् । यथा सूचीभिरिव गात्राणि भिद्यन्तीति विषूचिका ॥ ३१ ॥ नियोगो नाम क्रियाणां व्यापाराणां नियोगः । यथा भवता दमूर्च्छापरीतेनापि नैषा पिण्डिका विमोक्तव्येति ॥ ३२ ॥ विकल्पो नाम क्रमेण यौगपद्येन वा सम्भविनां पक्षाणां कीर्तनम् । यथा कुर्वीत लङ्घनं प्रागूपेषु ज्वरादौ वा ॥ ३३ ॥ प्रत्युत्सारो नाम यत्रोपपादि दर्शयन्त परस्परमतानि निरस्यन्ति । यथा गर्भिणी अष्टमे मासि क्षीरयवागू स नेति खण्ड काप्य गर्भस्य । अस्तु पैङ्गल्या बाधस्तथाप्येव कुर्वती नीरुजं बलवर्णोपेतमपत्यं जनयतीति भगवानात्रेयः ॥ ३४ ॥ उद्धारो नाम यच्छास्त्रे चोद्यस्य समाधानम् । यथा चित्रकर्मगुणकृत् गुरुणा को नस्तिरित्यादि यावत् सर्वत कथमपोहति दोषानिति चोद्यस्य स्तिमितमारुतवश्यमेतादित्यादि समाधानम् । ॥ ३५ ॥ सम्भवो नाम किमप्यन्यत्रादर्शनानेन नियमेन साध्यते स सम्भवः । यथा सर्वरोगेषु हेतुलिङ्गौषधादीनां सामान्येनोक्तौ वातादिविशेषेणावस्थापनं सम्भवप्रसादाल्लभ्यम् । ॥ ३६ ॥ एवं तन्त्रयुक्तयः । यद्यपि भट्टारकप्रस्थानेन च परिप्रश्नव्याकरणव्युत्क्रान्ताभिधानहेत्वाख्यास्तत्रोवशिष्यन्ते तथापि ता आचार्येण तन्त्रेणानिबद्धा इत्यत्र नोच्यन्ते । अथवा उक्तास्वेवान्तर्भाव्याः । अथवा तन्त्रयुक्तित्वमेव तासां नाङ्गीक्रियते । तत्र चान्यत्रियोगोक्तौ वातादिविशेषेणावस्थापनं सम्भवप्रसादाल्लभ्यमेवमाद्युक्तम् ॥

सरसः सुप्तपद्मस्य रविदीधितयो यथा ।
यथा गृहस्य दीपाभास्तथा तन्त्रस्ययुक्तयः ॥
अधीयानोपि तन्त्राणि तन्त्रयुक्त्यविचक्षणः ।
नाधिगच्छतितन्त्रार्थमर्थं भाग्यक्षये यथा ॥

सरस इत्यादि सुबोधम् । तन्त्रयुक्त्यविचक्षणः एतासु षट्त्रिंशत्तन्त्रयुक्तिष्वसमर्थः तन्त्रार्थं नाधिगच्छति न प्राप्नोति यथा भाग्यक्षये धनम् ॥

वाक्यार्थयोजनादेता युक्तयस्त्विह प्रसिद्धिदाः ।
असद्वादिप्रयुक्तानां ... पेयसाः ॥

पतति स वाक्यशेषः । यथा रोगस्तु दोषवैषम्यं दोषसाम्यमरोगता इत्यत्र उच्यत इति वाक्यशेषः ॥ ८ ॥ प्रयोजननाम यत् सम्पादयितुं क्रियाऽऽरभ्यते तत्प्रयोजनम् । यथा सदोषेषु दोषशेषपाचनमग्निसन्धुक्षणं च सम्पादयितुमौषधपानमारभ्यते ॥ ९ ॥ उद्देशोनाम सूक्ष्मस्यासंवचनस्य कीर्तनमुद्देशः । यथा न मेरुमातु प्राङ्मुखाभिमुखो ललाटे कृताञ्जलिः सङ्कुचिताङ्ग इत्येवमादि ॥ १० ॥ अपदेशो नाम प्रतिज्ञातस्य साधनहेतुरपदेशः । यथा अहितायोत्तरोत्तरं दुष्टा वातादय इत्यस्याः प्रतिज्ञाया दुष्परिहरत्वादिति हेतुः ॥ ११ ॥ अतिदेशो नाम अन्यसम्बन्धिना धर्माणामन्यत्रावस्थापनमतिदेशः । यथा बालकयासम्बन्धिना धर्माणा कुमारस्थापनम् ॥ १२ ॥ अर्थापत्तिर्नामयदेकस्मिन्नर्थे उच्यमाने अनुक्तस्याप्यर्थस्य बलादागमनं सार्थापत्तिः । यथा पक्व जले जीर्णेऽपाम न पेयमित्युच्यमाने आभोजनादित्यनुच्यमानस्यापि सामर्थ्यादागमनम् ॥ १३ ॥ निर्णयो नाम उद्दिष्टानामर्थानामनुद्दिष्टेन निराकाङ्क्षत्वापादनं निर्णयः । यथा वर्त्मरोगविज्ञानीयोक्तानां रोगाणां वर्त्मरोगप्रतिषेधनिराकाङ्क्षत्वापादनम् ॥ १४ ॥ प्रसङ्गो नाम यदप्राकरणिकस्यापि वस्तुनः किञ्चित् सम्बन्धेन यत् कीर्तनं स हि प्रसङ्गः । यथा वमनप्रस्तावे धूमान्ते प्रायः सर्वैरित्यादेरप्राकरणिकस्य कीर्तनम् ॥ १५ ॥ एकान्तो नाम यत् पक्षान्तरव्यावर्तकं तदेकान्तः । यथा दोषहेतुजत्वाद्रोगेर्निजस्य न कदाचिदपि बाह्यहेतुजं व्याप्नोति ॥ १६ ॥ नैकान्तो नाम यदुच्यमानमप्यवश्यम्भावित्वेन नियतं स नैकान्तः । यथा ज्वरस्तु जातः पक्वावस्थाग्निकीपु निवर्तत इत्येतदुक्तमप्यवश्यम्भावित्वेन नियतम् ॥ १७ ॥ अपवर्गो नाम सामान्योक्तस्यानुप्रविष्टस्य विशेषेणाकर्षणं सोऽपवर्गः । यथा मधुरं श्लेष्मलमित्युक्त्वा अनुप्रविष्टेषु जीर्णशाल्यादिषु शालेनाकर्षणम् ॥ १८ ॥ विपर्ययो नाम उक्तस्यान्यथाभावो विपर्ययः । यथा निदाने कारणमनुपशयो भवति तद्विपरीतानामुपशयः ॥ १९ ॥ पूर्वपक्षो नाम परप्रतिज्ञातानुपपत्तिसन्दर्शनपरो वाक्यसमुदायः पूर्वपक्षः यथा पद्ममरादिना प्रत्येकरसप्रतिपादकानि वाक्यानि ॥ २० ॥ विधानं नाम तन्त्रस्य कर्त्रा विशिष्टाया पदादिरचनायाः कृता तद्विधानम् । यथा सर्वविरोधपरिज्ञाना व्यवहारोऽनिज्जतिर्मा भूदित्यभिप्रायेणोक्तं न च तद्विज्ञानमेकान्तमद्रकामिति ॥ २१ ॥ अनुमतं नाम परपक्षस्य भिन्नत्वाद्यङ्गीकरणमनुमतम् । यथा वमिविधाने कल्पनायां मतेषु दोषौपशमादिनोक्तं सर्वमेतत् प्रमाणयेदित्यङ्गीकरणम् ॥ २२ ॥ व्याख्यानं नाम सङ्क्षेपेणोक्तस्यार्थस्य विस्तरेणाख्यानं व्याख्यानम् । यथा सर्वरोगनिदाने सङ्क्षेपतः प्रविभक्तनिदानादिभिरिति सङ्क्षेपेणोक्तस्य तत्त्वादिना विस्तरेणाख्यानम् । अथवा स्फुटं शब्दैरनभिहितं गुरूपारम्पर्यक्रमागतम् ॥ २३ ॥ संशयो नाम विरुद्धानां पक्षाणामनिश्चयः संशयः । यथा त्रिमर्मसम्मतपक्षेषु ॥ २४ ॥ अतीतापेक्षा नाम यदतीतपदमपदस्य सम्बन्धार्थता भवति साऽतीतापेक्षा । यथा स्नेहादय स्नेह्या इत्युक्ते नत्वतिमन्दाग्निरित्यादे स्नेह्या इत्यपेक्षते । यथा

च ज्वरे लङ्घनं कुर्वीतेति सूत्रोक्तं लङ्घनमपेक्षते ॥ २५ ॥ अनागतापेक्षा नाम यत्रानागतेनार्थेन सम्बन्धिता भवति सानागतापेक्षा । यथा ततो नावनगण्डूषेत्यादिना दिनचर्यायां नस्यादिविधयोपेक्ष्यन्ते ॥ २६ ॥ स्वसंज्ञा-नाम या स्वतन्त्रे एवमन्यस्मिञ्छास्त्रे न श्रूयते सा स्वसंज्ञा । यथा आपानोऽजन्ताक इत्येवमादि । ॥ २७ ॥ ऊह्य नाम यत् भिषजा स्वप्रज्ञया शब्देनानुक्तमपि व्यवस्थाप्यते तदूह्यम् । यथा द्रव्य जङ्गमादयौगिकमिति यत्र यौगिक तच्छब्देन नोक्तमपि प्रज्ञया व्यवस्थाप्यते ॥ २८ ॥ समुच्चयो नाम एककालिनं विहिते तदविरोधेन तत्रैव द्वितीयस्य विधानं समुच्चय । यथा वातस्योपक्रम स्नेह. स्वेद इत्यादि ॥ २९ ॥ निदर्शन नाम साध्यस्यैकदेशो दृष्टान्तो निदर्शनम् । यथा आमदोषेषु त्रिविधेषु लङ्घनपाचनशोधनानि दृष्टान्त. । (एवमन्यानपि व्याधीन् स्वनिदानविपर्ययात् चिकित्सेदित्यादे ) ॥ ३० ॥ निर्वचनं नाम सहयोक्तस्य तदर्थेन योजन निर्वचनम् । यथा सूचीभिरिव गात्राणि निस्तीति विषूचिका ॥ ३१ ॥ नियोगो नाम क्रियाणा व्यापाराणा नियोग. । यथा भवता दमूर्च्छापरीतेनापि नैषा पिण्डिका विमोक्तव्येति ॥ ३२ ॥ विकल्पो नाम क्रमेण यौगपद्येन वा सम्भविना पक्षाणा कीर्तनम् । यथा कुर्वीत लङ्घनं प्राग्रूपेषु ज्वरादौ वा ॥ ३३ ॥ प्रत्युत्सारो नाम यत्रोपपत्तिं दर्शयन्त परस्परमतानि निराकरयन्ति । यथा गर्भिणी अष्टमे मासि क्षीरयवागू सर्पिष्मतीं पिबेत् नेति खण्डकाप्य गर्भस्य पैङ्गल्या बाधभवात् । अस्तु पैङ्गल्या बाधस्तथाप्येव कुर्वती नीरुज बलवर्णोपेतमपत्य जनयतीति भगवानात्रेय ॥ ३४ ॥ उद्धारो नाम यच्छास्त्रे चोद्यस्य समाधानम् । यथा चित्रकर्मगुणकृत् गुरुणो को वह्निरित्यादि यावत् सर्वत कथमपोहति दोषानिति चोद्यस्य स्तिमितमारुतनश्यमेतदित्यादि समाधानम् । ॥ ३५ ॥ सम्भवो नाम किमप्यन्यन्नादर्शनादेन नियमेन स्थाप्यते स सम्भव. । यथा सर्वरोगेषु हेतुलिङ्गौषधादीनां सामान्येनोक्तौ वातादिविशेषेणावस्थापन सम्भवप्रसादाल्लभ्यम् । ॥ ३६ ॥ एव तन्त्रयुक्तय । यद्यपि भट्टारकप्रस्थानेन च परिप्रश्नव्याकरणव्युत्क्रान्ताभिधानहेत्वाख्याश्चतस्रोवशिष्यन्ते तथापि ता आचार्येण तन्त्रेणानिरुद्धा इत्यत्र नोच्यन्ते । अथवा उक्तास्वेवान्तर्भाव्या. । अथवा तन्त्रयुक्तित्वमेव तासां नाङ्गीक्रियते । तत्र चान्यथियोगोक्तौ वातादिविशेषेणावस्थापनं सम्भवप्रसादाल्लभ्यमेवमायुक्तम् ॥

सरस. सुप्तपद्मस्य रविदीधितयो यथा ।
यथा गृहस्य दीपाभास्तथा तन्त्रस्ययुक्तय ॥
अधीयानोपि तन्त्राणि तन्त्रयुक्त्याविचक्षण. ।
नाधिगच्छतितन्त्रार्थमर्थं भाग्यक्षये यथा ॥

सरस इत्यादि सुबोधम् । तन्त्रयुक्त्यविचक्षण एतासु षट्त्रिंशत्तन्त्रयुक्तिष्वसमर्थ स्तन्त्रार्थं नाधिगच्छति न प्राप्नोति यथा भाग्यक्षये धनम् ॥

वाक्यार्थयोजनादेता युक्तयस्त्विष्टसिद्धिदा. ।
असद्वादिप्रयुक्तानां वाक्यानां प्रतिषेधका ॥

चिद्व्यक्तिः । यथा पुल्लिङ्गो धर्मशब्द आत्मगुण वक्ति नपुंसकस्तु यज्ञम् । कचित् स्वरादश्च । यथा अस्थण्डिलेष्वित्यत्र पूर्वपदप्रकृतिसाधारणतत्पुरुषावगतिरस्थण्डिलेष्वित्यत्र चान्तोदात्तेन बहुव्रीहिः । आदिग्रहणात् कचिद्विभक्तिः । यथा अर्द्धमर्द्धं अर्द्धमिति द्वितीयया कर्मप्रतीयते अर्द्ध इति प्रातिपदिकार्थमात्रम् । कचित्तद्धितः । यथा दात्त' कू-पइत्यत्र तद्धिते न विपाशात उत्तरकूलभवत्वम् । दक्षिणकूलभवत्व न कूपस्येति स्पष्टम् । कचिञ्चलनम् । यथा सुसिक्तमित्यत्र प वस्य भावाभावाभ्या सुशब्दस्योपसर्गत्व कर्मप्रवचनीयत्व च गम्यते । एवमनेकमप्यूह्यमिति श्लोकार्थः ॥

एतदागमसिद्धत्वात् प्रत्यक्षफलदर्शनात् ।
प्रयोज्य मन्त्रवत्तन्त्र तन्त्रज्ञानविशारदैः ॥

एतदिति । एतच्च तन्त्र तन्त्रज्ञानविशारदैर्मन्त्रवत् सम्प्रयोक्तव्य नात्र फलाभावशङ्का कार्येत्यर्थः । कुत इत्याह । आगमसिद्धत्वात् आगम एवास्मिन् प्रमाणम् । प्रत्यक्षफलदर्शनमधिक प्रमाणम् ॥

पितामहेन लोकस्य स्मृत्वा तदिदमव्ययम् ।
अकालमृत्युरक्षार्थमलौह वर्म निर्मितम् ॥

पितामहेनेत्यादि । व्याख्यासमम् । पितामहेन ब्रह्मणा अलौह वर्म निर्मित शस्त्रेण विना कारितम् ॥

सुज्ञातमेतदमृतं स्वस्थास्वस्थसुखास्पदम् ।
[illegible] ॥

सुज्ञात साकल्येन ज्ञातमेतत्तन्त्रममृत स्वस्थानामस्वस्थाना च सुखस्यास्पद स्थानम् । ईप्सितफलावाप्तिक्रमेणाशेषस्य पुरुषार्थस्य प्रसाधनम् ॥

इद शास्त्रमदृष्टीनामेवमालोककार्यपि ।
मण्डल भास्करस्येव न प्रकाशाय जायते ॥

इद च शास्त्रमेवमालोककार्यपि अदृष्टीनामबुद्धिमता प्रकाशाय न जायते । यथा अदृष्टीनामचक्षुषाभास्करस्यादित्यस्यमण्डलम् ॥

ध्रुव वैद्येषु कल्याणमायुर्वेदानुसारिषु ।
इतरेष्वितरच्छस्त्रविपज्वलनकर्मसु ॥

आयुर्वेदानुसारिषु वैद्येषु ध्रुवमवश्य कल्याणमुभयलोकश्रेय' । इतरेष्वित्यायुर्वेदानुसारिषु इतरदित्यवश्यमकल्याणम् । किम्भूतेष्वित्याह । शस्त्रविपज्वलनकर्मसु शस्त्रविषाग्निरूप मारणात्मकत्वात् कर्म येषामिति ॥

अक्षक्रमेण शस्त्रादिसाम्य दर्शयित्वा शस्त्रादित आधिक्यमपि प्रदर्शयितुमाह ॥

कुर्यात् प्रयुक्त शस्त्रादि सशेषमपि रोगिणम् ।
न त्वेव भेषज मोहादनालोचितयोजितम् ॥

कुर्यान्नित्यादि । शस्त्रादि शत्रुणा प्रयुक्त सशेषमपि रोगिण कुर्यात् । यत् पुनर्भेषजमनालोचितयोजितमनालोचितमेव मोहाद्योजित तत्र त्वेव सशेष कुर्यात् ॥

सदा दोषौषधादीनि वीक्ष्य द्वादशतत्त्वतः ।
[illegible] प्राज्ञो न योगैरेव केवलैः ॥

अराजका यथादेशा भर्तृहीना यथा गृहा. ।
आतुराद्यास्तथापादा. शोच्या वैद्यानधिष्ठिता' ॥
प्राणाचार्यं बुधस्तस्माद्दयालु विजितेन्द्रियम् ।
अश्विनाविव देवेन्द्रः पूजयेदादृत सदा ॥

पथ्यान्यन्नपानादीनि साधु वैद्यसश्रयात प्राप्यन्ते । अराजका इत्यादि व्याख्यासमम । यत एव तस्मात् बुध प्राज्ञो दयालुत्वादियुक्त प्राणाचार्यमादृत सन सदा पूजयेद्यथा देवेन्द्र अश्विनौ पूजयतीति ॥

यज्ञस्य हि शिरश्छिन्नमश्विभ्यां सन्धित पुन ।
पातितादशना पूष्णो भगस्य च विलोचने ॥
राजयक्ष्मार्दितश्चन्द्रस्ताभ्यामेव चिकित्सित ।
सोमाभिपतितो वज्री भुजस्तम्भे च दारुणे ॥
भार्गवश्च्यवन कामी वृद्ध.सन् विकृतिं गत ।
वीर्यवर्णबलोपेत' कृतस्ताभ्या पुनर्युवा ॥
एभिश्चान्यैश्च बहुभि' कर्मभिर्भिषगुत्तमौ ।
बभूवतुर्भृश पूज्याविन्द्रादीना महात्मनाम् ॥
अश्विभ्यासहित'सोम प्रात' पिबति वासव ।
सौत्रामण्यां च भगवानश्विभ्यांसह मोदते ॥
अश्विनो' कल्प्यते भागो यज्ञेषु ब्राह्मणैरपि ।
अश्विनावग्निरिन्द्रश्च वेदेषु सुतरा स्तुता ॥
वैद्यावित्यश्विनौ तस्मात् पूज्येते विबुधैरपि ।
अजरैरमरैर्नित्य सुखितैरेवमादृतै. ॥
व्याधिमृत्युजराग्रस्तैर्दु खप्रायै ।
किं पुनर्भिषजोमर्त्य' ॥

यज्ञस्येत्यादिनेतिहासेनाश्विनो प्रभावकीर्तनम् । व्याख्यासमम । भिषगुत्तमावश्विनौ महात्मनामिन्द्रादीना भृश पूज्यौ बभूवतु । तस्माद्विबुधैर्देवैरप्यश्विनौ वैद्याविति पुज्येत । किम्भूतैर्विबुधैरित्याह अजरैरित्यादि एवगुणै रपि । किं पुनर्मर्त्यमानुषैस्तत्रापि व्याध्यादिग्रस्तैर्भिषजो यथाशक्तितो न पूज्या स्यु । [यज्ञस्येत्यादि । यज्ञो ब्रह्मा । इन्द्र सोमाभिपतित सोममतीव पीत्वातिविरेचित इत्यर्थ । एतैरन्यैश्च कर्मभिर्भिषगुत्तमावश्विनौ महात्मनामिन्द्रादीना भृश पूज्यौ बभूवतु । प्रात प्रातस्सवने शक्र अश्विभ्या सहित सोम पिबति । सौत्रामण्या च सहाश्विभ्या शक्रो मोदते । देवैरप्यश्विनौ पूज्येते भिषगुत्तमाविति । किं पुनर्मर्त्यैर्व्याध्यादिग्रस्तैर्भिषजो नातिशक्तित पूज्याः स्युर्यथाशक्ति पूज्या । इति जर्जट ॥ ]

शीलवान् मतिमान् युक्तो द्विजातिर्वेदपारग' ।
प्राणिभि.पितृवत्पूज्य प्राणाचार्य.सहिस्मृत ॥

शीलवत्वादिमान् वैद्य प्राणिभि पितृवत् पूज्य स हि प्राणाचार्य स्मृतो नान्य । [स च भिषक् शीलवत्वादियुक्तो वेदपारगतो गुरुवत् प्राणिभि पूज्य प्राणाचार्यो यतोऽभिहिति । इति जर्जट ॥ ]

विद्यासमाप्तौ भिषजा द्वितीया जातिरुच्यते ।
न वैद्यो वैद्यशब्द हि लभते पूर्वजन्मना ॥

विद्यासमाप्तौ चार्षं वा ब्राह्मं वा भिषजं ध्रुवम् ।
सत्त्वमाविशति ज्ञानात्तेन वैद्यो द्विजः स्मृतः ॥

विद्यासमाप्ताविन्यादि । व्याख्यानम् । आर्षं वा ब्राह्मं वा सत्त्वं कर्तृ विद्यासमाप्तौ भिषजं कर्मभूतमाविशति । [इह पाठान्तरव्याख्यानम् । विद्यासमाप्ताविन्यादि । एतदुक्तं भवति । वैद्यो न द्विजः अपि तु विद्यासमाप्तौ वैद्यशब्दाभिधेयो भवति । तस्याः च सत्त्वमाविश्य । ततो ब्राह्मं सत्त्वमार्षं वा ध्रुवमवश्यं ज्ञानादाविशति । तस्माद्वैद्यो द्वितीय इव जातो भवति वैद्यशब्दलाभात् । उक्तं च । यस्यां यस्यामवस्थायां वर्तते तस्यां तस्यां जात इत्युच्यते तेन द्विजातीया वैद्यजातिर्भवतीति । ननु च विद्यासमाप्ताविन्यनेनैव च पर्याप्तत्वात् ज्ञानग्रहणं किम् । उच्यते । य एव विद्यासमाप्तौ ज्ञानवान् न पुस्तकस्थानीयः, स ब्राह्मं सत्त्वमार्षं वा विशति । ननु च ब्राह्मं चार्षं चेति कस्माद्विकल्पः, एकस्यैवैकस्मान्नियमः कृतः । उच्यते । ब्राह्मणस्य वेदार्थपरिज्ञानादायुर्वेदार्थपरिज्ञानात् ब्रह्मसत्त्वानुप्रवेशप्रसिद्धिरस्त्यात्र ब्रह्मसत्त्वमाविशति वैश्यमार्षमिति यथासङ्ख्येन प्रत्येतव्यमिति । मनुनाप्युक्तम् । वैद्यस्तु वैश्यो वा ब्राह्मणोऽपि वा उच्यतेऽस्याप्यन्यसत्त्वप्रापणार्थमथापि वा इति । इति जज्जटः ॥]

नाध्यायेन्नचाक्रोशेदहितं न समाचरेत् ।
प्राणाचार्यं बुधः कश्चिदिच्छन्नायुरनश्वरम् ॥

न च बुधः आयुरनश्वरमिच्छन् नाध्यायेत् अनर्थमहितचिन्तनम् । न चाक्रोशेत् प्राणाचार्यम् । [अभिध्यानमहितचिन्तनमिति जज्जटः ॥]

भिषगप्यातुरान् सर्वान् स्वसुतानिव यत्नवान् ।
आबाधेभ्यो हि संरक्षेदिच्छन् धर्ममनुत्तमम् ॥

भिषजापि सर्व आतुराः स्वसुता इव पाल्याः ॥

कुर्वते ये तु वृत्त्यर्थं चिकित्सापण्यविक्रयम् ।
ते हित्वा काञ्चनं राशिं पांसुराशिमुपासते ॥

ये मनुष्याः वृत्त्यर्थं चिकित्सापण्यस्य विक्रयं कुर्वते ते काञ्चनराशिं त्यक्त्वा पांसुराशिमुपासते सेवन्ते ॥

रोगाग्निमन्दारुणान्पाशानन्तकाहितकर्षिणः ।
यश्छित्त्वा परित्राति प्राणान्दाता नान्यस्तत्समः ॥

छित्त्वा । वैद्येन समो दाता नास्ति । यः रागाग्निवान् रुजाकान् पाशान् छित्त्वा प्राणान् रक्षति ददाति । किम्भूतान् पाशान् अन्तकस्य मृत्योर्हस्तान्निकटे ये कर्षन्ति तान् ॥

न जीवितप्रदानाद्धि दानमन्यद्विशिष्यते ।
तस्मादुपाचरेत् स्वेन स्वेननित्यतपस्विनः ॥

न जीवितप्रदानादित्यादि व्याख्यास्यते । जीवितप्रदानादन्यद्दानं न विशिष्टम् । तस्मा-

देव तस्मान्नित्यान् तपस्विनश्च स्वेन स्वकीयेन स्वेन धनेन वैद्य उपाचरेत । [परो भूतदया धर्म इति मत्वा चिकित्सिते । वर्तते यः स सिद्धार्थ सुखमत्यन्तमश्नुते । इति चरक । भूतदया च परो धर्म एव ज्ञात्वा चिकित्सिते यो वर्तते सिद्धार्थ सोऽत्यन्त सुखमश्नुते । इति जज्जट ॥]

सत्वार्थमीहमान च वैद्य येन महामने ।
वर्तन्ते सन्निधानेन नियत सिद्धिदेवता ॥

एव सत्वार्थ सत्वार्थमीहमानस्य चेष्टमानस्य महामतेर्वैद्यस्य सिद्ध्याख्या देवता नियत सन्निधानेन वर्तन्ते ॥

क्वचिद्धर्म क्वचिन्मित्र क्वचिदर्थ क्वचिद्यश ।
कर्माभ्यास क्वचिच्चेति चिकित्सा नास्ति निष्फला ॥
नित्यमादरवान् वैद्यस्तस्मादार्तानुपाचरेत् ।
प्राणानुसहात्मनःकीर्त्या निहन्त्येषामनादरात् ।

कचिद्धर्म इत्यादि व्याख्यासमम् । एषामार्तान् प्राणान् निहन्तीति सम्बन्ध ॥

सर्वत्र मैत्री करुणातुरेषु
निरामदेहेषु नृपु प्रमोद ।
मनस्युपेक्षाप्रकृतिं व्रजत्सु
वैद्यस्य सद्वृत्तमल तनोति ॥

सर्वत्र मैत्र्यात्रिक वैद्यस्य साधुवृत्त पर्यात विस्तारयति । आतुरविषये करुणा । निरामदेहेषु स्वस्थेषु प्रमोद

सामिषेणापि चित्तेन जीवितोच्छेदकारिणः ।
योनिहन्त्यामयान् वैद्य सोपि केनोपमीयताम् ॥

यो वैद्य सामिषेण सलोभेनापि चित्तेन जीवितस्योच्छेदकारिण आमयान् निहन्ति सोपि केनोपमीयताम् ।

किमुत निरामिषेण मनसा करुणा मृदुना
कृपणविशिष्टयो सदृशमादरमुद्वहता ।
अतिगुरुबोधिसत्वचरितसतत विदध-
च्छमयति रोगजालमपि योतिविरोधिमिथ ॥

यो वैद्य करुणामृदुत्वादिगुणेन मनसा मिथ परस्परमतिविरोधि रोगजाल शमयति स किमुत । आमिष भोग्यवस्तु, कृपण क्षुद्र, विशिष्ट कृपणादन्य । तयोरुभयोरपि समादरमुद्वहता । किम्भूतो वैद्य य सदैवातिगुरुबोधि सत्वाना चरित विदधत् ॥

अतिविरोधि रोगजालमित्येतदेवदाह शूलमित्यादिना प्रदर्श्यते ॥

दाह शूल तृडाध्मान क्षुत्क्षामत्वमरोचकम् ।
क प्राकृतो जयेद्रोगान् नित्यमन्योन्यरोधिन ॥

दाहेतिशीता क्रिया शूले सा स्वल्पापि महाविकारकरी । एव तृडादिष्वपि यथायथ विरोधो वाच्य ॥

मया च स एवाग्निवेशादिप्रणीतोर्थराशिः कृत्स्नः सर्वः साधु कृत्वा च दृष्टो निबद्ध । यत पूर्वोदितमविशिष्टमेव वदता न किञ्चिदुदितं भवति । अत्यन्तापूर्वं चोच्यमानं श्रद्धालूना तुष्टिजनन न भवत्यत स एव साधुदृष्टः । यत स्तेषामग्निवेशादीनामर्थराशिः सङ्क्षिप्तमशयितत्वादिदोषयुक्त, अतथाभूतोपि प्रतिभात्यत स एव मया साधु दृष्ट ॥

आयुर्वेदोदधेः पारमपारस्य प्रयाति क ।
विश्वव्याध्यौषधिज्ञानसारस्त्वेषसमुद्धृतः ॥

एष चास्मत्तन्त्रो विश्वस्य जगतो व्याधीनामौषधाना च सार उत्कृष्टो भाग समुद्धृत । कृत्स्नस्य त्वायुर्वेदसागरस्यापारस्यानन्तस्य क पार प्रयाति ॥

स्मृत्वेत्यादिना आत्मतन्त्रस्योपादेयतामाचष्टे ॥

स्मृत्वेदमुदित पूर्वं श्रुत्वेदानीं द्वयो पुन ।
स्मर्तु श्रोतुश्च सुतरा श्रद्धातु कस्य युज्यते ॥

इद चार्थजातमेकेन ब्रह्मादिना स्मृत्वोदित पूर्वकाले चोदितम् । अन्येन त्वस्मदादिना श्रुत्वोदितमुक्त सम्प्रति चोक्तम् । एतयोरुभयो कस्य श्रद्धातु युज्यते । असाक्षात्करत्वे समे चरस्योपरि क पक्षपात । अथवा उभयो श्रद्धातु कस्य युज्यत इति काका येन श्रुत्वेदानीं चोक्त तस्यैव श्रद्धातु युक्त न त्वितरस्य । यस्माद्यथानुभवात्स्थास्मृतिर्दुरुपपादा । कस्यापि कालातिक्रमात् सस्कारभ्रश इति । कण्ठोक्त्या तु सममेवानौद्धत्येन श्रुत भविष्यतीत्यूर्ध्वमेतीत्यादिना प्रदर्श्यते ॥

अथवा श्रुतमप्येतत स्मर्तुरेव क्रमागतम् ।
अभिधातृविशेषेण किं तथापि प्रयोजनम् ॥

अथैव कश्चिदाह यदद्यतनस्य श्रुत तत स्मर्तुरेव सम्बन्धिन क्रमादायातम । तत स्मर्तुर्दोषाभावसूचनात्मया कृतेपि भ्रमादिविनाशव्यापनमेव । एवमा मत एव परमसाधुत्व वर्णित भवतीति । एवमपि भवता कृतेस्मिन्श्लीलादिदोषाशङ्का स्यादित्यत आह अभिधात्रिति । अभिधातृविशेषेण किं प्रयोजन भवति । प्रामाणिकेन ह्यर्थक्रियाभिनिवेष्टव्या ॥

ऊर्ध्वमेति मदन त्रिवृताधो
वस्तुमात्रक इति प्रतिपाद्ये ।
मद्विधो यदि वदेदथवात्रि
कथ्यता क इव कर्मणि भेद ॥

अत्र चोर्ध्वमेति मदनमित्यादौ वस्तुमात्रे प्रतिपाद्ये यदि मद्विधो वदेदथवात्रिर्वदेत् कथ्यता कर्मणि को विशेष ॥

साध्यसाधनविधि विवेकवियुक्तो
लोकपाङ्क्तिकजनप्रत्तिविशेष ।

